॥ श्रीसाम्बसदाशिवोजयति ॥

॥ श्रीगणेशाय नमः ॥

॥ श्रीसरस्वत्यै नमः ॥

माहेश्वरे पुरा सत्रे प्रवृत्ते मुनयस्तदा ॥
यदृच्छयागतंसूतंपैप्पलादंदहि सत्रिणः ॥ १ ॥

वाजश्रवसआहुस्तंसमवेतामहर्षयः ॥
कृष्णाजिनोत्तरासंगाभस्मोद्धूलितविग्रहाः ॥ २ ॥
त्रिपुण्ड्रविलसद्भालरुद्राक्षाङ्गदकङ्कणाः ॥
यज्ञेश्वरंमहारुद्रंपूजयंतोऽध्वरेण ते ॥ ३ ॥
लिङ्गेऽग्निहोत्रे सूर्ये च रुद्रसूक्तजपादराः ॥
पञ्चाक्षरावृत्तिपराः शिवनामपरायणाः ॥ ४ ॥

पञ्चकोशातिगंदेवं पञ्चास्यं परमेश्वरम् ॥
ध्यायंतःपरया भक्त्यातपप्रच्छुरकल्मषाः ॥ ५ ॥
संपूज्यार्घ्यासनैर्भोज्यैः प्रश्रयप्रभभाषणैः ॥
अन्योऽन्यंकुशलमभैः प्रश्रयावनतास्तदा ॥ ६ ॥
तेषांकुलपतिर्वृद्धःप्राहर्समौनिर्भार्गवः ॥

मौनिर्भार्गव उवाच

पैप्पलाद सनाथाःस्मस्त्वदागमनतोवयम् ॥
माहेश्वरंयतःसत्रंप्रवृत्तंपारमेश्वरम् ॥ ७ ॥
त्वंभक्तोऽतीव रुद्रस्य स्कंदनंदीशसन्निभः ॥

जैगीषव्योमुनिः पूर्वमूर्ध्वरेतामहातपाः ॥ ८ ॥

शंकराज्ञाप्रभावेण स्कंदाय प्रोक्तवान्शुभम् ॥
पुण्यंशिवरहस्याख्यमितिहासोत्तमोत्तमम् ॥ ९ ॥

त्रिनेत्रापारचरितंद्वादशांशसमन्वितम् ॥
उपासता त्वया पूर्वमनोवाक्कायकर्मभिः ॥ १० ॥

भक्त्या त्वनन्यया शंभोस्त्वयि यत्प्रोक्तवान्स्वयम् ॥
यस्मिन्ददौ हरःप्रीत्या संस्थितेषु मुनिष्वपि ॥ ११ ॥

द्वादशांशयुतंसाक्षाद्रहस्यंशिवसंभवम् ॥
शिवरत्नमहाकोशंतद्देव्यै हृदयंगमम् ॥ १२ ॥

स्कंदायाचष्ट सा देवी प्रीत्या तेन प्रदर्शितम् ॥
शंकरस्याज्ञया सूते गुरौ ते शांभवोत्तमे ॥ १३ ॥

जैगिषव्याय तत्प्रादात् स्कंदः स्कंदिततारकः ॥
इतिश्रुणुमवृत्तान्तं तन्नोब्रूहि कृपाधिक ॥ १४ ॥

सुगोप्यमपि तद्ब्रूहि यतोभक्तावयंशिवे ॥
त्रिनेत्रसुचरित्राणांपात्रभूतामुनीश्वराः ॥ १५ ॥

माहेश्वरेण सत्रेण शुद्धगात्रावयंसदा ॥
सूत्राममान्ये लोकेपि वांछा नो पातभीतितः ॥ १६ ॥

गात्रे कलत्रे पुत्रे वा मित्रे वा स्नेहवीजता ॥
विरक्ताःस्मस्तदास्मभ्यंरहस्यंशांभवंमुदा ॥ १७ ॥

त्वंभोज्ञानप्रदः साक्षात् गुरुः शिवसमोमतः ॥
त्वंन्नोमातापितास्माकंवद तत्करुणाबलात् ॥ १८ ॥

इत्थंसपैप्पलादोहि सूतःपृष्टोमुनीश्वरैः ॥
उवाच प्रांजलिर्वाक्यंतेषांभक्त्या सुतोषितः॥ १९ ॥

अनन्यशंभुभक्त्या च जानन्पात्रञ्च च तानपि ॥

॥ सूत उवाच ॥

पात्रंभवंतःकृपयामहेशितुः सत्रेण दानैस्तपसोपसद्भिः ॥
पवित्रगात्रावभृथेन दीक्षया वेदांतसारार्थविचारनिष्ठाः ॥२०॥

श्रृणुध्वमाद्यंप्रथमांशमेतत् यथा गुरुर्मे भगवत्प्रसादभाक् ॥
महेश्वरस्याप्रतिमप्रभावोभावोभवोत्कृष्टहृदीक्षिताशः ॥ २१ ॥

जैगीषव्यमुनिस्तततापतपसा रुद्रंजपन् तुष्टधीः
कष्टानप्यसमीक्ष्य संवृतमनावर्षायुतंवायुभुक् ॥
शिष्टार्थः शिपिविष्टपादकमलध्यानैर्विशिष्टांतरो ॥
ब्रह्मिष्ठोहि गरिष्टमद्भुततरंप्राप प्रसादंहरात् ॥ २२ ॥

इतिश्रीशिवरहस्ये प्रथमांशे
सूतमुनिप्रश्ने प्रथमोध्यायः ॥ १ ॥

॥ सूतउवाच ॥

शतमुखशिखिवेदशास्त्रगीतम्
॥ शतमखनुतपण्मुखासवंतुम् ॥
नभशिखसुखदंमहेभवक्त्रम्
खगगतिपङ्कजजातसंस्तुन्तन्तम् ॥ १ ॥

उत्फुल्लामलनीरनीरजमहासिंहासनाध्यासिता
पारावारजगद्विबोधचतुरा वाणी मनोहारिणी ॥
भोः शंभो शिव साम्ब शङ्कर महादेवेतितान्तामृत
स्वानास्वादनवल्लकीमुखरितानन्दोल्लसा, पातु नः ॥ २॥

पापागाधमहाम्बुधेर्जनिजराकल्लोलपारम्परी
मज्जज्जन्तुकदम्बके करुणया पारंपरंयोयुतः ॥
शंभोःसत्कथया सुधासुरसया सन्नौकया केवलम् ।
संतीर्णंनु करोति जन्तुनिवहंस्वंकर्णधारोगुरुः ॥ ३ ॥

कालावच्छेदयुक्तान् विधिहरमुरभिच्छकसूर्येन्दुवायून्
स्टष्ट्वा तैःक्रीडतीशोजगदुदरदरीमध्यपद्मैकसंस्थः ॥
नीरूपोविश्वरूपः प्रमथगणवरैर्विश्वकर्त्र्या जनन्या
हेरम्बस्कन्दयुक्तोगुरुरमरवरः पावकः पातु नित्यम् ॥४॥

*पञ्चास्यवक्त्रकमले मकरन्दमेतत्
पञ्चत्वनाशनकरंश्रुतिपञ्चकंहि ॥
पुण्यंशैवरहस्यसारमधुना पेपीयतांमुक्तये
पञ्चास्यध्यानपूताद्विजवरतिलकाःपञ्चपापैर्विहीनाः॥५

वेदेषु प्रचितञ्च पञ्चकतया भूतेषु पञ्चस्वपि
कोशे पञ्चकतान्तिमैकवसतेःशंभोःकृपाकारणम् ॥
श्रुत्वा जन्मजरादिदुःखनिवहैःपञ्चत्वहीनोभवेत्
स्वस्यास्यान्तरवर्त्तिपायसवरंत्यक्त्वाखुमूत्रंपिवेत्॥६॥

दुर्मायालसितेन पापमतिभागायात्यहोसंसृतिम्
त्यक्त्वा शङ्करनामबोधितकथापीयूषपानोज्झितः ॥
शंभोर्भक्तिविवर्जितोनरपशुःश्वत्वेनतुल्यःस्मृतः
कामक्रोधजराविपत्तिमरणैःकष्टंव्रजेद्दुःखितः ॥ ६ ॥*

## मुनयऊचुः

सकथन्तपसा देवंप्रसाद्य परमेश्वरम् ॥
जैगीषव्यस्तव गुरुस्तपोराशिःशिवार्च्चकः ॥ ७ ॥

कंकाममलभत्सूत तन्नोविस्तरतोवद ॥
श्रोतुमिच्छाऽस्ति महती चरित्रे शाम्भवे हि नः ॥८॥

---

* एतस्मिश्लोके वृत्त इयुन दोषाय, अथम्यार्षत्वात् ॥
* पुस्तके षष्ठ श्लोकस्य तथा सप्तम श्लोकस्य एक एवाङ्कः सएवात्र स्थापित ॥

यदाथ करुणामूर्तेः शूलिनोऽमलसत्कथाः ॥
भवाजश्रवसांवाक्याल्लहर्ष परमेश्वरम् ॥ ९ ॥
ध्यात्वा स्वहृत्पद्मकोशे जगादागाधबोधदाम् ॥
कथांकलुषचितानान्तमःकलुषमुक्तये ॥ १० ॥

॥ सूत उवाच ॥

वायुर्दोधूयते यदुदयमुडुगणो बिभृते वै द्रुतंखे
वन्हिर्ज्वालयते यत्ससलिलनिधिः माधवींदोधवीति ॥
भूर्यद्वावोभवीतिस्थिरचरधृतयातच्चतादृक्चसर्वम्
स्वायत्ताशेषसत्ता स्थितियमनपरं शम्भुलीलोत्थमुक्तम्॥११॥

शृणुध्वंमुनयःसर्वे सत्रिणःपूतमानसाः ॥
जैगीषव्यतपश्चर्याकारणंतारणंनृणाम् ॥१२ ॥
सतपोऽतपदत्युग्रंशाम्भवंव्रतमास्थितः॥
हिमवच्छिखरे पूर्णसंवत्सरशताष्टकम् ॥ १३ ॥

अग्निरित्यादिभिर्मन्त्रैर्विमृज्याङ्गानि भस्मना ॥
त्रिपुण्ड्रभालसततंकण्ठवक्षोरुबाहुषु ॥ १४ ॥

धृतरुद्राक्षकोरौद्र रुद्रस्य कवचावृतः ॥
पञ्चाक्षरपरोनित्यंरुद्रावर्त्तनतत्परः ॥ १५ ॥

ग्रीष्मे पञ्चाग्निनिरतःकेवलंसलिलाशनः ॥
वर्षास्वाकाशनिलयोहेमन्ते जलमध्यगः ॥ १६

फलपर्णाशनोनित्यंवर्षंपवनपारणः ॥
कटधूमाशनोवर्षंवर्षंलम्बदधःशिराः ॥ १७ ॥

एवंतपस्यतस्तस्य जैगीषव्यमहामुनेः ॥
वर्षायुतमगात्तीव्रंरुद्रविन्यस्तचेतसः ॥ १८ ॥

वरेणाछन्दयन्ब्रह्मा तंविष्णुः पाकशासनः॥
तस्य ते चित्तजिज्ञासांकर्त्तुंदेवाव्यवस्थिताः॥ १९ ॥

ताननालोकयद्विप्रोनैव किञ्चिदथोऽर्थयन् ॥
गम्भीरसागराकारमलक्षन् शिववल्लभम् ॥ २० ॥

जितेन्द्रियंजिताहारमूर्द्धरेतसमव्ययम्
शिवालिङ्गार्चनव्यग्रंपञ्चाक्षरजपादरम्
रुद्रसूक्तार्थविज्ञानप्रवीणंसंय्यतेन्द्रियम् ॥
हंसारूढःपद्मसंस्थःशार्ङ्गधृग्गरुडासनः ॥ २२ ॥

ऐरावतसमारूढःपाकशास्तामरैर्वृत्तः ॥
तस्य चित्तंसुविज्ञातुमागतास्ते मुनिंतदा ॥ २३ ॥

ब्रह्मा विष्णुस्तथा शक्रःसुरासुरमरुद्गणाः ॥
ध्यायन्तंपरमेशानंजैगीषव्यंहृदा द्विजाः ॥ २४ ॥

स्वंस्वं वाहनमारुह्य स्वस्वाङ्कारभूषिताः ॥
शैवेन्द्रंतं सुरन्द्रास्ते दृष्ट्वा विस्मयमागताः ॥ २५ ॥

तस्य चित्तपरीक्षार्थंब्रह्मा वाक्यमथाब्रवीत् ॥ २६ ॥

## ब्रह्मोवाच

वत्सोत्तिष्ठ महाभाग जैगीषव्य महाव्रत ॥
अदेयंतवनास्त्येव त्रिलोक्यांच तपस्यया ॥ २७ ॥

त्वत्समोन मुनिर्ब्रह्मन्नुर्द्धरेता महातपाः॥
रुद्रावर्त्तनशीलश्च रुद्रविन्यस्तमानसः ॥ २८ ॥

ब्रह्मोपेन्द्रेन्द्रलोकेषु विहरस्वाजरामरः ॥
भुङ्क्ष्व भोगान्यथाकामंदेवभोगाननुत्तमान् ॥ २९ ॥

शक्रस्थानेऽप्सरोभिस्त्वंनन्दने विहराऽजरः ॥
पिवस्वामृतमुत्कृष्टंदेवैःपेयमनुत्तमम् ॥ ३० ॥

विष्णुलोके तथा भोगान् वैष्णवान् भुङ्क्ष्वकेवलम् ॥
नानाविधैर्महायज्ञैःप्राप्यशक्रसदोऽखिलैः ॥ ३१ ॥

गवांदानैस्तथान्नादिप्रदानैःषड्सान्वितैः ॥
देशेकाले च पात्रे च ग्रहवस्त्रादिदानतः ॥ ३२ ॥

पठनीयशालानिवहैर्धर्मकाले मुनीश्वर ॥
महाषोडशदानैश्च शुद्धद्रव्यार्ज्जितेन च ॥ ३३ ॥

मण्डपाट्टालकरणैर्विप्राणांस्थापनार्च्चनैः ॥
उद्यानारामकरणैश्च्छायावृक्षादिरोपणैः ॥ ३४ ॥

कन्यादानैश्चविविधैर्व्रतकृच्छ्रादिभिर्द्विज ॥
प्राप्यालोकामदीयाश्चधन्यैर्मानुष्यवर्त्तिभिः ॥ ३५ ॥

तेनूत्सवेन भोगांस्त्वं भुङ्क्ष्वविप्र यथासुखम् ॥
अयंशक्रोऽमरावीशोवरंदातुंतवागतः ॥ ३६ ॥

करीन्द्रोयस्य वहने चतुर्दन्तःसुपाण्डुरः ॥
यःसर्वयज्ञे विप्रेन्द्रैराहूतःसोमपीथिभिः ॥ ३७ ॥

यःसर्वासुरसंहर्ता कुलिशंयस्य चायुधम् ॥
अहंसर्वजगत्स्रष्टा भारतीपतिरुत्तमः ॥ ३८ ॥

मत्पुत्राःसृष्टिकर्त्तारोन कश्चिन्मत्समोद्विज ॥
पुलस्त्यःपुलहोऽत्रिश्च कश्यपोमनुरेव च ॥ ३९ ॥

अङ्गिरानारदोदक्षोवीतिहोत्रोमहामुनिः ॥
नवप्रजानांपतयोयेभ्यःसृष्टिर्विनिर्गता ॥ ४० ॥

॥ विष्णुरुवाच ॥

अहमेवाखिलाराध्यःशंखचक्रगदावरः ॥
मम शार्ङ्गरवंश्रुत्वा दैत्येन्द्रामूर्च्छिताभृशम् ॥ ४१ ॥

सिंहकोलाकृतिरहंभूत्वा देवानतोषयम् ॥
हिरण्याक्षंच कशिपुंमुरंच मधुकैटभौ ॥ ४२ ॥

रणे मया हतादैत्यारावणाद्या महाबलाः
लक्ष्मीपतिरहं साक्षात् क्षीराब्धिर्निलयोमम ॥४३॥

शेषोऽनन्तफणामौलिर्ममतल्पंमहामुने ॥
प्रभाभासितदिक्कुञ्जं कौस्तुभंमम वक्षगम् ॥ ४४ ॥

चक्रंशतदशारंमे दैत्यासृङ्मसृणंकरे ॥
यत्पक्षाघातपवनैरुल्लोलाःसप्तसागराः ॥ ४५ ॥

काद्रवेयफणारत्नराजिधारोहि वाहनम् ॥
मन्नाभिकञ्जसम्भूतःसाक्षाल्लोकपितामहः ॥ ४६ ॥

मदीययशसा व्याप्तंजगदेतच्चराचरम् ॥
मत्प्रसादेन सर्वेषांसिध्यन्त्यखिलसिद्धयः ॥ ४७ ॥

तादृशंस्वदृशापश्य त्वत्पुरःस्थितमाशुमाम् ॥
त्वत्कामान्पूरयाम्याशु तच्छीघ्रंवरयस्व मे ॥ ४८ ॥

त्वदीयतपसा विद्वन् प्रसादसुमुखोऽस्म्यहम् ॥
तदासविष्णुवचसा जैगीषव्योमहामुनिः ॥ ४९ ॥

दृष्ट्वा प्राहामरश्रेष्ठान्निष्कामान्तरसुन्दरः ॥
कामादिध्याननिर्धूतनिष्कामहृदयोमुनिः ॥ ५० ॥

॥ जैगीषव्य उवाच ॥

यत्प्रोक्तन्तत्तथा विष्णोत्वया पद्मासनेन च ॥
शक्रस्यास्य श्रुतंसर्वमैश्वर्यंलोकविस्मयम् ॥ ५१ ॥

नविस्मापयितुंशक्यं निष्कामस्य ममान्तरम् ॥
यथोन्मूलयितुंशक्यःकिंमेरुर्वायुनाऽमुना ॥ ५२ ॥

विष्णो त्वद्वचसा चेतोन विचालयते मम ॥
कैवर्त्तकन्याकानीनद्विजदैत्यनृपार्भ्भकाः ॥ ५३ ॥

त एव ते महासर्वेऽवतारानात्रसंशयः ॥
हरपादाम्बुजध्याननिर्द्धूतरजसोवयम् ॥ ५४ ॥

शैवन्द्रेषु न ते धार्ष्ट्यंविद्यते तु गदाधर ॥
प्राप्तकामावयंविष्णो नित्यानित्यविवेकिनः ॥ ५५ ॥

यःकामाननुसन्दधाति मनसा प्राप्नोति लोकानमून्
ब्रह्मोपेन्द्रशतक्रतुप्रभृतिनांवा सस्ततोभ्रश्यति ॥
प्राग्जन्मानुभवेन योनिषु चिरंभ्रान्तस्ततोऽविद्यया
विश्वेशस्य कृपावशाच्छततनुमान्ते विमुक्तोभवेत् ॥ ५६ ॥

किंवा ब्रह्मेन्द्रविष्णुप्रभृतिसुरपदैःपुण्यरेऽशैकलभ्यैः
किंरम्भादिकयोनिभोगानिचयैःस्त्रक्चन्दनाद्युत्सवैः ॥
पातान्तावधिसुन्दरैःकिमथमे किंकामनाविश्रुतैः
युष्मद्रोचनया नचालयति मनोनिष्कामजाःश्रोत्रियाः ॥५७॥

संसारापारसारप्रचुरितमनसोनित्यनेयाश्चभोगाः
काम्यन्ते कामिभिर्ये सततवहुरसाःकातराःपामरास्ते ॥
हरपदनिरतानांविश्वभूतात्मनांनः
करणविषयभोगानैवलुम्पन्ति विष्णो ॥ ५८ ॥

ब्रह्मा, शक्रोभवाञ्च प्रकृतिपरवशायस्य सर्वेश्वरस्य
प्रभुवरवरदानींक मम प्राप्तिहेतु ॥
पशुपतिचरणाब्जध्यानसन्मानसंमे
नहिखलुभवतृष्णापारदूरंहरेऽद्य ॥ ५९ ॥

त्र्यक्षांघ्रिप्रवणप्रसन्नमनसो लुक्ष्यस्य किंमे सुरै
र्लक्ष्यीभूतभवत्पदेषु नितरांवांछा न मे जायते ॥
कितन्नाक्षत वीक्षणात्स्थिरचिरंविश्वंतु विश्वेश्वरा
ज्ञातंतत्र मुहुर्मुहुःप्रविलयंयात्येवयातंभवेत् ॥ ६० ॥

रज्जौ कल्पितदन्दशूकसदृशंदेवान किञ्चिज्जग
ज्ज्ञातंचापिजनिष्यमाणमपि वा भूतं हि रज्जौ भ्रमः॥
तद्वत्सर्पदशोपमानतिति या धीर्वैं परंमुक्तये
साधीश्चापिनिरन्तरंभगवतःशम्भोःकृपायाःफलम्६१

न क्वापि स्पृहयन्ति शङ्करकथापीयूषपानात् परं
लिङ्गालिङ्गनपूतभस्मनिटिलारुद्राक्षमालाधराः ॥
पुण्यश्रीतरुरुद्रमध्यविलसन्नाम्नांपदार्थादरा
भावाभावुकदिव्यजन्मतपसा भूमण्डलेपावनाः॥६२॥

मारापारशराग्रकुण्ठनमहासारैकधारोपलाः
सारासारविचारधीरहृदयाधौरेयधुर्य्याःसदा ॥
पारावारविकारसंसृतिमहादुःखाम्बुधेस्तारका
विश्वाधीश्वरपूजकाःस्तुतिपराःपापौघसंहारकाः॥६३॥

विष्णो त्वद्वचसा चेतोन विचाल्यते मम ॥
कैवर्त्तकन्याकानीनद्विजदैत्यनृपार्भकाः ॥ ५३ ॥

त एव ते महासर्वेऽवतारानात्रसंशयः ॥
हरपादाम्बुजध्याननिर्धूतरजसोवयम् ॥ ५४ ॥

शैवन्द्रेषु न ते धार्ष्ट्यंवियते तु गदाधर ॥
प्राप्तकामावयंविष्णो नित्यानित्यविवेकिनः ॥ ५५ ॥

यःकामाननुसन्दधाति मनसा प्राप्नोति लोकानमून्
ब्रह्मोपेन्द्रशतक्रतुप्रभृतिनांवा सस्ततोभ्रश्यति ॥
प्राग्जन्मानुभवेन योनिषु चिरंभ्रान्तस्ततोऽविद्यया
विश्वेशस्य कृपावशाच्छततनुप्रान्ते विमुक्तोभवेत् ॥ ५६ ॥

किंवा ब्रह्मेन्द्रविष्णुप्रभृतिसुरपदैःपुण्यरेशैकलभ्यैः
किंरम्भादिकयोनिभोगनिचयैःस्रक्चन्दनाद्युत्सवैः ॥
पातान्तावधिसुन्दरैःकिमथमे किंकामनाविश्रुतैः
पुम्प्रोचनपा नचाल्पति मनोनिष्कामजाःश्रोत्रियाः ॥५७॥

संसारापारसारप्रचुरितमनसोनित्यनेयाश्वभोगाः
काम्यन्ते कामिभिर्ये सततवहुरसाःकातराःपामरास्ते ॥
हरपदनिरतानांविश्वभूतात्मनांनः
करणविषयभोगानैवलुम्पन्ति विष्णो ॥ ५८ ॥

ब्रह्मा, शक्रोभवाञ्श्च प्रकृतिपरवशायस्य सर्वेश्वरस्य
प्रभुवरवरदानात्किं मम प्रीतिहेतु ॥
पशुपतिचरणाब्जध्यानसन्मानसंमे
नहिखलुभवतृष्णापारदूरंहरेऽद्य ॥ ५९ ॥

त्र्यक्षांघ्रिप्रवणप्रसन्नमनसो लुब्धस्य किंमे सुरै
र्लक्ष्यीभूतभवत्पदेषु नितरांवांछा न मे जायते ॥
किंतत्राक्षत वीक्षणात्स्थिरचिरंविश्वंतु विश्वेश्वरा
ज्जातंतत्र मुहुर्मुहुःप्रविलयंयात्येवयातंभवेत् ॥ ६० ॥

रज्जौ कल्पितदन्दशूकसदृशंदेवान किञ्चिज्जग
ज्जातंचापिजनिष्यमाणमपि वा भूतं हि रज्जौ भ्रमः॥
तद्वत्सर्पदशोपमानतिति या धीर्वै परंमुक्तये
साधीश्चापिनिरन्तरंभगवतःशम्भोःकृपायाःफलम् ६१

न क्वापि स्पृहयन्ति शङ्करकथापीयूषपानात् परं
लिङ्गालिङ्गनपूतभस्मनिटिलारुद्राक्षमालाधराः ॥
पुण्यश्रीतरुरुद्रमध्यविलसन्नाम्नांपदार्थादरा
भावाभावुकदिव्यजन्मतपसा भूमण्डलेपावनाः॥६२॥

मारापारशराग्रकुण्ठनमहासारैकधारोपलाः
सारासारविचारधीरहृदयाधौरेयधुर्याःसदा ॥
पारावारविकारसंसृतिमहादुःखाम्बुधेस्तारका
विश्वाधीश्वरपूजकाःस्तुतिपराःपापौघसंहारकाः॥६३॥

॥ सूत उवाच ॥

जैगीषव्यमुखाब्जनिःसृतमहोदारोत्कटंते मधु
पीत्वा-चामरनायकामधुतृपा स्वानन्दितस्वान्तराः ॥
ऊचुःप्राञ्जलयस्तदानिजवरं ब्रह्मामहेन्द्रोहरि
र्ज्ञात्वा तस्य विनिश्चयंशिवसमासक्तंमनश्चापिते॥६४॥

देवाऊचुः

प्राप्तेशानपदाम्बुजोत्थसुमनामोदात्तसन्मानसः
त्वंवै शाम्भवपुङ्गवस्तव हृदंज्ञातुंप्रवृत्ताःसुराः ॥
निष्कामोऽसि निरङ्कुशोसि भगवन् प्रोक्तंहितत्क्षम्यतां
स्वात्मारामतयात्वयैव सकलाभोगाःसदैवोज्झिताः६५

स्वंस्वंवाहनमाधिरुह्य च मुनिंचालिङ्ग्यलिङ्गार्चकं
धन्याःस्मेति वदन्ति सुन्दरगिरा प्यानन्दधारावृताः ॥
संश्रुत्वापिविनिश्चयंहरकथापीयूषपानेरतं
शैवोक्तामृतवाक्यनन्दितमनःशान्तामुदातेद्विजाः६६

इतिश्रीशिवरहस्ये प्रथमांशे जैगीषव्यसुरसंवादो
नाम द्वितीयोऽध्यायः ॥ २ ॥

## ॥ जैगीषव्य उवाच ॥

शृणुध्वंशक्रविष्णोऽज यन्मानसमहोत्सवम् ॥
नित्यंसार्वज्ञता तस्य शूलिनःपरमात्मनः ॥ १ ॥

योवेदान्तैक संवेद्योयंध्यायन्ति मुमुक्षवः ॥
यस्यनिश्वासपवनावेदाश्चत्वारएव हि ॥ २ ॥

योब्रह्मविष्णुरुद्राणां जनकःपरमेश्वरः॥
सूर्य्यस्य जनितावन्हेःसर्पशक्रानिलात्मनाम् ॥ ३ ॥

न यस्य कारणं शम्भोः ससर्व्वस्यापि कारणम् ॥
यःसमाराध्यते विप्रैर्मखमंत्रक्रियादिभिः ॥ ४ ॥

यस्त्वग्नीषोमजंसर्व्वंजगत्पाति सनातनः ॥
असङ्गःसर्व्वभूतेषु निर्व्विकारोविकारिषु ॥ ५ ॥

यंसूक्ष्मवुध्या पश्यन्ति योगिनोनैव रागिणः ॥
योध्यानेन जपैर्यज्ञैस्तपसाऽनाशकेन च ॥ ६ ॥

सवेत्ति वेद्यानक्षाणि मनोवाचामगोचरः ॥
यस्माद्भूतानि जायन्ते येन जीवन्ति तान्यपि ॥७ ॥

यत्र लीनानि कल्पन्ते सएकःपरमेश्वरः ॥
यस्त्वपाणिरनाङ्घ्रिश्च अचक्षुश्चाप्यथाश्रवाः ॥ ८ ॥

६।

सोन्तिके सहि दूरस्थःसबाह्याभ्यतरेपि च ॥
ससत्यज्ञानमानन्दोगुणैर्हीनश्च निर्गुणः ॥ ९ ॥

यःस्वतन्त्रश्च पूर्णश्च तेन पूर्णमिदंजगत् ॥
सनित्यश्चेतनानांच पतीनांपतिरीश्वरः ॥ १० ॥

यस्त्वेकःसृजतीशानश्चराचरमिदंजगत् ॥
यथोर्णनाभिस्तन्तून्वै सृजते ग्रसतेऽपिच ॥ ११ ॥

यस्य रूपापरिज्ञानाद्देहमात्मेति मन्यते
यस्य रूपापरिज्ञानान्मन आत्मेति मन्यते ॥ १२ ॥

यस्य रूपापरिज्ञानात्खानि चात्मेति मन्यते ॥
यस्य रूपा परिज्ञानाद्भूतान्यात्मेति मन्यते ॥ १३ ॥

यस्य रूपापरिज्ञानात्सर्वमात्मेति मन्यते ॥
यस्याकाशःस्वरूपं हि आकाशोनैव वेत्ति तम् ॥१४॥

यस्य भूमिः स्वरूपंहि तंभूमिर्नैव वेत्ति हि ॥
योमनश्चक्षुरादीनांनियन्ता परमेश्वरः ॥ १५॥

यस्य भासा जगद्भाति सशक्रानलवायवः ॥
भीत्या भान्तिचवोन्त्येव चेतनानांसचेतनः ॥ १६॥

यस्य मायाविलसितंजगत्स्थावरजङ्गमम् ॥
समायीपरमेशानस्तेन वास्यमिदंजगत् ॥ १७ ॥

ब्रह्मा, शक्रोभवाञ्श्च प्रकृतिपरवशायस्य सर्वेश्वरस्य
प्र भुवरवरदानांस्कि मम प्राप्तिहेतु ॥
पशुपतिचरणाब्जध्यानसन्मानसंमे
नहिखलुभवतृष्णापारदूरंहरेऽद्य ॥ ५९ ॥

त्र्यक्षांघ्रिप्रवणप्रसन्नमनसो लुक्ष्यस्य किंमे सुरै
र्लक्ष्यीभूतभवत्पदेतु नितरांवांछा न मे जायते ॥
किंतञ्चाक्षत वीक्षणात्स्थिराचिरंविश्वंतु विश्वेश्वरा
ज्ज्ञातंतत्र मुहुर्मुहुःप्रविलयंयात्येवयातंभवेत् ॥ ६० ॥

रज्जौ कल्पितदन्दशूकसदृशंदेवान किञ्चिज्जग
ज्ज्ञातंचापिजनिष्यमाणमपि वा भूतं हि रज्जौ भ्रमः॥
तद्वत्सर्पदशोपमानतिति या धीर्वै परंमुक्तये
साधीश्चापिनिरन्तरंभगवतःशम्भोःकृपायाःफलम् ६१

न क्वापि स्पृहयन्ति शङ्करकथापीयूषपानात् परं
लिङ्गालिङ्गनपूतभस्मनिटिलारुद्राक्षमालाधराः ॥
पुण्यश्रीतरुद्रुमध्यविलसन्नाम्नांपदार्थादरा
भावाभावुकदिव्यजन्मतपसा भूमण्डलेपावनाः॥६२॥

मारापारशराग्रकुण्ठनमहासारैकधारोपलाः
सारासारविचारधीरहृदयाधौरेयधुर्याःसदा ॥
पारावारविकारसंसृतिमहादुःखाम्बुधेस्तारका
विश्वाधीश्वरपूजकाःस्तुतिपराःपापौघसंहारकाः॥६३॥

॥ सूत उवाच ॥

नैगीषव्यमुखाब्जनिःसृतमहोदारोत्कटं ते मधु
पीत्वा-चामरनायकामधुतृषा स्वानन्दितस्वान्तराः ॥
ऊचुःप्राञ्जलयस्तदानिजवरं ब्रह्मामहेन्द्रोहरि
ज्ञात्वा तस्य विनिश्चयं शिवसमासक्तंमनश्चापिते॥६४॥

देवाऊचुः

प्रातेशानपदाम्बुजोत्थसुमनामोदाप्तसन्मानरतः
त्वंवै शाम्भवपुङ्गवस्तव हृदंज्ञातुंप्रवृत्ताःसुराः ॥
निष्कामोऽसि निरङ्कुशोसि भगवन् प्रोक्तंहितत्क्षम्यतां
स्वात्मारामतयात्वयैव सकलाभोगाःसदैवोज्झिताः६५

स्वंस्वंवाहनमाधिरुह्य च मुनिंचालिङ्ग्यलिङ्गार्चकं
धन्याःस्मेति वदन्ति सुन्दरगिरा प्यानन्दधारावृताः ॥
तंश्रुत्वापियिनिश्चयंहरकथापीयूषपानेरतं
शैवोक्तामृतवाक्यनन्दितमनःशान्तामुदातेद्विजाः६६

इतिश्रीशिवरहस्ये प्रथमांशे जैगीषव्यसुरसंवादो
नाम द्वितीयोऽध्यायः ॥ २ ॥

---

## ॥ जैगीषव्य उवाच ॥

शृणुध्वंशक्रविष्णोऽज यन्मानसमहोत्सवम् ॥
नित्यंसार्वज्ञता तस्य शूलिनःपरमात्मनः ॥ १ ॥

योवेदान्तैक संवेद्योयंध्यायन्ति मुमुक्षवः ॥
यस्यनिश्वासपवनावेदाश्चत्वारएव हि ॥ २ ॥

योब्रह्मविष्णुरुद्राणां जनकःपरमेश्वरः ॥
सूर्य्यस्य जनितावन्हेःसर्पशक्रानिलात्मनाम् ॥ ३ ॥

न यस्य कारणं शम्भोः ससर्वस्यापि कारणम् ॥
यःसमाराध्यते विप्रैर्मखमंत्रक्रियादिभिः ॥ ४ ॥

यस्त्वम्नीषोमजंसर्वंजगत्पाति सनातनः ॥
असङ्गःसर्वभूतेषु निर्विकारोविकारिषु ॥ ५ ॥

यंसूक्ष्मबुध्या पश्यन्ति योगिनोनैव रागिणः ॥
योध्यानेन जपैर्यज्ञैस्तपसाऽनाशकेन च ॥ ६ ॥

सवेत्ति वेद्यानक्षाणि मनोवाचामगोचरः ॥
यस्माद्भूतानि जायन्ते येन जीवन्ति तान्यपि ॥७ ॥

यत्र लीनानि कल्पन्ते सएकःपरमेश्वरः ॥
यस्त्वपाणिरनाङ्घ्रिश्च अचक्षुश्चाप्यथाश्रवाः ॥ ८ ॥

सोन्तिके सहि दूरस्थःसवाह्याभ्यतरेपि च ॥
ससत्यज्ञानमानन्दोगुणैर्हीनश्च निर्गुणः ॥ ९ ॥

यःस्वतन्त्रश्च पूर्णश्च तेन पूर्णमिदंजगत् ॥
सनित्यःश्चेतनानांच पतीनांपतिरीश्वरः ॥ १० ॥

यस्त्वेकःसृजतीशानश्चराचरमिदंजगत् ॥
यथोर्णनाभिस्तन्तून्वै सृजते ग्रसतेऽपिच ॥ ११ ॥

यस्य रूपापरिज्ञानोद्देहमात्मेति मन्यते
यस्य रूपापरिज्ञानान्मन आत्मेति मन्यते ॥ १२ ॥

यस्य रूपापरिज्ञानात्स्वानि चात्मेति मन्यते ॥
यस्य रूपा परिज्ञानाद्भूतान्यात्मेति मन्यते ॥ १३ ॥

यस्य रूपापरिज्ञानात्सर्वमात्मेति मन्यते ॥
यस्याकाशःस्वरूपं हि आकाशोनैव वेत्ति तम् ॥१४॥

यस्य भूमिः स्वरूपंहि तंभूमिर्नैव वेत्ति हि ॥
योमनश्चक्षुरादीनांनियन्ता परमेश्वरः ॥ १५॥

यस्य भासा जगद्भाति सशक्रानलवायवः ॥
भीत्या भ्रान्तिचवोन्त्येव चेतनानांसचेतनः ॥ १६॥

यस्य मायाविलसितंजगत्स्थावरजङ्गमम् ॥
समायीपरमेशानस्तेन वास्यमिदंजगत् ॥ १७ ॥

योऽशरीरोह्यलिङ्गश्च यमिभिःपरिदृश्यते ॥
यस्य विज्ञानमात्रेण सर्व्वंविज्ञातमेवहि ॥ १८ ॥

ज्ञानमात्मा महद्ब्रह्म ज्ञातःशान्तिरनुत्तमा ॥
सएकःपरमात्माहि नेह नानास्ति किञ्चन ॥ १९ ॥

सएकोजालवानीश ईशानीभिः सईशते ॥
एकएव महान्रुद्रः पुरुषो विश्वतोमुखः ॥ २० ॥

तमेकंजानथाऽत्मानं त्यक्त्वान्यत्तादिदंजगत् ॥
यद्ज्ञानात्धृदयग्रन्थिभेदनं जायते नृणाम् ॥ २१ ॥

यस्यैकत्वंहि विज्ञाय शोकं तरति मानवः ॥
सएव ज्योतिषां ज्योतिःसएव तपसां तपः ॥ २२ ॥

सएकःसर्व भूतेषु बहुधा भाति मायया ॥
योजाग्रत्स्वप्नसुप्तिस्थैर्गूढोत्मा न प्रकाशते ॥ २३॥

योदृश्यः सूक्ष्मया बुध्या तत्प्रसादेन केवलम् ॥
तपसा वेदितव्यःस नान्यथा कर्म्मकारिभिः ॥ २४ ॥

योवेदादौ स्वरःप्रोक्तो वेदान्तेषु प्रतिष्ठितः ॥
यईशानोऽधिविद्यानां पारदृश्वा सनातनः ॥ २५ ॥

योभूतसंघे सुप्तेऽपि जागर्तीशो महेश्वर ः ॥
यस्मात्प्राणो मनो जज्ञे स हिनस्ति विवेकतः ॥२६॥

योज्योतिर्ज्योतिषां देवोविश्वात्मा विश्वतोमुखः ॥
योभूमिमन्यतिष्ठच्च यस्माद्ब्रह्माणि जज्ञिरे ॥२७॥

यतोब्रह्मेशविष्णवीन्द्राःसहदेवैश्च जज्ञिरे ॥
योब्रह्म ब्रह्मविच्चापि अत्र ब्रह्मसमश्नुते ॥ २८ ॥

एषब्रह्मैषविष्णुश्च एषदेवोविराजते ॥
एषभूतपतिर्देवो एषसेतुर्विधारणः ॥ २९ ॥

एकमेव महादेवमिन्द्रमित्रादिभिःसुरैः ॥
नानारूपगुणैश्चैव मायया मन्यते जनः ॥ ३० ॥

इदंजगत्पुरा सृष्ट्वा तस्मिन्प्राविशदीश्वरः ॥
व्याकुर्वन्नामरूपे तु व्यवहारीव भासते ॥ ३१ ॥

पुरुषोयःपरःसूक्ष्मोभोक्ता भोज्यंच यःसदा ॥
योऽखिलोविश्वनेता च यस्मान्नान्यत्परायणम् ॥३२॥

अशरीरोऽव्ययात्मा यश्चाशीर्णोह्यविनाशक ॥
योमायया शरीरस्थस्तद्दोषैर्नैव लिप्यते ॥ ३३ ॥

भोगीव भासते देवोह्यन्नपानादिभोगभाक् ॥
यश्चसर्वेन्द्रियातीतःसर्वेषामपि भासकः ॥ ३४ ॥

योऽव्ययोव्यक्ततामेत्य जगत्पुष्णाति लीलया ॥
योऽविद्यया संसरति विद्यया च प्रमुच्यते ॥ ३५ ॥

योऽनाधारोऽखिलाधारःस्वे महिम्नि प्रतिष्ठितः ॥
यंशृण्वतोपि वेदान्तैर्मुह्यन्ति यतयःसुराः ॥ ३६ ॥

यस्त्वैनंवृणुते देवास्तस्यैवात्मा प्रकाशते ॥
यआत्मासर्वभूतस्थोजडानांविदुषामपि ॥ ३७ ॥

योजगज्जन्ममरणैरशीर्य्योनहि शीर्य्यते ॥
योऽजागतैर्दुःखसङ्घैः सुखैर्वा स्पृश्यते न हि ॥ ३८ ॥

यस्मिन्ज्ञातेखिलं ज्ञातं नकिञ्चिदवशिष्यते ॥
यमविज्ञाय विश्वेशं दुःखान्तं नाधिगच्छति ॥ ३९ ॥

योऽसङ्गःपुरुषोनित्यःस्थाणुवन्निश्चलोऽगुणः ॥
योनजीवःशिवश्चापिअन्योपाधिविवर्जितः ॥ ४० ॥

पञ्चकोशातिगोह्यात्मा सदानन्दघनःसुखः ॥
एकोद्वितीयस्तृतीयोनवैसवहुधाविभुः ॥ ४१ ॥

योऽन्तिके सहि दूरस्थस्तेन वास्यमिदं सुराः ॥
सभूमा परमानन्द आत्मैमेतज्जगत्सुरा ॥ ४२ ॥

तज्जं तल्लं च तद्रूपं जगदेत्प्रकाशते ॥
यस्तमःपारगोनित्यं मनोवाचामगोचरः ॥ ४३ ॥

यस्यैव शक्तिर्विविधा स्वभावादज्ञानदा सुराः ॥
सएषपरमानन्दःसदसत्पथवर्जितः ॥ ४४ ॥

लिङ्गहीनःसदासङ्गोयोवेदान्तैकगोचरः ॥
दृश्यते त्वग्रया बुद्धया सूक्ष्मया सूक्ष्मदर्शिभिः॥४५॥

मुक्तये देहसङ्घानांसुलभोव्यक्ततांगत ॥
त्रिनेत्रोनीलकण्ठश्चउमादेहार्द्धविग्रह ॥ ४६॥

क्रीडायै ममताधीशो हेरम्बस्कन्दपुत्रवान् ॥
सर्व्वावासोऽपि भगवान्कैलासाचलमास्थित ॥४७॥

यस्य लिङ्गार्च्चनेनैव त्रैलोक्यश्रीरवाप्यते ॥
यस्य प्रसादाद्विष्णोवै त्वया प्राप्तंसुदर्शनम् ॥ ४८ ॥

ब्रह्मणःसृष्टिसामर्थ्यमिन्द्रस्याप्यरिनिग्रह ॥
देवराज्यंभोगभोग्यं सर्व्वमैशादनुग्रहात् ॥ ४९ ॥

न तत्र सूर्य्योदेवेशोभाति चन्द्रोन चाऽनलः ॥
भीत्या भान्तिच सर्व्वेऽपि सोऽन्तरःपुरुषोहर ॥५०॥

हिरण्यबाहुरीशानो हिरण्यपतिरीश्वर ॥
कर्म्मदेवाःसर्व्वएव ब्रह्मविष्णुमहेश्वरा ॥ ५१ ॥

यस्याज्ञावर्त्तिनःसर्व्वे सर्व्वेषांकारणंशिव ॥
ब्रह्मणश्चशिरश्छिन्नंदेवदेवेन लीलया ॥ ५२ ॥

इन्द्रस्यास्य भुजस्तम्भोयेनाकारि दयालुना ॥
यस्यभक्तस्य शापेन दशजन्मानि ते हरे ॥ ५३ ॥

सौकरं नारसिंहं ते रूपं संशिक्षितं हरात् ॥
सर्वं जानामि ते विष्णो ब्रह्मन् शक्र गतव्यथाः॥५४

यूयं हि पशवोऽज्ञानजृम्भिताः पशुपः सहि ॥
गच्छन्त्वद्य यथाकामं मादृशे नास्ति धार्ष्ट्यता ॥५५॥

भवतां देवताः सर्वाअहं शर्वपदाश्रयः ॥
इत्युक्त्वा ध्यानमातिष्ठज्जैगीषव्योमहामुनिः ॥५६॥

ध्यानानन्देन महता इदमाह तदा द्विजाः

॥ जैगीषव्यउवाच ॥

यं वै ब्रह्म जगच्चराचरमिदं नास्तीति पद्यं परं
तद्रूपं विदुरीश्वरेश्वराधिया ते यान्ति शम्भोः पदम् ॥
ते लोकान्हि न यान्ति प्रापितमहादुःखाभितप्तोपधं
सौख्यं चापि समाप्नुवन्ति भगवन् त्वद्भक्तिसारादरः
॥ ५७ ॥

बाहुभ्यां तव धन्वने च भगवन् कुर्वे नमः स्वस्तये
भीतास्त्वद्धनुषः करायविशिखैर्हत्याशरव्यापि च ॥
पाहीश प्रविमुच्य ज्यामथ धनुष्कोट्योः शरान् संत्यज
हेतिं पातय मां विलोकय दृशा दूरे निषङ्गं त्यज
॥ ५८ ॥

शैवेन्द्राः शिवसम्मताः सुरवरापारव्यथाभीतितो
विभ्यन्त्येव न चाप्नुवन्ति हि हरे युष्मद्वरात्किं फलम् ॥
किन्त्वीशानपदारविन्दभजनाज्ञान्यन्मनश्चिन्त्यते
क्षुद्रेषु प्रभविष्णवो न हि वयं यान्तु स्वधामं सुराः॥५९॥

हाराएव भवन्ति भाग्यनिवहैः श्रीचन्द्रचूडार्चकाः
तेषां त्वत्पदवासनाऽपि सुतरां वाणीशशक्रालये ॥
किं जायेत गिरीन्द्रशेखरगतोमत्तद्विपालिंभिन
त्सिहः किं तृणमत्ति तद्वदिह मे नातोवराणां स्पृहा
॥६०॥

॥ इति श्री शिवरहस्ये प्रथमांशे जैगीषव्य
सुरसंवादोनाम तृतीयोऽध्यायः ॥ ३ ॥

॥ देवाऊचुः ॥

तव भावमहोज्ञातुमागतावयमेव हि ॥
सएव सर्वकामानांपूरकोस्ति न संशयः ॥ १ ॥

किंतवाऽसुकरंविद्वन् त्रिषु लोकेषु विद्यते ॥
त्वन्मनोध्यायति सदा यतःशिवपदांबुजम् ॥ २ ॥

येषां मनसि विश्वेशपदांबुजयुगंभवेत् ॥
तेषांकिंभुवनैश्वर्यैर्विनश्वरतरैर्मुने ॥ ३ ॥

यतोमहेशकृपया दृढा भक्तिर्भवेच्छिवे ॥
यया भक्त्या द्विजवर सुराअन्यानरोऽपि ॥ ४ ॥

मुक्ताश्च मोचयंत्यन्यान् शैवाः कारुणिकोत्तमाः ॥
भक्तिरेव विरूपाक्षे सर्वेषां मुक्तिदायिनी ॥ ५ ॥

भक्त्या संपूजितोलिंगोअलिंगोपि महेश्वरः ॥
विल्वपत्रैस्तत्फलेर्वा भस्मना वा महच्छ्रियं ॥६॥

प्राप्नोति मुक्तिसाम्राज्यमपुनर्भवदायकम् ॥
भस्माभिषिक्तकाये भावास्त्रिपुंड्रांकितमस्तकाः ॥ ७ ॥

रुद्राक्षमालाकोटीरधारिणोमालिकावराः ॥
पञ्चाक्षरावृत्तिपरारुद्राध्यायजपादराः ॥ ८ ॥

शिवलिङ्गार्चकाः शैवाः शिवक्षेत्रानिवासिनः ॥
नैवेद्यभोजिनः शंभोः पत्रपुष्पफलार्पकाः ॥ ९ ॥

अनन्यस्वान्तराविप्रामनोवाक्कायकर्मभिः ॥
शिवध्यानेन संतृप्ताः सदाशिवकथादराः ॥ १० ॥

गणयंति महाशैवानस्मान् कर्गसुरान्मुने ॥
तवेदंमानसंविप्र न कस्यापि मुनिष्वपि ॥ ११ ॥

त्वद्भावोभवसंसक्तोभवनाशाय केवलम् ॥
यथा रत्ननिधिम्प्राप्य सकिंगृण्हाति लोष्ठकम्॥१२॥

यथा मत्तेभकुम्भस्थः सकिंखरमपेक्षेत ॥
यथैव कल्पकवनंसंप्राप्यार्कमपेक्षते ॥ १३ ॥

यथा मणिमयंहारंप्राप्य किंवा वराटकम् ॥
तथाऽस्मदीयभोगेषु मूढोरज्यातिकामतः ॥ १४ ॥

त्वंकामारिपदध्यानान्निष्कामोसि महामुने
त्रिनेत्रपादकमले तिष्ठतु त्वन्मनोमुने ॥ १५ ॥

त्वमेव शैवधुर्येषु मूर्धन्योधन्यएव हि ॥
तव संदर्शनादेव संत्द्दताखिलपातकाः ॥ १६ ॥

जगज्जन्मासिसृक्षासु विश्वेशेन नियोजिताः ॥
न लभामैव विश्रान्तिश्रांताः संसारवर्तिनः ॥ १७॥

## ॥ देवाऊचुः ॥

तव भावमहोज्ञातुमागतावयमेव हि ॥
सएव सर्वकामानांपूरकोस्ति न संशयः ॥ १ ॥

किंतवाऽसुकरंविद्वन् त्रिषु लोकेषु विद्यते ॥
त्वन्मनोध्यायति सदा यतःशिवपदांबुजम् ॥ २ ॥

येषां मनसि विश्वेशपदांबुजयुगंभवेत् ॥
तेषांकिंभुवनैश्वर्यैर्विनश्वरतरैर्मुने ॥ ३ ॥

यतोमहेशकृपया दृढा भक्तिर्भवेच्छिवे ॥
यया भक्त्या द्विजवर सुराअन्यानरोऽपि ॥ ४ ॥

मुक्ताश्च मोचयंत्यन्यान् शैवाः कारुणिकोत्तमाः ॥
भक्तिरेव विरूपाक्षे सर्वेषां मुक्तिदायिनी ॥ ५ ॥

भक्त्या संपूजितोलिंगोअलिंगोपि महेश्वरः ॥
बिल्वपत्रैस्तत्फलैर्वा भस्मना वा महच्छ्रियं ॥६॥

प्राप्नोति मुक्तिसाम्राज्यमपुनर्भवदायकम् ॥
भस्माभिषिक्ताये भावास्त्रिपुंड्रांकितमस्तकाः ॥ ७ ॥

रुद्राक्षमालाकोटीरधारिणोमालिकावराः ॥
पञ्चाक्षरावृत्तिपरारुद्राध्यायजपावराः ॥ ८ ॥

शिवलिङ्गार्चकाः शैवाः शिवक्षेत्रनिवासिनः ॥
नैवेद्यभोजिनः शंभोः पत्रपुष्पफलार्पकाः ॥ ९ ॥

अनन्यस्वान्तराविप्रामनोवाक्कायकर्मभिः ॥
शिवध्यानेन संतृप्ताः सदाशिवकथादराः ॥ १० ॥

गणयंति महाशैवानरूपान् कर्मसुरान्मुने ॥
तवेदंमानसंविप्र न कस्यापि मुनिष्वपि ॥ ११ ॥

त्वद्भावोभवसंसक्तोभवनाशाय केवलम् ॥
यथा रत्ननिधिम्प्राप्य सकिंगृण्हाति लोष्ठकम्॥१२॥

यथा मत्तेभकुम्भस्थः सकिंखरमपेक्षेत ॥
यथैव कल्पकवनंसंप्राप्यार्कमपेक्षते ॥ १३ ॥

यथा मणिमयंहारंप्राप्य किंवा वराटकम् ॥
तथाऽस्मदीयभोगेषु मूढोरज्यातिकामतः ॥ १४ ॥

त्वंकामारिपदध्यानान्निष्कामोसि महामुने
त्रिनेत्रपादकमले तिष्ठतु त्वन्मनोमुने ॥ १५ ॥

त्वमेव शैवधुर्येषु मूर्धन्योधन्यएव हि ॥
तव संदर्शनादेव संत्दृताखिलपातकाः ॥ १६ ॥

जगज्जन्मासिसृक्षासु विश्वेशेन नियोजिताः ॥
न लभामेव विश्रान्तिश्रांताः संसारवर्तिनः ॥ १७॥

सदा वैषयिकोदेवावयंसर्वे महामुने ॥
तव वाक्पंकजोद्भूतसाधुसाराश्रितांतराः ॥ १८ ॥

वयंविश्रांतिमापन्नाः प्रपन्नाः परमाकृतिम् ॥
शैवेन्द्राङ्गमहासंगनिर्मुक्ताखिलल्हत्तमाः ॥ १९ ॥

उत्तमाविधिविष्ण्वींद्रादेवपु तव दर्शनात् ॥
कालकूटमहाज्वालानिर्दग्धान् हि महामुने ॥ २० ॥

अभीतयन्महादेवः पीत्वा हालाहलंविषम् ॥
देवानरक्षद्भगवान् हत्वा त्रिपुरमुल्बणम् ॥२१॥

कृत्वा मांवाण मत्युग्रंधृत्वा मेरुंशरासनम् ॥
मौर्वींश्चकाराऽहिपतिसारथिंविधिमातनोत् ॥२२॥

वेदान् हयांस्तदा चक्रे चक्रे सूर्यंच चंद्रकं ॥
धरामंडलमैतद्वै रथश्चक्रे महेश्वरः ॥ २३ ॥

सुरासुरान् भटांश्चक्रे कर्पणे वायुमण्डले ॥
किमविश्वाधिकोदेवोविश्वभूतेषु गण्यते ॥ २४ ॥

अस्मासु पशुभूतेषु देवः पशुपतिः शिवः ॥
पशूनस्मान्निबध्नाति मायापाशेन शंकरः ॥ २५ ॥

सएव कृपया जंतून्मोचयत्येव सर्वदा ॥
यस्य लिंगंसदाकालंपूजयंति मरुद्गणाः ॥ २६ ॥

मृत्युंजयोमहादेवः सर्वे वयमतंद्रितम् ॥
जन्ममृत्युजरादुःखैरभिभूतामहामुने ॥ २७ ॥

पुरा मन्नेत्रपद्मेन संपूज्याप्तंसुदर्शनम् ॥
दैत्येंद्रद्रावकंसाक्षात् विश्वेशस्य कृपाबलात् ॥२८॥

मृकंडुतनयं कालमृत्योर्योऽमोचयच्छिवः
श्वेतंच तंनृपसुतमरक्षत्कालपाशतः ॥ २९ ॥

यस्य लिंगस्य सन्मौलिमूलंब्रह्माहमप्यतः
अदृष्ट्वा परमांशान्तिन प्राप्नोति नरः क्वचित् ॥३०॥

उपमन्युंमुनिसुतंगाणपत्येन योजयत् ॥
शिलादतनयंसाक्षात्स्वसारूप्यंददौ शिवः ॥ ३१ ॥

भृंगीशश्च मुनिश्रेष्ठंकोपनंभक्तिमत्तरं ॥
निजभक्तगणश्रेष्ठंचंडीशंचाप्यकल्पयत् ॥ ३२ ॥

दैत्येंद्रपुत्रंबाणंच सहस्रभुजमातनोत् ॥
वीरभद्रेण निघ्नन्तं दक्षमक्षयदीश्वरः ॥ ३३ ॥

ममावताररूपाणि मत्स्यकूर्मादिकानि वै ॥
नारसिंहादि रूपाणि हतान्युद्वेजितानि मे ॥ ३४ ॥

शारभंरूपमास्थाय पुरा घोरतरः शिवः ॥
शिवभक्तास्तथान्येपि सुरासुरमुनीश्वराः ॥ ३५ ॥

प्रसादाभिमुखेनैव प्रसादेन नियोजिताः ॥
स्मरांधकगजाद्याश्च शिक्षिताश्च पिनाकिना ॥ ३६ ॥

इंद्रस्यास्य प्रसादेन सवज्रस्तंभितो भुजः ॥
न तेन सदृशोदेवोयोवेदांतैकगोचरः ॥ ३७ ॥

अनंतमहिमाधारस्त्वपरिच्छिन्नवैभवः ॥
योगंयिते सदेशानोवेदवेदांतमौलिपु ॥ ३८ ॥

यंयजंति महासत्रे योध्येयोयोगिभिः सदा ॥
यंदानैस्तपसा भक्त्या पूजयाऽनशनेन च ॥ ३९ ॥

ऋपयोदेवसंघाश्च स्वकामार्थप्रसिद्धये ॥
विश्वोविश्वातिगः साक्षाद्विश्वेशोविश्वभावनः॥ ४० ॥

जन्ममृत्युजरादुःखैरभिभूताः स्म सर्वशः ॥
तस्यैवाज्ञावशादेतज्जगच्चक्रंप्रवर्तते ॥ ४१ ॥

वन्हिर्वहति कव्यानि हव्यानि च सुरेष्वपि ॥
उदेति सविता नित्यंयाति शासनतोदिवम् ॥४२॥

सोमोमृतमयः साक्षादुदेत्योपधिनायकः
नक्षत्राणि भ्रमंत्येव गृहाधाराभ्रमंति हि ॥ ४३ ॥

प्रवाति पवनोमंदंमेघावर्षंति शासनात् ॥
भूमिर्वहति विश्वंवै लोकाः सर्वे चतुर्दश ॥ ४४ ॥

शेषोपि धत्ते शिरसि भुवंभवपदाश्रयः ॥
पर्वताः सरितोवाप्यः समुद्रास्तस्य शासनात्॥४५॥

नोद्वेलतांप्रयांत्येव स्मरशासनशासनात् ॥
पालयामि शिवादेशाज्जगत्सासुरमानुषम् ॥४६॥

विधिः सृजति भूतानि रुद्रोंते संहरिष्यति ॥
इंद्रः पालयते देवानसुरान् संहरत्यपि ॥ ४७ ॥

यमोपि पापिनांशास्ता यमशासनशासनात् ॥
कुबेरोधनपोनित्यंवरुणोयादसांपतिः ॥ ४८ ॥

ईशानोरुद्रसंघोनांयक्षाणांनिर्ऋतिस्तथा ॥

॥ विष्णुरुवाच॥

सर्वसांसुरमानुषंजगदिदंतस्यैव सच्छासना
दास्तेत्यंतभयातुरासुरनरव्राताः स्तुवंते ऋचा ॥
साम्ना रुद्रशतैर्महोपनिषदांसारार्थवाक्यैः शिवं
कस्तादृगवसिद्धएव हि मुने देवाधिदेवःशिवः ॥४९ ॥

इत्युक्त्वात्र ययुर्मुदा विधिहरी शक्रस्तथान्येसुरा
नत्वा तंमुनिपुंगवंसुरगणा याताः स्वगेहं तदा ॥५०॥

इति श्रीशिवरहस्ये प्रथमांशे विष्णुवाक्यं
नाम चतुर्थोध्यायः ॥ ४ ॥

प्रसादाभिमुखेनैव प्रसादेन नियोजिताः ॥
स्मरांधकगजाद्याश्च शिक्षिताश्च पिनाकिना ॥ ३६ ॥

इंद्रस्याऽस्य प्रसादेन सवज्रस्तंभितो भुजः ॥
न तेन सदृशोदेवोयोवेदांतैकगोचरः ॥ ३७ ॥

अनंतमहिमाधारस्त्वपरिच्छिन्नवैभवः ॥
योगयिते सदेशानोवेदवेदांतमौलिषु ॥ ३८ ॥

यंयजंति महासत्रे योध्येयोयोगिभिः सदा ॥
यंदानैस्तपसा भक्त्या पूजयाऽनशनेन च ॥ ३९ ॥

ऋषयोदेवसंघाश्च स्वकामार्थप्रसिद्धये ॥
विश्वोविश्वातिगः साक्षाद्विश्वेशोविश्वभावनः ॥ ४० ॥

जन्ममृत्युजरादुःखैरभिभूताः स्म सर्वशः ॥
तस्यैवाज्ञावशादेतज्जगच्चक्रंप्रवर्तते ॥ ४१ ॥

वन्हिर्वहति कव्यानि हव्यानि च सुरेष्वपि ॥
उदेति सविता नित्यंयाति शासनतोदिवम् ॥४२॥

सोमोमृतमयः साक्षादुदेत्योषधिनायकः
नक्षत्राणि भ्रमंत्येव गृहाधाराभ्रमंति हि ॥ ४३ ॥

प्रवाति पवनोमंदंमेघावर्षंति शासनात् ॥
भूमिर्वहति विश्वंवै लोकाः सर्वे चतुर्दश ॥ ४४ ॥

शेषोपि धत्ते शिरसि भुवंभवपदाश्रयः ॥
पर्वताः सरितोवाप्यः समुद्रास्तस्य शासनात्॥१५॥

नोद्वेलतांभयांत्येव स्मरशासनशासनात् ॥
पालयामि शिवादेशाज्जगत्सासुरमानुषम् ॥१६॥

विधिः सृजति भूतानि रुद्रोंते संहरिष्यति ॥
इंद्रः पालयते देवानसुरान् संहरत्यपि ॥ १७ ॥

यमोपि पापिनांशास्ता यमशासनशासनात् ॥
कुबेरोधनपोनित्यंवरुणोयादसांपतिः ॥ १८ ॥

ईशानोरुद्रसंघोनांयक्षाणांनिर्ऋतिस्तथा ॥

॥ विष्णुरुवाच॥

सर्वंसासुरमानुषंजगदिदंतस्यैव सच्छासना
दास्तेत्यंतभयासुरासुरनरव्राताः स्तुवंते ऋचा ॥
साम्ना रुद्रशतैर्महोपनिषदांसारार्थवाक्यैः शिवं
कस्तादृगवसिष्ठएव हि मुने देवाधिदेवःशिवः ॥४९ ॥

इत्युक्त्वात्र ययुर्मुदा विधिहरी शक्रस्तथान्येसुरा
नत्वा तंमुनिपुंगवंसुरगणा याताः स्वगेहं तदा ॥५०॥

इति श्रीशिवरहस्ये प्रथमांशे विष्णुवाक्यं
नाम चतुर्थोध्यायः ॥ ४ ॥

॥ सूतउवाच ॥

एवंतपस्यतस्तस्य कालोभूयानवर्तत ॥
वल्मीकावृतगात्रस्य तृणवल्लीयुतस्य च ॥ १ ॥

तस्यैव तपसा लोकाः संतप्ताश्च सुरासुराः
विस्मयंतोमुनिंदृष्ट्वा मुनयः संशितव्रताः ॥ २ ॥
नारदोवीणया लोकान् नाम्ना गायन्महेशितुः ॥
श्रावयन् सततंलोकान्धूतपापानथाकरोत् ॥ ३ ॥

हिमवच्छिखरंदृष्ट्वा जैगीषव्यमदृश्यत ॥
वल्मीकस्यांतरदृशापश्यन् वै नारदोमुनिम् ॥ ४ ॥

तपसा तापयन् लोकान् ध्यायन् रुद्रमनन्यधीः ॥
रुद्राध्यायार्थविज्ञानप्रवीणमानसंतदा ॥ ५ ॥
दृष्ट्वा सविस्मयोपेतोनारदस्तमभाषत ॥

॥ नारदउवाच ॥

जैगीषव्य महाभाग तपसा संशितव्रत ॥
त्वत्तपस्या महातीव्रा तया लोकाश्च तापिताः ॥ ६ ॥
किमद्यप्रार्थ्यमस्तीह तवाकामस्य सत्तम ॥
त्वादृशानो मुनिश्रेष्ठनापि दृष्टाः श्रुतामया ॥ ७ ॥

आकौमारब्रह्मचर्ये तवैव निरतं मनः ॥
ऊर्ध्वरेतास्त्वमेवासि मुनिसंघेषु सुव्रत ॥ ८ ॥

तवाद्य दर्शनाद्विप्र धन्योस्मि नितरांमुने ॥
तवेंद्रब्रह्मलोकेषु वैष्णवे प्रथितंयशः ॥ ९ ॥

लोकपालामराः सर्वे मुनयोतीव्रसुव्रताः ॥
दृष्ट्वा निष्कामममृत्युग्रां तवेद्दक्तपसःक्रियाम् ॥१०॥

रुद्रावर्तनशीलस्य रुद्रविन्यस्तचेतसः
सनारदस्य वचसा जैगीपव्योमहामुनिः ॥ ११ ॥

स्वागतेनाभिनंद्यैनं निषीदेत्यब्रवीन्मुनिम् ॥
उपविष्टे नारदे तु जैगीषव्योमितप्रभः ॥ १२ ॥

उवाच तं देवमुनिं वीणासक्तकरं तदा ॥

॥ जैगीषव्यउवाच ॥

लोकांस्त्वया संचरता किं दृष्टं चित्रमद्भुतं ॥ १३ ॥

तन्मे वद महाभाग कुशलः सर्वसंसदि ॥
त्वया नाविदितं किंचित् त्रिषु लोकेषु विद्यते ॥१४॥

सजैगीषव्यवचसा प्राह तं नारदोमुनिः ॥

॥ नारदउवाच ॥

विष्णुलोके ब्रह्मणश्च शक्रसंसदि चाप्यहम् ॥ १५ ॥

गच्छन् पश्यामि पुण्यानां भोक्तारोमुनयोनृपाः
पुण्यांते पतमानांश्च नानायोनिषु सत्तम ॥ १६ ॥

भ्रमंतः कर्मणा स्वेन तेजोमात्रशरीरिणः ॥
तिरस्कृतास्त्रयोदेवाब्रह्मविष्णुहरीश्वराः ॥ १७ ॥

येशां प्रसादः सर्वेषां स्वर्गानंताश्रिये मुने ॥
तेपि देवास्त्वया धूतानिष्कामेनेदमद्भुतं ॥ १८ ॥

कामांगनाशपादाब्जध्याननिष्कामकं मनः ॥
तवेदं मानसं दृष्ट्वा देवाश्चाश्चर्यमागताः ॥ १९ ॥

ब्रह्मा विष्णुस्तथा शक्रः सर्वे च मुनयोवयं
एषगच्छामि कैलासं नानागणनिषेवितं ॥ २०

विज्ञप्तुं ते तपश्चर्यां देवदेवाय शंभवे ॥
इत्युक्त्वोत्थितएवासौ नारदोदिव्यदर्शनः ॥ २१ ॥

जगाम लोकानखिलान् कैलासं च महामुनिः ॥
नानारुद्रगणोपेतं सुरकिन्नरशोभितम् ॥ २२ ॥

नंदीभृंगीमहाकालगणनायककोटिभिः ॥
रुद्रैश्च रुद्रकंन्याभिरप्सरोभिः समावृतम् ॥ २३ ॥

हेरंबस्कंदसदनैर्वाणचंडीश्वरादिभिः ॥
समावृतं तरुवरैर्नानापुष्पफलैर्युतैः ॥ २४ ॥

उत्फुल्लपंकजोत्फुल्लनीलोत्पलसरोवरैः ॥
कैलासशिखरापारसौधपर्वतीश्वरालयैः ॥ २५ ॥

कनत्कनकरत्नौघमौलिकुंभपताककैः
दोधूयमानैर्नितरां राजहृपगणैस्तदा ॥ २६ ॥

शुकबर्हिनिनादैश्च कोकिलालापसुंदरैः ॥
मुरजानकशंखादिमंडुमर्दलवादनैः ॥ २७ ॥

दुंदुभ्याघातराज्या वा विनादितगुहामुखैः ॥
वीणाक्कणनशब्दैश्च गंधर्वकृतगायनैः ॥ २८ ॥

मुरलीसरलीलीलाविलासाप्सरसां गणैः ॥
प्रनृत्यत्किंन्नरानीकसिंजन्मंजीरनिस्वनैः ॥ २९ ॥

कैलासशिखरापारमद्राक्षीन्नारदोमुनिः ॥
द्वारि स्थितं नंदिकेशमपश्यद्वेत्रपाणिनम् ॥ ३० ॥

जटामुकुटशोभाढ्यं त्रिपुंड्रांकितमस्तकम् ॥
भस्माभ्यक्तैरुद्रगणैः समंतात्परिवारितम् ॥ ३१ ॥

ददर्श नयनाब्जाभ्यां तेजोराशिमिवास्थितम् ॥
तेनाभिप्रश्नकथनैर्नंदितोनारदोमुनिः ॥ ३२ ॥

उवाच द्वारि देवस्य गायन्मधुरवीणया ॥
नामानि देवदेवस्य पावनानि महामुनिः ॥ ३३
नंदिकेशाग्रतः सर्वं जगौ रुद्रानुमोदितः ॥ ३४ ॥

॥ नारदउवाच ॥

शिव शिव भव देवशासनेमं
सुरसुर पाहि दयाकटाक्षसारैः ॥
भव भवजनितां रुजं हराशु
प्रमथाधीश्वर वीर धीर पाहि ॥ ३५ ॥

शिव शिव दहनाब्जमित्रसोमप्रकटविलोचनहे स्मरांधकारे ॥
भवशमन भयं जहीश शंभो त्रिपुरविनाशन त्र्यंबक त्र्यधीश
॥ ३६ ॥
हर गिरितनयेश देवदेव प्रबलगराशन नील नीलकंठ ॥
हृदि भवनकृताधिवास शंभो प्रथितमहोरगभोगशोभिकंठ ३७
हर हर भवजातघोरदुःखं हर हर पापमपाकुरुष्व शंभो॥
हर हर मुरजित्प्रपूजितांघ्रे कुरु शंभो शशिशेखर कृपां मे॥३८॥
शंभो शंकर चंद्रशेखर दयासारामराधीश्वर
पापापारसमुद्रशोषणमहावाडव्यवन्हे शिव ॥
कांतार्धीकृतशोभितांग कमलाकांताक्षिपूजांघ्रिक
विश्वेशानविधिप्रचंडशिरसा लग्नामलांघ्रेहर ॥ ३९ ॥
शूलप्रोथितदक्षवक्षहरण त्र्यक्षामरार्धीश्वर
पाहीमं जनमर्भकं तव विभोभावैकलभ्य प्रभो॥४०॥
गानं ते नारदमुखाद्वीणाक्कणनमंजुलम्
श्रुत्वैव नंदिकेशाद्या गणाः शंभोर्महात्मनः ॥ ४१ ॥
व्यजिज्ञपंस्तेदेवाय शंकराय महात्मने
प्रणम्य नंदिकेशोपि पिधायास्यंकरेण वै ॥ ४२ ॥
उवाच देवं वरदं प्रसन्नास्यं त्रिलोचनं ॥

॥ नंदिकेशउवाच ॥

शंभो शंकर धूर्जटे त्रिनयनापारव्यथां संहर
पारावारमहाप्रभावजगतां व्यापारसारादर ॥
त्वन्नामामृतधारया जगदिदं प्राप्तस्तवेशांतिकं
संप्लाव्य प्रमथाधिनाथपदवीं द्रष्टुं पदाब्जं तव ॥४३॥

द्वारे तिष्ठति वारितः साहि मया किं चाज्ञयाशु प्रभो
देवाज्ञावसरेण तं गमयितुं दिव्यं मुनिं नारदम् ॥
त्वत्पादांवुजलोलमिश्रमनसं सर्वैर्विशिष्टांतरं
लोकानुग्रहवेषधारिणमहोप्राप्तस्तवेशांतिकं ॥ ४४ ॥

नंदिकेशवचः श्रुत्वा कटाक्षाग्रेण शंकरः ॥
संज्ञांचक्रेऽखिलेशानो नारदागमनं प्रति ॥ ४५ ॥
नारदोपि च देवेशं नत्वा तुष्टाव हर्षितः ॥
शिपिविष्टं महादेवमष्टाकृतिमनोहरम् ॥ ४६ ॥

॥ नारदउवाच ॥

जय जय देव महेश धूर्जटे
जय जय विश्वविधानदक्षशिक्ष ॥
जय विश्रुतवेदगीतकीर्ते
जय जय भक्तजनार्पितैकसुसे ॥ ४७ ॥

जय जय भगवन् तपःक्रियाणां
फलदानोन्मुखपंचवक्त्रशंभो ॥
तव शिव भगवन् पदाब्जयुग्माऽ
मलभावेन त्द्दा तपैकराशिः ॥ ४८ ॥
मुनिरास्ते हिमवन्नगोर्ध्वमौलौ
तव दिव्यामृतलोकनैकतर्पः ॥ ४९ ॥

इत्थं नारदवाक्येन जातहर्षोमहेश्वरः ॥
जैगीषव्यं ययौ द्रष्टुं नानागणवरैर्युतः ॥ ५० ॥

आरुह्यवृषभं दिव्यं नानालंकार भूषितम्॥
नानागणमुखोद्गीतवाद्यवृंदकृतादरः ॥ ५१ ॥

छत्रचामरहस्तैश्च पताकाविवृतैर्गणैः ॥
उमया स्कंदहेरंबनंदिशृंगिगणावृतः ॥ ५२ ॥

क्षणेन हिमवन्मौलिमाजगामामरैर्वृत ः ॥
मुनिभिर्गणमुख्यैश्च मंदस्मितमनोहरः ॥ ५३ ॥

उद्यच्छशांकधवलधावल्यांकसमप्रभः ॥
गंगातुंगतरंगाग्रमौलिद्युतिविराजितः ॥ ५४ ॥

दयाकटाक्षामृतसिंधुवैभवैर्वल्मीकभूतंमुनिमात्मवर्पं ॥
तदोत्थितोदेववरं प्रणम्य तुष्टाव चाष्टाकृतिमप्रमेयम् ॥५५॥

॥ जैगीषव्यउवाच. ॥

महेश्वर महोद्धत प्रवलतापपापापह
प्रपन्नजनरक्षणे क्षणविशिष्ट शिष्टेष्टद ॥
विनीतजनवत्सल त्रिपुरमारसंशोषक
प्रसीद दययाधुना भवदवाग्निसंशोषक ॥ ५६ ॥

क्षपापतिकलाधर क्षपिततापपापापह
प्रचंडगरलाशन त्रिदशमौलिवंद्यांघ्रिक ॥
महोक्षवरवाहनाध्वररूदक्ष दक्षाध्वरे ॥
भगाक्षिहर शंकर प्रसभमाशु मीक्षस्व माम् ॥ ५७॥

हरामरवरोत्तम प्रवल सौरिगर्वापह
मृकंडुतनयावन प्रवल शूलदग्धांधक ॥
फणींद्रमणिकंकणोज्वलित सोमसूर्यानल
विलोचन दयारसप्रथित वेदगीताशय ॥ ५८ ॥

त्रियंवक सदाशिव त्रिदशनायकाशावस
यमींद्रहृदयाब्जगोचलित मंजुनादप्रिय ॥
सुभूतिवसनामलोल्लसितभोगिभोगप्रिय
प्रसीद मयिदेव हे मुरहराब्ज नेत्रांघ्रिक ॥ ५९ ॥

रमारमण सायक प्रवल मेरुसद्धन्वक
महीवररथांगके विधृतसोमपूपात्मक ॥
तुरंगनिगमाव्ययविधिसुयंतरीक्षस्वमां
दयारसदृशानयामदमहापसारादर ॥ ६० ॥

जैगीषव्य स्तुतिंश्रुत्वा संतुष्टः प्राह शंकरः
प्रांजलिं विनयोपेतं मुनिं वीक्ष्य स्मरार्दनः ६१ ॥

॥ ईश्वरउवाच ॥

त्वं धूर्जटिप्रेमरसोमुमुक्षु
र्मोक्षेकतानः श्रुतिशेखरांतः ॥
त्वमूर्ध्वरेता ममसुप्रसादभाक्
त्वंसारभूतोसि मुनीश्वराणाम् ॥ ६२ ॥

विगलितमदमानलोभमोह
प्रकटितभावविवर्तरेपूर्णचेताः ॥
धृतमासितत्तरोवराक्षमालः
श्रुतिमूर्धन्यमनोनिचारशूरः ॥ ६३ ॥

इति श्रीशिवरहस्ये प्रथमांशे जैगीषव्य
प्रसादकरणं नाम पंचमोध्यायः ॥ ५ ॥

---

॥ जैगीषव्यउवाच. ॥

त्वमेव देव देवेश पिता माता सखा प्रभुः ॥
त्वमेव सर्वदेवेश विश्वेश्वर महेश्वर ॥ १ ॥

नजाने गिरिजाजाने त्वत्तोप्यन्यंसुरेश्वरात् ॥
तस्मात्प्रसीद भगवन् करुणासागराधुना ॥ २ ॥

प्रपन्नोस्मि पदद्वंद्वंनिर्द्वंद्वंते महेश्वर ॥
भ्रातरौ स्कंदहेरंबौ सखायोगणपामम ॥ ३ ॥

जगतांजननी गौरी जनित्री मम शांकरी ॥
जगत्पिता त्वमेवेश पिता मम महेश्वर ॥ ४ ॥

नान्यंवरंवृणे देव त्वत्पादांबुजभक्तितः ॥
सैव धर्मार्थकामादिमोक्षहेतुर्ममाधुना ॥ ५ ॥

यया भक्त्या महादेव मुक्ताः सर्वे सुरासुराः ॥
त्वद्भक्तएव जगति भक्तोन्यान्मोचयत्यपि ॥ ६ ॥

त्वद्भक्त्यैव विधिर्विश्वंसृजत्येव महेश्वर ॥
त्वत्तोवेदानधिगतः सत्यलोकाधिपोभवत् ॥ ७ ॥

विष्णुस्तव पदद्वंद्वंनेत्राब्जेन समर्चयत् ॥
दैत्यवृंदैकसंहत्यै चक्रंप्राप्तंसुदर्शनम् ॥ ८ ॥

त्वद्भक्त्येव विरूपाक्ष वैकुंठस्याधिपोभवत् ॥
पद्मसद्मापतिश्चापि जातोरुद्रस्त्वदाश्रयात् ॥ ९ ॥

दत्वा शूलवरंतस्मै रुद्रायामिततेजसे ॥
रुद्राणामाधिपत्ये च त्वया सोप्यभिषेचितः ॥ १० ॥

यस्य शूलानलज्वाला दग्धमंते चराचरम् ॥
शक्रोमरेंद्रतांप्राप्तस्त्वद्भक्त्यैव हराधुना ॥ ११ ॥

शचीपतिस्त्वं संप्राप्य नानास्वर्गैकभोगभाक् ॥
धनाधिपत्यंधनदस्त्वद्भक्त्येव महेश्वर ॥ १२ ॥

यमोपि त्वत्पदार्चातोलोकपालोभवच्छिव ॥
वरुणोयादसांनाथः सूर्यचंद्रानलानिलाः ॥ १३ ॥

त्वद्भक्त्यैव विरूपाक्ष लेभिरे दिक्पदेशताम् ॥
समर्चयंति त्वल्लिंगं भक्त्या सर्वे सुरासुराः ॥ १४ ॥

सहस्रभुजतांप्राप्तोबाणोभक्त्या तवेश्वर ॥
पौलस्त्यतनयःशंभो रावणोलोकरावणः ॥ १५ ॥

जिग्ये सुरान् नृपवरान् त्वद्भक्त्यैव महेश्वर ॥
घटोद्भवेन त्वद्भक्त्या समुद्राश्चुलके कृताः ॥ १६ ॥

दधीचिनापि त्वद्भक्त्या पुप्लुवे रूपमद्भुतं ॥
दर्शितंमायिनेशंभो भृगुणा शापितोहरिः ॥ १७ ॥

उपमन्युना बालेन लब्धः क्षीरैकवारिधिः ॥
त्वद्भक्त्या किल पाशैश्च पाशितोपि मृकंडजः॥१८॥

जिगाय मृत्युंतरसा श्वेतोपि नृपनंदनः ॥
शिलाशनेन त्वद्भक्त्या पुत्रःप्राप्तोह्ययोनिजः ॥१९॥

त्वद्भक्त्या नंदिकेशोपि गाणपत्यमवाप्तवान् ॥
चंडीश्वरोपि पितरंहतवान् तवभक्तितः ॥ २० ॥

मंकणोपि पुरा सिद्धिं प्रचुरांप्रापतेर्चनात् ॥
सोमोपि मुक्तवान् राजयक्ष्मतस्त्वत्प्रसादतः ॥२१॥

दक्षोपि दीक्षितोयज्ञे शिक्षितोनुगृहीकृतः ॥
शतर्चनादयोपीश व्याघ्रपादादयस्तथा ॥ २२ ॥

दूर्वासाद्यामहाभागादत्तात्रेयादयस्तथा ॥
रामोपि भार्गवः शंभो नृपाणांकुलघातकः ॥ २३ ॥

तथैवान्ये नृपतयोसोमसूर्यान्वयोद्भवाः ॥
आदितेयाश्च दितिजागणारुद्रामुनीश्वराः ॥ २४ ॥

भूतभव्यावर्तमानाभक्तास्त्वद्भक्तिभाविताः ॥
तव भक्त्यैव सर्वेषांस्वर्गोमोक्षोहि शंकर ॥ २५ ॥

त्वद्भक्तिमेव याचेह अनन्यगतिरीश्वर ॥
हिमाद्रौ स्थापिते लिंगे मम जैगीश्वराभिधे ॥ २६॥

केदारात्पश्चिमे शंभो तस्मिन्नित्यंत्वमावस ॥

॥ सूतउवाच ॥

इत्युक्त्वा मुनिना तेन महादेवोगिरींद्रजाम् ॥२७॥

सुराणां च मुनीनांच शृण्वतांप्राह शंकरः ॥

॥ ईश्वरउवाच ॥

कथामाकर्णयापर्णे कर्णाभ्यामविलोचने ॥ २८ ॥

तूर्णंपूर्ण ग्दप्राप्त्यौ भवार्णवनिवासिनाम् ॥
कृतालिंगमहासद्मा पद्मसद्मापि सद्मगा ॥ २९ ॥

तेषां नित्यं भवेदेव यैर्वाकारिशिवालयः ॥
तपांसि तेन तप्तानि जीर्णपर्णाशनान्यपि ॥ ३० ॥

तेनेष्टाः सकलायागास्तेनाधीतं श्रुतं शिवे ॥
केदाराख्यं त्वत्पितुर्मौलिसंस्थं
लिंगं चैतन्मुक्तिसंबीजकं मे ॥
केदारेस्मिन्त्वत्पितुश्चारमौलौ
भूमानंदामुख्यवासं सदैव ॥ ३१ ॥

एतल्लिंगात्ताश्रिमे चामुना मे
नाम्ना स्वेनाप्यर्चितं पश्य लिंगम् ॥
प्रतिष्ठिते येन केनापि लिंगे
तिष्ठामि चेशानि सदैव तुष्टः ॥ ३२ ॥

तस्मिन् सदैवावहितोभवामि
भवानि नित्यं सुखदोतिहर्षदः ॥
भवानि मुक्त्यै प्रथितप्रदीपे
प्रकाशने पूजितभावनेपि ॥ ३३ ॥

यः कश्चिद्भुवनेश्वरि त्रिभुवने उत्तुंगलिंगालयं
रम्यं द्वारकपाटतोरणमहाप्राकारसद्गोपुरम् ॥
विद्युत्पुंजसमप्रभामलमहाहैमैककुंभोल्लस -
त्कृत्वा जन्मशतार्चितःखलु महापापैर्नरोमुच्यते॥३४

रम्ये शैलवरे सरित्तटवरे ग्रामे पुरे पर्वते
तीर्थे वा विपिने गिरींद्रवरजे गंगातटे नर्मदा ॥
तीरे वापि महेश्वरिश्च सुमहाक्षेत्रेषु लिंगं दध-
न्नाद्येवाभिनवेंदुशेखरवरे भक्तिः परं कारणम् ॥३५॥

कृत्वा चापि शिवालयं सुखयुतोभूमौ विमुक्तस्ततो
मृद्दारुप्रभवं शिलेष्टककृतं रम्यं सुधाच्छादितम् ॥
दिव्यं सन्मणिकल्पितं भवहरं सद्योविजायेतमे
क्षुत्तं चारुशिवालयोत्तमलसत्तुंगं हि लिंगं हि मे ॥३६॥

प्रतिष्ठाप्य सुवस्त्रचंदनघनासारैश्च विल्वार्चकः
किं मत्तेभसुहेमभूमितुरगैर्गोभिश्च रत्नोद्भवैः ॥
दानैर्यागवरैश्चिराजितमहाधर्मैश्च किं वा शिवे
योगैर्वा नियमैर्व्रतेन तपसा तीर्थाटनेनापि किम्॥३७॥

कन्यान्नादिकदानतोपि हि वरं लिंगालयं यैः कृतं
पातांतावधि सुंदरं कृतमहाधर्मैकजालं शिवे ॥
मल्लिंगालयकल्पकस्य सुतरां पाताद्भयं नास्ति वै
यावच्चंद्रसुतारकागणमुखे यावत्सरिच्छैलकाः ॥३८॥

तावन्मे गणपोत्तमोहि सभवेत्कैलासमौलौ वसन्
खंडं वा स्फुटितं तथा परकृतं जीर्णं विशीर्णं तथा ॥
तस्योद्धारमुमे करोति सुकृतैर्यःश्रद्धया केवलं
किं वक्ष्यामि सदैव तस्य हृदये नित्यं निवासोमम॥३९

तस्यांते वितरामि मुक्तिमखिलां वक्ष्ये रहस्यं तव
शैवं लिंगवरं प्रदोषसमये येनार्चिविल्वैः शुभैः ॥
एवं चैव चराचरे त्रिभुवने चाध्यक्षतामावहे-
द्भूमौ पुत्रकलत्रमित्रसहितोधान्यैर्धनैः संयुतः ॥४०॥

अंते वापि विमुक्तिमेति नितरां लिंगार्चनादेव मे
तैलैर्वा विविधैर्घृतैः पशुभवैर्गव्येन वा केवलम् ॥
उद्बोध्योज्वलदीपजालमगजे कृत्वैव दीपावलिं
पद्माभेत्नमहंसतारकगणाकारावलिं मे गृहे ॥ ४१ ॥

रम्यामुज्वलवर्तिकामथ कुलं मुक्तीकृतं तेन वै
धूपैर्वागरुसंभवैरथ शिवे चोद्वासितं मद्गृहम् ॥
बिल्वार्चाकुसुमैः शुभैश्च सुभगामोदैः शिवे केवलं
दग्ध्वा याति पदं ममत्वथ कुलं सर्वैः कृतार्थोभवेत्॥४२॥

ज्ञानं चापि समाप्नुयान्मुनिवराद्वेदांतवाक्योद्भवं
कर्पूरोद्भवखंडजैरथ महाज्वालालसद्दीपकैः ॥
उज्वाल्य प्रमथाधिनाथ सुमहालिंगेतु मौलिं दधन्
पापादृःकुलेशं भवत्यथ शितं दीपप्रदाने मयि॥४३॥

प्राप्नोत्येव कुलोन्नतिं वरसुतान् प्राप्नोति शंभोः पदं
गव्यैः कापिलजैस्तथेतरगवां सारैः पयोभिर्घृतैः ॥
दध्ना चाप्यधिकं फलेन शतशः क्षौद्रेण चाक्षुद्रतां
प्राप्नोतीक्षुरसेन गंधसलिलैः पुष्पोत्थरत्नोदकैः ॥४४॥

स्वर्णोत्थैरभिषिंच्य लिंगममलं प्राप्नोति मुक्तिं शिवे
पुंड्रेक्षुप्रभवैश्च सद्रसवरैर्मोचाफलानां गणैः ॥
नारेलांबुरसालसारजरसैर्जंबीरनीरैरपि
उत्केशैः पनसोद्भवैर्मम महा लिंगेभिषिंचादरात् ॥४५॥

ग्रीष्मर्तौ मम लिंगसंगतमहामौलौ गलंतीझरी
धारासारमुपाटलागरुरसैः पुष्पांबुभिः पूरितैः ॥
धाराकल्पनजे हि यत्फलमुमे तत्केन वा शक्यते
वक्तुंजन्मशतार्जितैश्चसुमहापापैर्विमुक्तोभवेत् ॥४६॥

उत्फुल्लैः कमलैः सितासितवरैः सन्मल्लिका मालती
जातीकुंदसुपाटलैर्बकमहाधत्तूरद्रोणार्ककैः ॥४७॥

कल्हारैःकुमुदैर्जपादिकुसुमैरुत्फुल्लदाडिंबकैः
पुन्नागार्जुनचंपकैर्वकुलकैर्मंदारसंतानकैः
नीलोद्यद्विकचोत्पलैः कुरवकैः सत्कार्णिकारैः शिवे
नद्यावर्तशिरीषबिल्वकुसुमैरक्तैश्चनारैः सिते ॥ ४८ ॥

जंब्वाम्रैश्चपलाशकैः शमिसुमैर्दूर्वापमार्गादिभि-
र्विष्णुक्रांतकुशैश्च काशजनितैरभ्यर्च्यमुक्तोंबिके ॥
कृत्वार्चामपि हैतुकीं भगवतः शंभोः कटाक्षांकुरै
र्लिंगैःपुण्यतमे प्रदोषसमये पुण्येषु कालेष्वपि ॥४९॥

मौद्गल्योथ शतार्चनात्त्रिभृगवोधौम्याग्रजोगौतमो
मार्कंडेयमुनिर्दधीचिउशना मुंजोकरिः शौनकः ॥
दुर्वासा जमदग्निर्जोगिरवरोदत्तात्रिजोव्याघ्रपात्
जावालिश्चदधीचिमित्रजनितोकुंभोद्भवःशैलजे
॥ ५० ॥

देवेतु प्रथितोविधिश्च मुरभिच्छक्रोर्यमाग्निर्मरुत्
पाशीयक्षपतिर्यमोथनिऋतीरीशानमुख्यागणाः ॥
स्कंदश्चेभजवक्त्रगोगणवरोनंदीशभृंगीश्वरो
तुंडिश्चंडिरिटिःसुभद्रकवरोवीरोमहाभैरवः ॥ ५१ ॥
शैवेंद्रास्तुसितत्रिपुंड्रनिटिलारुद्राक्षमालांगदा-
रुद्रावर्तनपाठशीलमनसोलिंगार्चकामे शिवे ॥
अन्ये वै मुनयोगृहाश्रमरताः श्रांताः परं संसृतौ
नानादैवतपूजनेन कुधियोजानंति नो मां शिवे ५२
कानीनस्त्वयमप्युमे विधिवशात्संप्राप्य मे काशिकां
मत्सान्निध्यगतोर्ध्ववाहुरसकृद्याचष्टदेवं हरिं ॥
तस्मान्नार्हति वक्तुमप्यतितरां श्रोतुं मदीयं रहः
पुण्यं मुक्तिरहस्यमेतदनघं शिष्येषु पात्रेष्वहो ॥५३॥

त्वं सम्यक् प्रतिपादयाशुभसितोद्धूलेषु भक्तेषु वै
भावापारमहांबुसिक्तहृदये पुण्येषु शैवेषु च ॥
जैगीषव्यमुनिंद्रगोपयपरं शैवं रहस्यं मम
नाख्येयं शिवभक्तिवर्जितमुनौ पुण्यान्वितं मुक्तिदं५४

दत्वा भक्तिविहीनमानसमरे पापं महत्प्राप्नुयात्
किंचान्योतिवृथाश्रमं सुनिशितं पात्रे यथा मे जलम्

॥ सूतउवाच ॥

दृष्ट्वा देवीमुखाब्जं त्रिनयननयनानंदसंदोहवीजं
उत्फुल्लामलकैरवोपममुखश्रीपार्वतीनायकः ॥
दृष्ट्वा चापि मुनिं विशिष्टमनसं शिष्टाद्विशिष्टं तदा
अष्टांगाखिलयोगजालनिकरैःपूतैक्यसन्मानसम् ॥५५

॥ ईश्वरउवाच ॥

पूतोयं भुवनेश्वरि त्रिजगतामिशोमुनिः शांकरः
पुत्रस्ते निखिलागमैकरसिकोभूयात्त्वयालोकितः ॥
संप्रत्येपतवाननाब्जविकसत्सूर्यस्य पट्वक्त्रगं
प्राप्नोतु प्रसभं मदीय रहसां सारं जगत्पावनम्॥५६॥

स्कंदः स्कंदिततारकस्तव शिवे पर्यंकभूतांकुरः
सुश्रावाखिलमंगलं त्वयि मया संप्रोक्तमेतच्छुभम् ॥
षड्भिःस्वैर्वदनैश्च्युतामृतरसैः पुष्णातु चैनं मुनिं
शैवनाद्यरहस्य संभवकथा धारा सुधा शीकरैः॥५७॥

जैगीषव्यमुखाब्जतोमुनिवराः शृण्वंतु शैवं रहः
शैवाएव भवंति तच्छतमहानंदैकबोधाः सदा ॥
नान्येषां मतिरस्ति शंकरकथा पीयूषपानोत्सवे
भक्त्युत्थामृतपानपीनमनसोदेविस्फुटं केचन ॥५८॥

वेदांतार्थविचारसारसुगमं शैवं रहस्यं मया
देव्यैदत्तमतस्तया बलवता स्नेहेन दत्तं मुने ॥
स्कंदायासुरशिक्षणाय ददतं गच्छाधुना तं प्रति
इत्युक्त्वा गिरिजां मनोहरवचः श्रुत्वा मुनिर्निर्ययौ५९

नत्वा शंभुपदं जगाम रभसा युक्तोमुनिंद्रैरपि

देवश्चापि मुदा ययौ पशुपतिर्देव्यासुरौघैर्वृतः
कैलासं गणकोत्थवाद्यनिकरैर्देवैः स्तवैः संस्तुतः॥६०

इलामिलन्मौलिरथो महात्मा
जैगीषवस्तंसुरराजराजम् ॥
संपूज्य नत्वाभिजगाम शंभुं
स्कंदाय च स्कंदमुदार्थवेदने ॥ ६१ ॥

इति श्रीशिवरहस्ये प्रथमांशे जैगीषव्यागमनं नाम
षष्ठोऽध्यायः ॥ ६ ॥

॥ सूतउवाच ॥

इत्युक्त्वा प्रययौ देवः कैलासं शंकरालयम् ॥
नंदिभृंगिगणौघेन सुराऽसुरवरार्चितः ॥ १ ॥

जगज्जनित्र्या देव्या च महावृषभवाहनः ॥
जैगीषव्योमुनिर्नत्वा महादेवपदांबुजम् ॥ २ ॥

ध्यायन्नभिजगामैव स्कंदं क्रौंचविदारणम् ॥
उपाययौ मुनिवरैः शैवेन्द्रैर्भक्तितत्परैः ॥ ३ ॥

मार्कंडेयोथ मौद्गल्योजमदग्निर्भृगुस्तथा ॥
दुर्वासा च्यवनोभर्गोवीतहव्योऽनिलाशनः ॥ ४ ॥

गौतमोत्रिर्भरद्वाजोलयोहयशिरामनुः ॥
उतथ्योग्निद्वजश्चैव दधीचिर्मौनिभार्गवः ॥ ५

व्यासः पराशरःकुंडः कविरंगिरसोमधुः ॥
उपमन्युर्विशाखश्च चतुर्दंडोवशोध्रुवः ॥ ६ ॥

जाबालिः कश्यपोमित्रोनारदस्तुंवरुस्तथा ॥
पर्वतश्चैव मांडव्योदंडोव्याघ्रपदोहनुः ॥ ७ ॥

वेदगर्भोवीतिहोत्रः कण्वोमेधातिथिर्धनुः ॥
शौनकस्तांडकश्चैव मित्रविंदोनुमित्रकः ॥ ८ ॥

हयग्रीवः पिप्पलादोदत्तात्रेयोविकत्थनः ॥
अगस्त्यश्चानिलाशश्च शतर्चाआश्वलायनः ॥ ९ ॥

सनंदः सनकश्चैव कुमारश्च सनातनः ॥
एवमाद्याश्च मुनयः शैवेंद्राः शिवसंमताः ॥ १० ॥

अग्निरित्यादिमंत्रैश्च भस्मोद्धूलनतत्पराः ॥
त्रियायुषैस्त्रिपुड्रांकारुद्राक्षांगदकंकणाः ॥ ११ ॥

पंचाक्षरजपासक्ताः पंचास्यध्यानतत्पराः ॥
अथर्वशिरसा देवं पूजयंति जपंति च ॥ १२ ॥

केचिच्छिखाजपासक्ताः केचित्कैवल्यजापकाः ॥
प्रणवाभ्यासनिरताः केचिज्जाबालजापकाः ॥१३॥

बृहद्रथंतरावामदेवसामादिजापकाः ॥
संहिताभिस्तथासाम्नां ऋचां च यजुषां तथा ॥ १४ ॥

रुद्राध्यायजपासक्ताः पंचब्रह्मपरायणाः ॥
सर्वे लिंगार्चनपरास्त्रिकालं मुनिसत्तमाः ॥ १५ ॥

पंचरुद्रजपासक्ताः पंचास्यध्यानतत्पराः ॥
शिवनैवेद्यभोक्तारोनियमाद्बिल्वपूजकाः ॥ १६ ॥

वैराग्यभाग्यनिरतानित्यानित्यार्थकोविदाः ॥
वेदवेदार्थतत्वज्ञाष्टढमज्ञानमनीषिणः ॥ १७ ॥

तपसां राशयः सर्वे सदाराः शिवतत्पराः ॥
शिवनामजपासक्ताः सर्वदा शिवचिंतकाः ॥ १८ ॥

अग्निहोत्रपराः सर्वे यज्ञोघैर्दग्धकिल्बिषाः ॥
शिष्यप्रशिष्यसहिताआगतास्तेन चाध्वना ॥ १९ ॥

स्कंदाश्रमं सरस्वत्यास्तीरे पावनपावनम् ॥
शुकसारिकसंयुष्टं कपोतगृहहुंकृतैः ॥ २० ॥

मृदंगमुरजोद्घोषैर्वीणाताललयानुगैः ॥
नृत्यात्किन्नरानीकमुत्फुल्लकमलाकरैः ॥ २१ ॥

स्कंदालयमपश्यंस्ते नानारत्नविराजितम् ॥
गोपुराट्टालवल्भीवप्रप्राकारशोभितम् ॥२२॥

सुवर्णखचितानेकनवरत्नविराजितैः ॥
पर्यंकास्तरणैर्दिव्यैः सिंहनादवरैर्युतम् ॥ २३ ॥

गंधर्वैर्नागवकुलैरुपेतैर्गीतवादनैः ॥
सिंहासनस्थं वरदं षड्वक्त्रमुकुटोज्वलम् ॥ २४ ॥

हेमपीतांबरधरं चलच्चामरवीजितम् ॥
कनत्कनकरत्नैश्च चित्रकुंडलशोभितम् ॥ २५ ॥

महार्हरत्नमालादि मुक्तासारसुकंधरम् ॥
शक्तिहस्तं महाशक्तेस्तनूजमतिसुंदरम् ॥ २६ ॥

ददृशुर्मुनयः सर्वे स्कंदं क्रौंचविदारणम् ॥
प्रणम्य जैगिषव्यायामुनयः स्कंदमव्ययम् ॥२७॥

तेन निर्दिष्टविष्टब्धविष्टरामुनयः सुरूनन् ॥ २८ ॥

॥ सूतउवाच. ॥

नभःस्पृगायाति समीरगत्या
भस्मावधूताखिलपापसंघः ॥
रमाननाभः परिपूर्णचंद्रमाः
ससाधुलोकोद्गितनूभवाभः ॥ २९ ॥

जैगीषव्यमुखाब्जलोकनमहानंदांबुधेर्मध्यगः
स्वस्थं चांतिकमागतं पुरभिदा संप्रेषितं ज्ञातवान् ॥
पात्रं वीक्ष्य महेशनुन्नहृदयग्रंथार्थसंबोधनोद्
हृष्टः पुष्टतनुः प्रकृष्टवचसा मुत्कृष्टबोधे मुनिम्॥३०॥

जैगीषव्यांगसंगस्फुटपुलकततिः शैववर्यः षडास्यो
नेत्रैरालोकहृष्टोभसितधवलिमासक्तगात्रोमुनींद्रम्॥
॥ ३१ ॥

॥ स्कंदउवाच. ॥

त्वदागमनकारणाद्भ्रमततिः प्रनष्टामम
शिवेन कथिते पुरा शिवरहस्य धर्माभिधे ॥
समुद्रमिव सिंधुभिः शिवकथासुधावारिधौ
समुल्लसतिमन्मनस्तदपि बोधहेतुस्त्वयि ॥ ३२ ॥

पर्वेलिमतपःफलैरमितपुण्यसंघार्चितै
र्भवानपि समागतस्त्रिपुरवैरिसंप्रेषितः ॥
मुनिष्वपि विशेषतस्त्वयि दया महेशस्यया
न कोपि भुवनेषु वा प्रमथनाथलिंगार्चकः ॥ ३३ ॥

इति श्रीशिवरहस्ये प्रथमांशे जैगीषव्यस्कंदसमा-
गमोनाम सप्तमोध्यायः ॥ ७ ॥

॥ सूतउवाच. ॥

मुदोपविविशुर्हृष्टाः षडाननविलोकनात् ॥
हृष्टास्ततस्ते शैवेंद्राअष्टमूर्तिकृपास्पदाः ॥ १ ॥

ऊचुः प्रांजलयः सर्वे जैगीषव्यपुरोगमाः ॥

॥ मुनयऊचुः ॥

स्कंद त्रिपुरसंहर्तृतनूभव सुखास्पद ॥ २ ॥

क्रौंचोत्कृष्टगिरिश्रेष्ठासुरादीनां विदारण ॥
शिवज्ञानसुधांभोधेर्निखिलार्थद चेशज ॥ ३ ॥

कुमार मारसंकाश प्रपन्नजनवत्सल ॥
शिवांकभूतपर्यंक सर्वभूतहृदंतर ॥ ४ ॥

वीरबाहुमुखानेकगणोत्तमनिषेवित ॥
शिखिस्थ ह्यमरेंद्रादिसेनापालन हे प्रभो ॥ ५ ॥

प्रणवादिमहावाक्यसारासारविचारक ॥
चक्रहृत्पद्मसंदेहतमस्तोमनिवारक ॥ ६ ॥

ज्ञानोदयोघ मार्तंडप्रचंडतरविक्रम ॥
तव पादांबुजद्वंद्वविलोकनहताशुभा ॥ ७ ॥

जैगीषव्यस्य तपसा दृष्टोस्माभिर्महेश्वरः ॥
तेनाज्ञप्तावयं सर्वे जैगीषव्यपुरःसराः ॥ ८ ॥

त्वद्वाक्पंकजनिष्पंदमकरन्दमधुव्रताः
पातुं शिवरहस्याख्यममृतं भवनाशकम् ॥ ९ ॥

प्रयाताः पुण्यभारेण तव सन्निधिमुत्कटाः ॥
सततं भवदावाग्निमध्यस्थामुनयः सदा ॥ १० ॥

सुधाशीकरया दृष्ट्या वर्षयाशु प्रसीद च ॥
इत्थं मुनीनां वचनं श्रुत्वा स्कंदोहरात्मजः ॥ ११ ॥

प्रसन्नचेतांस्तानाह शांभवान् हरनन्दनः ॥

॥ स्कंदउवाच. ॥

जैगीषव्यमुखायूयं मुनयोभवसत्तमाः ॥ १२ ॥

भवभावैकसंपन्नाभक्ताः सर्वे महेश्वरे ॥
भवतां दर्शनेनैव कृतार्थोमुनयोह्यहं ॥ १३ ॥

मनसःपद्ममुत्फुल्लं मुने श्रुत्वा तपः क्रियाम् ॥
प्रसादं च महादेवाज्जैगीषव्यस्य सत्तमाः ॥ १४ ॥

शिवाज्ञया समायातोजैगीषव्योमहामुनिः ॥
भवद्भिः शांभवैः सार्द्धं मया ज्ञातं हृदेव हि ॥ १५ ॥

पात्रभूताभवंतोहि त्रिनेत्रपदपूजकाः ॥
याद्गोप्यमपि तद्वक्ष्ये रहस्यं शिवहृद्गतम् ॥ १६ ॥

ॐ नमः शिवाय.

# शिवरहस्य.

प्रथमांश.

त्वद्वाक्पंकजनिष्पंदमकरन्दमधुव्रताः ॥
पातुं शिवरहस्याख्यममृतं भवनाशकम् ॥ ९ ॥

प्रयाताः पुण्यभारेण तव सन्निधिमुत्कटाः ॥
सततं भवदावाग्निमध्यस्थामुनयः सदा ॥ १० ॥

सुधाशीकरया दृष्ट्या वर्षयाशु प्रसीद च ॥
इत्थं मुनीनां वचनं श्रुत्वा स्कंदोहरात्मजः ॥ ११

प्रसन्नचेतास्तानाह शांभवान् हरनन्दनः ॥

॥ स्कंदउवाच. ॥

जैगीषव्यमुखायूयं मुनयोभवसत्तमाः ॥ १२ ॥

भवभावैकसंपन्नाभक्ताः सर्वे महेश्वरे ॥
भवतां दर्शनेनैव कृतार्थोमुनयोह्यहं ॥ १३ ॥

मनसः पद्ममुत्फुल्लं मुनेः श्रुत्वा तपः क्रियाम् ॥
प्रसादं च महादेवाज्जैगीषव्यस्य सत्तमाः ॥ १४ ॥

शिवाज्ञया समायातोजैगीषव्योमहामुनिः ॥
भवद्भिः शांभवैः सार्द्धं मया ज्ञातं हृदैव हि ॥ १५ ॥

पात्रभूताभवंतोहि त्रिनेत्रपदपूजकाः ॥
यद्गोप्यमपि तद्वक्ष्ये रहस्यं शिवहृद्गतम् ॥ १६ ॥

शिवांकसंस्थेन मया श्रुतं पुररिपोर्मुखात् ॥
द्वादशांशसमायुक्तं देव्यै देवेन दर्शितम् ॥ १७ ॥

पुण्यं पापहरं चैतत्सर्वश्रुतिशिरोगतम् ॥
भवान्यैव भवेनैव कथितं भवनाशनम् ॥ १८ ॥

कथानकं श्रुतिशिरः प्रणवार्थं महाघभित् ॥
जैगीषव्याग्रगायूयं शृण्वंतु परमादरात् ॥ १९ ॥

धर्मकामार्थमोक्षाणां सारभूतमिदं शुभम् ॥
श्रुत्वेदं हि कथारत्नं शंकरस्य परात्मनः ॥ २० ॥

श्रोतुमन्यत्ररोचेत यथान्याः प्राकृताः कथाः ॥
सृष्टिस्थित्यंतकथनैर्नृपाणां चरिताश्रयैः ॥ २१ ॥

वर्णाश्रमैककथने श्रमभारैः कथानकैः ॥
धर्माभासकथाभिः किं यथा शंभोःकथां विना ॥२२॥

किमंधकूपमध्यस्थस्तमसा परिवेष्टितः ॥
अन्यानंधान् पूरयेत तथैवान्यकथा मुने ॥ २३ ॥

पुराणेषु प्रकथितैः किन्तु चर्वितचर्वणैः ॥
जन्ममृत्युयुतानां च नराणां मुनिपुंगवाः ॥ २४ ॥

कथाःकथं तारयंति जन्ममृत्युजरायुतान् ॥
श्रीमन्मृत्युंजयस्यैव कथा मृत्युविवर्जितान् ॥ २५॥

करोति जगतां विप्राःशैवाःशैवरहस्यगाः ॥
सुधासागरमध्यस्थाः किन्नुकूपोदकं पिबेत् ॥ २६ ॥

क्षणद्दीणादिनिनदं श्रुत्वा काकरवं तथा ॥
यथा रत्नाकरं प्राप्य काचखंडमपेक्षते ॥ २७ ॥

यथामरेण सदृशः किं मलाशनकृद्भवेत् ॥
यथामृगेंद्रसदृशोवानरः किं द्विजोत्तमाः ॥ २८ ॥

तथा चान्यकथासक्तास्त्यक्त्वा शिवकथानकम् ॥
यथा शिवोमहादेवः सर्वं वेदांतसंस्तुतः ॥ २९ ॥

यथा शिवरहस्याख्यमितिहासवरं मुने ॥
शिवकंठमणिश्चायं पापमोचकमोचकः ॥ ३० ॥

पुरा कैलासशिखरे देव्यै देवेन कीर्त्तितम् ॥
प्राह देवी विरूपाक्षमंबिका परमेश्वरम् ॥ ३१ ॥

॥ देव्युवाच. ॥

शंभो विश्वेश भर्ग त्रिनयन पुरहन् कालकालांधकारे
श्रीशंभो शूलपाणे स्मरहरसुभवान् त्राहि देवान्द्विजांश्च ॥
कथय तव रहस्यं येन मुक्ता त्रिलोकी
निगमशिरसि निष्टं कामदं सर्वसेव्यम् ॥ ३२ ॥

यदि तव करुणाब्धेः शीकरासारपात्रं
मम श्रुतिवरपात्रं त्वं कृतार्थी कुरुष्व ॥
तव चरितमशेषं लोकदुःखापनुत्यै
पुरहर कुरुकर्णे मामकीने दयस्व ॥ ३३ ॥

सुगोप्यमपि शंकर प्रमथनाथ विश्वाधिक
निधेहिमयि तत्स्थिरं चिरमपि प्ररूढं त्वयि ॥
त्वदीय दयया परं प्रकटितांतरंगं मम
त्वदीय चरणांबुजे सकलभक्तिभावैर्युतम् ॥ ३४ ॥

इति देव्यावचः श्रुत्वा प्राह कामांगनाशनः ॥
स्वांकसंस्थां महादेवीं तदंकस्थेन पत्पुरा ॥ ३५ ॥

मया श्रावि कथासिंधुरहस्यं तद्ब्रुवेऽधुना ॥
भवता भवनाशाय भवभक्तिविवर्द्धनम् ॥ ३६ ॥

॥ ईश्वरउवाच. ॥

नादेयं तव विद्यते त्रिभुवने शैलेंद्रजे केवलं
देहार्धेऽधिकृतासि विश्वजननी नीरूप रूपस्त्वया ॥
विश्वं पासि तथाम्बि शक्तिरखिला देवि त्वया शक्तिमा-
नुक्तोहं श्रुतिभिर्निरींद्रिय इति त्वत्तोस्मि देहंगतः ॥३७॥

अपाणिपादोहमलुप्तशक्तिः
पश्याम्यचक्षुश्च शृणोम्यकर्णः ॥
अहंविजानामि समस्तमेत-
त्सदैवसंतं न विजानंति देवाः ॥ ३८ ॥

शीर्णेप्वशीर्णोहमजः शरीर-
हीनोस्मि सर्वोस्मि सदा ह्यसंगः ॥
वेदाश्च वेदांतवचोयतोमे
निवृत्तभावामनसा सहैव ॥ ३९ ॥

कथं पामरावानराकारचेष्टाः
सदाकामलोभादिमात्सर्ययुक्ताः ॥
वराकाः शरावादिहस्ताअटंति
सुराश्चासुराभूसुराः किं लभंते ॥ ४० ॥

त्वमेकाकिनी स्कंदविघ्नेशमुख्या
मदीयप्रकाशप्रभावैकतर्पाः ॥
यतो भावलभ्यैकमूर्तिं महेशं
सदा वेद वेदांतवाचां दुरापम् ॥ ४१ ॥

विजानासि देवि त्वमाद्यं प्रसाद्यं
सदाशुद्धबुद्धं चिदानंदरूपम् ॥
त्रिनेत्रं गराधारकण्ठं सहापं
प्रपश्यंति योगींद्रमुख्या हिराज्ञः ॥ ४२ ॥

अहं लोकगुप्त्यर्थमीशानि देहं
सृजाम्यद्य कामंनिगृण्हामि चाते ॥
शिवे व्यक्तरूपं सुरौघैर्दुरापं
नजानीयुरेतां कथां पामरामाम् ॥ ४३ ॥

शृणु श्रवणभूषणं निगमपारसारस्फुटं
सुगोप्यमपि वर्तते हृदि सुगोप्यमेतत्त्वया ॥
अशांभववरेऽर्पिते न भवति प्ररूढस्तरु-
र्यथैव मरुभूमिगः शिवरहस्यमेतत्तथा ॥ ४४ ॥

सुशांभवसरोवरे विकचरक्तफुल्लाब्जिनी
विकासनदिवाकरः शिवजनैकतोपप्रदः ॥
हृदंतरतमोगणोन्मथितपापमेघानिलो–
विशोषयतु दुष्पथं प्रभवकामपंकं सदा ॥ ४५ ॥

भजंतु सुधियः सदा श्रवणराशिसन्मंगलं
न हीनजनमानसां श्रवणमेतदेव स्फुटम् ॥
ध्रुवं भवति शैलजे निगमसारभूतं मधु
शिवार्चकजनप्रियं मधुलिहस्तएव प्रिये ॥ ४६ ॥

सुशीलगुणसुंदराः प्रवरबुद्धिसाराः सदा ॥
प्रकृष्टरसभावकाभवभवाब्धिसंशोषकाः ॥ ४७ ॥

इति श्रीशिवरहस्ये प्रथमांशे स्वदर्शनं नाम
अष्टमोऽध्यायः ॥ ८ ॥

॥ सूतउवाच. ॥

एवमभ्यागतान् सभ्यान् सदसस्पतिशासनात् ॥
स्कंदास्य विमलोद्गारानिर्गच्छंति शिवाश्रयाः ॥ १ ॥

कथा कापथदुःश्राव्या नारदोऽपि सुरान् ययौ ॥
चक्षुः श्रवाकल्पकथाः श्रवणार्थंदिवस्पतिम् ॥ २ ॥

ब्रह्मेंद्रविष्णुलोकेशान् तदुदंतकथामपि ॥
विष्णवे ब्रह्मणे चैव दिक्पालेभ्यस्तथैवच ॥ ३ ॥

तत्राकथयदीशेभ्योजैगीषव्यप्रसादजम् ॥
महेश्वरस्योदंतंतं श्रुत्वा ते संभ्रमात्सुराः ॥ ४ ॥

कथाश्रवणलोलाक्षानारदेनसमागताः ॥
विनतानंदनारूढोलक्ष्मीपतिरतंद्रितः ॥ ५ ॥

धवलाभ्रनिभोत्युच्चहंसारूढोविधिस्तदा ॥
अभ्यागाद्भारतीनाथो नागारूढोऽमरेश्वरः ॥ ६ ॥

स्वं स्वं वाहनमारुह्य ययुर्देवास्तदा मुदा ॥
तारकारिसदः प्रासानानाभरणभूषिताः ॥ ७ ॥

प्रणम्य ब्रह्मविष्ण्वेंद्राः कृतांजलिपुटाजगुः ॥

॥ देवाऊचुः ॥

स्कंदानिंदितवंदारुवृंदवंद्यपदांबुज ॥ ८ ॥

शिवपुत्रामराध्यक्ष श्रोतुं तवमुखाच्छुभाः ॥
शंभोः शंभुजसर्वस्वाः कथाः शिवरहस्यगाः ॥९॥

श्रोतुं प्रवृत्तामुनिभिर्जैगीषव्येन सादराः ॥
तस्मात्प्रवर्तय शुभाः पापतापनिवारकाः ॥ १० ॥

तदा सुरमुनींद्राणां वचसानंदनिर्भरः ॥
ध्यात्वास्वहृत्पद्मगतं जैगीषव्यमुदैक्षत ॥ ११ ॥

शैवेंद्रानमरेंद्रांश्च प्रोत्फुल्लनलिनास्यकः ॥
उवाच प्रसभं सभ्यान् सदसस्पतिपूजकान् ॥१२॥

भस्मात्रिपुंड्रनिटिलान् रुद्राक्षांगदकंकणान् ॥
शिवपादांबुजव्यग्रचेतसस्तानभाषत ॥ १३ ॥

॥ स्कंदउवाच. ॥

त्वमेव भवभक्तोसि जैगीषव्य शृणुष्वमे ॥
सहैव मुनिभिः सार्धं देवैः शिवरहस्यकम् ॥ १४ ॥

देव्यै देवेन कथितं पापतापविशोषणम् ॥
एवं संवदतां तेशां सिंदुरारुणगंडभृत् ॥ १५ ॥

वारुणेंद्रमहावक्त्रोविघ्नयूथनिवारकः ॥
स्कदाश्रमं तदा प्राप गणवृंदनिशेवितः ॥ १६ ॥

विमानवरमास्थाय कैलासाचलतस्तदा ॥
नंदिभृंगीमहाकालवाणचंडीश्वरादयः ॥ १७ ॥

तुहुंडहुंडलानंदमहानंदाश्च भैरवाः ॥
तुंडकालाग्निरुद्रश्च ये चान्ये गणपोत्तमाः ॥ १८ ॥

सोमनंदिप्रभृतयोगणकोटिवरावृताः ॥
समागतामहेशेन प्रेषितागणनायकाः ॥ १९ ॥

मस्तकांतजटोद्भासिधृतबालेंदुशेखराः ॥
त्रिपुंड्रविलसद्भालारुद्राक्षांगदकंकणाः ॥ २० ॥

महाडमरुनादोत्थहुंकारितदिशामुखाः ॥
तान्दृष्ट्वा सहसोतस्थौ मुनिभिश्च सुरासुरैः ॥ २१ ॥

नत्वा द्विरदवक्त्रं तं दत्वार्घ्यासनमुत्कटम् ॥
संपूज्य मोदकापूपदूर्वागंधाक्षतादिभिः ॥ २२ ॥

तारकारिर्गणेंद्रांस्तान् पर्यष्वजतगाढहृत् ॥
नंदीश्वरादीन् सस्नेहं पूजितास्ते महार्हणैः ॥ २३ ॥

निषेदुः स्कंदमभितोमुनिंद्रानिर्झरागणाः ॥
पश्यंतस्ते प्रांजलयः षडाननवराननम् ॥ २४ ॥

ऊचुस्तेनंदिकेशाद्याः स्कंदं क्रौंचनिषूदनम् ॥
जैगीषव्यस्य तपसा प्रसन्नेन शिवेन हि ॥ २५ ॥

त्वद्वागमृतनिष्पंदकथाश्रवणलालसान् ॥
अस्मान् संप्रेषयामास त्वदंतिकमुमापतिः ॥ २६ ॥

उमांकसंस्थेन पुरा त्वया श्रावि मनोहरम् ॥
शैवं शिवायै कथितं रहस्यं पापभेदनम् ॥ २७ ॥

द्वादशांशयुतं साक्षात् पशुपाशविमुक्तिदम् ॥

वेदस्मृतिपुराणेषु भारतेष्वागमेष्वपि ॥
पशुधर्माश्च मुनिभिः प्रोक्ताःसंसारदायकाः ॥ २८ ॥

पतिधर्मैककथनं विमुक्तिदमुमापतिः ॥
वेदवेदांतसारोत्थकथाः पापनिकृंतनीः ॥ २९ ॥

कथयामास तं देव्यै रहस्यं श्रुतिसंमतम् ॥
जाबालोपनिषत्सारं साक्षाद्धरमुखोदितम् ॥ ३० ॥

तदंतिकप्रदेशेपि नैवास्माकमवस्थितिः ॥
वयंप्राकारबाह्ये वै संस्थितागोपुराग्रतः ॥ ३१ ॥

देव्युत्संगगतेनाद्य त्वया तच्छ्रुतमुत्तमम् ॥
तद्वदास्मभ्यमधुना गोप्यं देवेन कीर्तितम् ॥ ३२ ॥

अपर्णया मुदा तत्र कैलासे शंकरालये ॥
हरींद्रस्यानुषंगेन गणेंद्राश्चप्रसादिताः ॥ ३३ ॥

सुरेंद्राश्च मुनींद्राश्च जैगीषव्यतपस्यया ॥
त्वयि प्रेमास्पदे शंभोः शंभुना प्रेषितावयम् ॥३४॥

जैगीषव्यं पुरस्कृत्य वदास्माकं कृपानिधे ॥
निधानभूतं सद्रत्नं शिवधर्मैकसागरम् ॥ ३५ ॥

इत्थं नंदीशवाक्येन चंद्रोदयइवांबुधिः ॥
प्रहर्षमतुलं लेभे नगाधीशसुतासुतः ॥ ३६ ॥

वचसाह्लादयन्सर्वान् गणेंद्रानमरेश्वरान् ॥
मुनीश्वरान् गजेंद्रास्यं जैगीषव्यंमहामुनीम् ॥ ३७ ॥

उवाच चाग्रजं नत्वा महेशं चांबिकामपि ॥
गजाननं तदास्तौषीत् स्तोत्रेणायंषडाननः ॥ ३८ ॥

कृतांजलिपुटोभूत्वा गणेंद्रसुरभूसुरैः ॥ ३९ ॥

॥ स्कंदउवाच. ॥

पयोनिधिसरोवरोद्विकचपुष्कराभं मुनिम्
मदान्धकविनाशकृच्छिवसुतं सुचन्द्रप्रभम् ॥
त्रिपुण्ड्रतिलकोज्वलं द्विरदवक्त्रकुंभोज्वलं
महेशजनिमर्चकप्रणतविघ्नराजं स्तुमः ॥ ४० ॥

सिन्दूरदूर्वाञ्चितकुंभमौलिं
गण्डस्थली लम्बितचामरौघम् ॥
कर्णावतंसीकृतपद्मकोशं
नमामि विघ्नार्तिहरं प्रसन्नम् ॥ ४१ ॥

करटजमदधारागंधसन्दोहलाभा-
द्भमदलिकुलमालं कर्णसंवातघोषम् ॥
भजतनिगमसारं नागयज्ञोपवीतं
पशुपतिवरपुत्रं विघ्नराजं नतोस्मि ॥ ४२ ॥

सृणिपरशुकराजन्नौमि विज्ञानहेतुं
गणपतिमगजान्तः प्रेमधारारसाढ्यम् ॥
शुभगुडघृतयुक्तैर्मोदकैः प्रीयमाणं
पशुपतिवरपुत्रन्नौमि चेभेन्द्रवक्त्रम् ॥ ४३ ॥

आखुवाहमजशौरिसुरेशैः
सिन्दुरेभवदनम्मुनिवर्यम् ॥
वेदवृन्दनिवहैः स्तुतमार्यं
गद्यपद्यनिकरैः प्रणतोऽस्मि ॥ ४४ ॥

॥ सूतउवाच. ॥

गजास्यमित्थं संस्तुत्य षडास्यस्तारकान्तकः ॥
प्राह तान् प्रमथाधीशान् सुरेशान् भूसुरांस्ततः॥४५॥

जैगीषव्यम्मुनिश्रेष्ठं विशिष्टं शिवसम्मतम् ॥
स्कन्दोगजास्यानुमतं शिवयोःप्राह तन्मतम् ॥४६॥

॥स्कन्दउवाच.॥

ईशानाम्बुनिधेः सुशीकरगणाब्रह्मेन्द्रनारायणा-
स्तेशक्त्यादिमरुत्प्रचारचलितास्तत्सूनुजाः सृष्टयः ॥
तत्सूनुप्रभवानृपादयइमे किं तत्कथाभिः फलं
सम्प्राप्नोति विसृष्टमेव हि महाभूतादिभिस्तन्मृषा
॥४७॥

मिथ्याभूतजगत्प्रचारविहितोधर्मोऽत्र वर्णाश्रमाः
पारावारविचारसारहृदयास्तेषां श्रमः केवलम् ॥
किन्त्वर्वितचर्वणेन विदुषां विद्योद्भवोजायते
यं धर्मोत्तममामनन्ति तपसा सवेद्यएकः शिवः॥४८॥

जैगीषव्यमुखाश्च भूसुरगणायूयं गणाः शाङ्करा
विष्णुब्रह्मसुरेश्वरामुनिगणाः श्रीमद्गणेशाग्रतः ॥
वक्ष्ये तच्छिवयोरपारचरितं श्रुत्वा समाप्नोति शं
कैलासं हरवल्लभं प्रविशति श्रीमन्महेशालयम्॥४९॥

इति श्रीशिवरहस्ये प्रथमांशे स्कन्दशिवगण
संवादोनाम नवमोऽध्यायः ॥ ९ ॥

॥ स्कन्दउवाच. ॥

शिवपादारविंदश्रीर्या श्रियं श्रीपतिं विधिम् ॥
इन्द्रं चन्द्रं सुरानन्यानुत्पादयति सा शिवा ॥ १ ॥

ढुंढिं च नंदिकेशं च तथा भृंगीरिटिं मुनिम् ॥
मार्कंडेयं दधीचिं च दूर्वासं जामदग्निकम् ॥ २ ॥

ॐ जय जय मंगलप्रद सुंदरतम मंगलापते जय जय विश्वविधान संस्थितिलयशिक्षणचण सिंधुरवर कृत्तिवसन मुनिवृंदविनुत निंदितमख संचार सुरवंन्दितगण पुरमार भवशोषण गरलाशन चंद्रचूड भयकंपितमुनिजनशरण अरुणाधिपकरुणाकर भक्तजनरत तरणिस्थित सुरकारण मारशोषण त्रिगुणपोषण चरणं ते शरणं भवतु भवशरणं ॥ ३ ॥ भवप्रत्यक्षीभूतोदयया निगमागमवचनातिग यमिमानसगगनांतरवयुनस्थित भवनाशनोरगवरहारक दहनामलनयन मननातिग वृषवाहन गमनागमनगर्भपातदुःखनिवारक भवनाशन रिपुनाशक सुरभूसुरनिकरावन पितृकाननविहृते दहराकृति कुहराकृति गह्वरभूधरशयन खरकर शीतकरचक्रधरसंस्थित सुरभेदन शरधारण पुरनाशन निगमजगीतोत्तमोरगाधिपकृतसिंजिनीवरधृतकार्मुक नगधृतकुलिशाद्यायुधमुखदैवतभटरक्षणचतुर शरणं भवशरणं त्वमेशरणम् ॥४॥ भवदयया दहनानिलतपनामरवरभूसुरजलनायकरक्षणकर दितिजशमनाऽकृतिविनत कलिताखिलचरण जंगमजगतामवनजननादिकलितोत्तमचरित भरिताऽनवरतचतुर्दशभुवन जनतापहृते विनतात्मजवाहनार्चितचरणकमल जनिताऽनुपमदय विकचा-

म्बुजनिभलोचन रथसंवहनप्रद विधिमौलिजफलकामल रत्नभूषितपादपीठ भगवन् पवनानलबलमारण दुर्जनबलशोरण त्वदाज्ञामृते तृणचालनमपि न भवति निखिलागमशिरःसंस्तुतचरित शरणं भव शरणं नहि भव पादद्वंद्वमृते ॥५॥ भवदयया वरुणालयमथनोद्भवगरलाशन महसा सुरकिन्नरहर बलानहरिसायक रतिनायक सुर शिव शंभो भव नलिनामलशुभकन्धर जलदोपम भगवन् मधुमारण नयनामलनलिनार्चितपदपङ्कज लुलिताम्बुधिचुलुकीकृतघटसम्भवनुतितोषित यतिमानसवरभूषण फणिकङ्कण भगवन् दुरितापह चलितामललतेन्दुकलालवविमलीकृतविश्व शरणं भवशरणं ॥ ६ ॥ भव दयया मखसन्मुखहवननाशन मखतर्पितहविर्भक्षण विबुधवृजाननलिनोत्थितमहिमातिग परिपूजनरहिताऽतुलमन्युकृते मननोत्थितगणवर्जन परितर्जन सुरभर्जन विधिनंदन कृतशिक्षण परिपूरितदुरितांकगजमारण करुणागजाधिप भुजगाधिपशयनार्पित विधिमौलिज कलितजट बलभिन्मत भगदैवतनयनांबुजन शरणं भवशरणं भव शरणं ॥७॥ भव दयया जटिलाऽलक मृगनायक मदपाटन जनितांबुजघटशोभितकटितटसंस्थित निगमागमभटघोषस्तुततुच्छीकृतसुरनायक त्रुटिताखिलजगदुद्भट घटखर्परहारिसंकर्षण पुरदाहन भगवन् पटुताकृति निखिलस्थितिकर तुच्छीकृतभवजलधे भवदागम जगदुद्धाम प्रकटीकृताऽमृतज॰॰ालयवहन त्रिपुरान्तक शमितान्तक शमिनान्वक शमिताखिलदुःख विभो शरणं भव शरणं भवशरणं ॥८॥

भवदयया पवनाशनमणिकंकण गरलाशन शमनय-
मुनानुजभयनाशन सिकताऽशनतनयाऽमलगुण
सत्तम गुणवन्धुरहृदयाऽनन्त मुनिसत्तमविनुतगुणगर्जित
वदनायतशशिधामक सूर्यचन्द्राग्निकृतनेत्र वुधनायक
शिशिरामरवरनायक कुमुदाकरसमदन्त पद्मलोचन
द्विरदाननसुतहर्षद तरुणेन्दुललाट मसृणारुणनखरो-
त्पलकलिकाभूषित सुरजालकमुकुटतटभूपिताननाम्बुज-
पाद शरणं भव शरणं ॥ ९ ॥ भव दययाऽखिलाण्डग
शुकतुण्डजघटनोत्थितमधुरायितमुखतन्त्रजरससरसपदना-
मज मुनिगीतविनोदक कनकाम्बुजजनिताऽखिलजगदण्ड
शशिखण्डनकलिताऽमलशिरसे नमनम् ॥ मृण्डमण्डितो-
रगेश्वरकृतकुण्डल विधिखण्डन शिखिडम्बरकृतलोचन
वडवानलकृतजिह्वक शिखिवाहनकृतबोधन श्रुतिमण्डल
शिरसे पुरदण्डन नगकोदण्डहरिशरकर्पणाऽखण्डलकर-
भजमुनिमण्डलकृतलक्षण खण्डपरशो तण्डुनन्दिगण भृङ्गी
चण्डिकृततालमर्दलजघुङ्घुमध्वनिडमरुडिण्डिमरङ्गनाटन-
परजह्नुजानिर्मलनीरलीरविलसच्छिरोजशिवलिङ्ग शरणं
भव शरणं भवदयया ॥१०॥

इत्यष्टपदैः स्वान्तस्थं तुष्टावाऽष्टाऽकृतिं हरम् ॥
स्कंदोनत्वाथ जगतां मातरं स्तोतुमारभत् ॥ ११ ॥
उदारतरगंभीरपदैर्हृद्यैर्महेश्वरीम् ॥
देववामांकभागस्थां तारकारिः स्वमातरम् ॥१२॥

॥ स्कंदउवाच. ॥

नौमि स्तौमि जगत्प्रसादघटनासंस्थानसम्पादिताम्
लोकालोकनतत्परां भगवतीं मायां महेशाश्रयाम् ॥

विष्णुब्रह्ममरुद्गणेश्वरमहासाम्राज्यदानक्षमा-
मीशांकाविकृतां प्रसादमुखरां कायेन वाचा सदा १३

इन्दुकुन्दकरिमत्तजदन्त-
श्वेतकान्तिविजिताखिलवृन्दाम् ॥
नीलमेघनलिनामलकान्ति
केसरीन्द्रवरभूधरकन्याम् ॥ १४ ॥

वक्त्रदन्तगमनावरकेशै-
र्लोचनेन जघनेन कुचाभ्याम् ॥
पादपंकजरजः परिभूता
नागयक्षसुरमानुपकन्याः ॥ १५ ॥

अंबामंभोरुहाक्षीं नलिनसुवनितापद्मशोभाकरस्थै-
श्चन्द्रक्षीरोदतुल्यैर्विविधहसटैश्चामरैर्वीज्यमानाम् ॥
देवीं शंकरपादपद्मनिरतां कैलासशृंगस्थिता-
मुत्तुंगानतश्रोणिभारनिवहां मध्यं कृशं बिभ्रतीम्॥१६॥

शशिमखनिजदासीभार्यया छत्रवत्या
सितनिभसटसिंहस्कन्धसिंहासनस्थाम् ॥
विधिमुखशिखिवाहप्रेमजानन्दवृष्टिं
दितिजवलनिहंत्रीं भक्षिताशेषदुष्टाम् ॥ १७

सुरवरनतपादां रत्नसिंहासनस्थां
कटितटघृतकाञ्ची रत्नभासा ज्वलन्तीम् ॥
मुनिजनबुधवृन्दध्यातपादारविंदाम्
भवजलधिनिमग्नाशेषदुःखप्रहर्त्रीम् ॥१८॥ ॥

रक्तबीजतुरगारिकधूम्र
चामरादिवरशुंभनिशुंभान् ॥
संनिहत्य रणरंगसमुद्रे
गर्जती किल रराज भवानी ॥ १९ ॥

देवदेव भुवनेश्वरपत्नी
पूजिता निखिलदेवसमूहैः ॥
चंडमुंडवरभंडजमुंडै-
राजि भूमिकमलैरिव देवी ॥ २० ॥

निजचरणसुरक्तानन्तभोगप्रदात्री
सुरनिवहनुताया सच्चिदानन्दरूपा ॥

कोदंडाकृष्टदण्डोच्चलितनरशरासारधारादिभिर्या
भिन्नांगैर्वीरसंघैःस्तुतपदपदवी पातु नः श्रेयसेस्तु ॥२१॥

॥ सूतउवाच ॥

एवं संस्तुवतस्तस्य स्कंदस्यामलचेतसः ॥
प्रादुरासीद्वृषारूढोभगवान् वृषभध्वजः ॥ २२ ॥

नीलकंठस्त्रिनेत्रश्च भोगी भोगविभूषणः ॥
कोटिप्रभाकरोद्भासि मयूखावलिभासितः ॥ २३ ॥

दिशामुखतमस्तोममौलिसोमनिवारितः ॥
चलचामरवातोत्थवेगेनोच्चलितांबरः ॥२४॥

छत्रच्छायावारितोभूद्भानुमानमरीचिमान् ॥
सोमः सहोमयाभ्यागाद्गणसंघसमावृतः ॥२५॥

सुरासुरकरोन्मुक्त पुष्पवर्षौघसंततिः ॥
तद्गंधबंधसंबंधमारुतामोदमोदितः ॥ २६ ॥

विकचत्कमलामोदमालया शोभिविग्रहः ॥
विकसन्निभमुक्तादिमालावलितकन्धरः ॥ २७ ॥

फणाफणिकृतानेकमाणिक्यवरकंकणः ॥
जंगमाद्रिप्रतीकाशवृषारूढोभ्यगाच्छिवः ॥ २८ ॥

मुनिकिन्नरगंधर्वगानधारास्तुतस्तुतिम् ॥
दृष्ट्वा देवं तदोत्तस्थौ स्कंदः सिंहासनात्तदा ॥२९॥

मुनीन्द्रैश्च सुरेन्द्रश्चे गणेंद्रैर्गणपेन च ॥
जैगीषव्येन मुनिना प्रणनाम महेश्वरम् ॥ ३० ॥

दृष्ट्वा नमन्तं स्कंदं तं सगणं समुनिं सुरान् ॥
द्विरदास्यं मुनींद्रं च जैगीषव्यं कृशांगुधिम् ॥ ३१॥

करुणासारया दृष्ट्या चाऽतुलोके सहांबया ॥
पुत्रौ गाढं परिष्वज्य मूर्ध्नि चाघ्राय शंकरः ॥३२॥

उवाच सर्वदेवानां सन्निधौ स्कंदमीश्वरः ॥

॥ईश्वरउवाच.॥

वत्सानया तव स्तुत्या संतुष्टोस्मि सहांबया ॥
धन्यया मान्यया स्कंद त्वं ममातीव वल्लभः ॥३४॥

त्वयास्मद्वदनांभोजाच्छ्रुतं यत्सारमैश्वरम् ॥

शैवं शिवरहस्याख्यं वद मोक्षकथाश्रयम् ॥ ॥३५॥

गणानां च सुराणां च मुनीनां भावितात्मनाम्
जैगीषव्यं पुरस्कृत्य मम भक्तं जितेंद्रियम् ॥ ३६ ॥
मारिष्टं माच ते विघ्नं मम भूयात्कथारसे ॥
यतोविघ्नहरस्तेद्य सन्निधौ वर्तते गणः ॥३७॥
इत्युक्त्वाह महादेवीमालोक्य च हसन्हरः ॥३८॥

॥ईश्वरउवाच.॥

नानास्थावरजंगमादिजन्तुभिर्भ्रांतस्य मानुष्यता
मा ुष्येतति विप्रता श्रुतिगता वाग्विज्ञता तत्परा ॥
इष्टा्ग्रौ ाविधिक्रियादिशतधा वृत्या परःशांभवे
लिंगालिंगनचेतसा महि भवेन्मुक्तस्त ्लिंगःसुखी
॥ ३९ ॥

श्रुतिशतविधिजालकर्ममूल-
त्रिगुणग नागातेसौख्यदुःखशीलाः ॥
मनसिजसुखमानसंगलीला
मननविज्ञारविवर्जनेन वा ·ाः ॥ ४० ॥

नरकमुखमवाप्य चंद्रलोकम्
भवभुवनं समवाप्य मर्त्यलोकम् ॥
पुनरपि जननेन कर्मशेषै-
र्मतिमपि घोरतरां समाप्नुवन्ति ॥ ४१ ॥

किंवेदैरखिलैः पुराणनिचयैरन्योन्यनिंदापरैः
किं वा भारतयुद्धकीर्तनमुमे किं क्षुद्रधर्मादिभिः ॥
यत्रेशानकथाप्रचारविधुरा निःसारभूताः कथाः
काव्येनापि किमत्र रामकथया दुःखोत्कटं यत्फलम्
॥ ४२ ॥

॥ सूतउवाच ॥

कृतांजलिपुटा देवी प्राह शंभुं सनातनम् ॥
महेशं जगदाधारमनाधारं महेश्वरम् ॥ ४३ ॥

॥ देव्युवाच ॥

त्वत्कृपापात्रभूतानां नाशुभं विद्यते हर ॥
त्वत्तः शुश्राव वेदार्थं सारं शैवरहस्यकम् ॥ ४४ ॥

स्कन्दोय.स्कंदितारातिर्विनीतोवीतमत्सरः ॥
रहस्यं यत्त्वया प्रोक्तं मुनीन् श्रावयतु प्रभो ॥४५॥

सुरभूसुरसंघेषु गणेंद्रेषु महेश्वर ॥
प्रसादः क्रियतामद्य श्रवणे योमुनिर्धृतः ॥४६ ॥

जैगीषव्योऽपि मतिमान् तवभक्तस्त्वनन्यधीः ॥
तदा देव्यावचः श्रुत्वा करपंकजमुत्तमम् ॥ ४७ ॥

निदधौ स्कंदशिरसि जैगीषव्यस्य शंकर ः ॥
शंकरश्रीकरस्पर्शाज्जैगीषव्यकुमारकौ ॥ ४८ ॥

नेमतुः शिवपादाब्जं प्रोत्फुल्लहृदयाननौ ॥
स्कंदः शिवपदाब्जं तत्कराभ्यांसंस्पृशन् जगौ
॥ ४९ ॥

अयं मे हस्तमात्रेण स्वनेत्रकमलस्रवैः ॥
अभ्यषिचन् मुदा भक्त्या नान्यं किंचिदमन्यत ५०

स्कंदं प्राहमहादेवः जैगीषव्येक्षणस्तदा ॥५१ ॥

॥ ईश्वरउवाच. ॥

शिवेकिलैषतोषकृन्मुनीश्वरेषु यःप्रियो
विशेषतः कृपाझरीभराकुलेन लोकितः ॥
कलाकुलेन तर्पितस्तथैवचावलांछनो
कटाक्षतोभवेत्त्वयं मम प्रसादपात्रभूः ॥ ५२ ॥

प्रसाद्य सर्वानमरान् गणेश्वरान्
स्कंदं मुनिं चापि महेश्वरस्तदा ॥
जगाम गौर्या जगतां विधाता
संस्तुयमानोमुनिदेवसंघै ॥५३॥

॥इति श्रीशिवरहस्ये प्रथमांशे जैगीषव्य-
स्कंदप्रसादोनामदशमो-
ऽध्याय: १०

---

॥ सूतउवाच ॥

शिवदर्शनजानंदसंदोहानंदकंदल: ॥
प्राह शिवेन संप्रोक्तं मुनिमालोक्य शांकरम् ॥ १ ॥

॥ स्कंदउवाच. ॥

जैगीषव्य शृणुष्वाद्य रहस्याख्यानमुत्तम ॥
शैवंरहस्यं देवेन देव्यै प्रोक्तं कथानकम् ॥२॥

तद्वक्ष्यामि समासेन शृणु त्वं मुनिभिःसह ॥
गणेश्वरैः सुरेशैश्च तत्रादौ कथयाम्यहम् ॥ ३ ॥

नमस्कृत्वाऽप्रमेयाय महादेवाय शंभवे ॥
देवीं गजाननं देवं शैवाचार्यानकल्मषान् ॥ ४ ॥

महेशांशः प्रथमतोनाम्नासौ मुनिसत्तम ॥
जैगीषव्य प्रसादं ते महेशस्य समागमः ॥ ५ ॥

गणानां देवसंघानां मुनीनां च समागमः ॥
मया प्रसादितोदेव स्तोत्रवर्येण सत्तमः ॥ ६ ॥

कैलासवर्णनं चैव विचित्रं श्रीमहेशितुः ॥
देव्यामहेशसंवादः कौतुकेन नगोत्तमे ॥ ७ ॥

चरित्रं शिवयोस्तत्र विचित्रं भूधरोत्तमे ॥
कैलासेश्वरपूजा च महेशस्य प्रकल्पनम् ॥ ८ ॥

द्वारप्राकाररचना गणानां स्थानकल्पनम् ॥
मम देव्याश्च विप्रेंद्र गणेशस्य महात्मनः ॥९॥

सहस्रलिंगाध्यायं च कैलासस्य तपः क्रियाः ॥
तत्प्रसादनमीशेन तन्मौलौ वसतिस्तथा ॥१०॥

कैलासस्याभिषेकश्च शंभुना कल्पितोनगैः ॥
जिज्ञासा चैव देवानां देव्याः प्रादुर्भवात्सुराः ॥११॥

ज्ञानार्थकथनं चैव आत्मलिंगस्य पूजनम् ॥
माहेशेऽस्मिन् महेशेन कथाः प्रोक्ताः शिवेन हि १२

दिक्संख्यया मुनिश्रेष्ठ कथितोऽयं सहस्रतः ॥
द्वितीयोंशोभवोनाम्ना तस्मिन् प्रोक्ता हरेण हि॥१३॥

देव्याश्चैव तपश्चर्यामणिद्वीपागमस्तथा ॥
महासौधप्रवचनं वर्णनं श्रीपुरस्य च ॥ १४ ॥

तस्मात् कैलासगमनं कामेशस्य वपुर्धृतम् ॥
कामेशया च देव्या च तत्र नित्यमवस्थितिः ॥१५॥

हिमाचलागमश्चैव देव्यास्तत्रागतिर्मुने ॥
दुर्वाससोमहिम्नश्च कथनं तत्तपः क्रियाः ॥ १६ ॥

द्वितीये भवसंज्ञेऽत्र कथितं शंकरेण हि ॥
सहस्रतृतीयेनैव श्लोकसार्धेन शंकरः ॥ १७ ॥

हरस्तृतीयोदेवेन कथितोंशोमुनीश्वराः ॥
तस्मिन्मुनिप्रार्थनया व्यासेन परिकीर्तनम्॥ १८॥

गायत्र्याश्च तपश्चर्यादेव्यागमनमुत्तमम् ॥
गणानां प्रेषणं चैव तीर्थेशमहिमा तथा ॥ १९ ॥

श्रीशैलमहिमा चापि मानसार्चनकल्पनम्॥
जनकस्य च संवादोयाज्ञवल्क्येन शंकरः ॥ २०॥

पद्मवत्यारत्ननिधः संवादः परमाऽद्भुतः
तस्योत्तरार्धे चांशस्य पूजा रत्ननिधेस्तथा ॥२१॥

शिवस्य देवदेवस्य महादेवस्य शूलिनः ॥
यमलोकस्य वृत्तांतं दर्शनं शिवयोस्तथा ॥ २२ ॥

संवादोभस्मरुद्राक्षधारणे महिमापि च ॥
गंगायानर्मदायाश्च वरप्राप्त्युपवर्णनम् ॥ २३ ॥

माहेश्वरव्रतं चैव वर्णनं श्रीमहेशितुः ॥
शैवार्चनादिकथनं शिवढुंढिचरित्रकम् ॥ २४ ॥

त्रयस्त्रिंशत्सहस्रोत्र संख्यया प्रोक्तएव हि ॥
चतुर्थः शिवसंज्ञोहि अंशः साक्षाच्छिवोदितः ॥२५॥

बृहज्जाबालधर्मादिकथनं दशकस्य ह ॥
महिमा शिवलिंगानां भस्मरुद्राक्षधारणे ॥ २६ ॥

महिमा शिवभक्तानां शैवानां भोजनेऽपि च ॥
शिवक्षेत्रनिवासस्य कथनं बिल्वपूजनम् ॥ २७ ॥

पूजाप्रभावकथनं तस्मिन्नंशे प्रकीर्तितम् ॥
चतुःसहस्रतः संख्या वेदवोदिता शुभा ॥ २८ ॥

भर्गोनाम्ना पंचमांशः कथितोत्र शिवेन हि ॥
ज्योतिर्लिंगद्वादशानां महिमा तत्र कीर्तितः ॥ २९ ॥

वामदेवोपदेशश्च श्रुतिसिद्धांतकीर्तनम् ॥
गंगासागरमहात्म्यं प्रभासे पुष्करस्य च ॥ ३० ॥

हरिद्वारप्रभावश्च विल्वमूलार्चनस्य च ॥
सहस्रनामकथनं देवदेवस्य शूलिनः ॥ ३१ ॥

महिमा देवदेवेन कथितोऽस्ति विशेषतः ॥
शिवायै षट्सहस्रोऽत्र कथितोमुनिसत्तम ॥ ३२ ॥

शंकरांशस्ततः षष्ठोदिक्संख्या क्रमसंख्यया ॥
कथितः श्रीमहेशेन तस्मिन् रुद्रोपवर्णनम् ॥ ३३ ॥

शिवलिंगार्चनस्यापि भस्मरुद्राक्षधारिणाम् ॥
महिमा शांभवानां च कथितोविस्तरेण हि ॥ ३४ ॥

उग्रोनाम्ना सप्तमोत्र कथितः शंकरेण हि ॥
देवस्य देव्या संवादोनामसाहस्रकीर्तनम् ॥ ३५ ॥

अविमुक्तप्रशंसा च शतार्चनतपःक्रिया ॥
नाम्ना मन्वंतराख्यानं महिम्नः प्रथवे हरः ॥ ३६ ॥

पुष्पदंतमहिम्नाख्यकथनं तत्र सत्तम ॥
काटकोटरजाख्यानं क्षेत्राणां महिमा तथा ॥ ३७ ॥

श्रीशैलस्याऽरुणाद्रेश्च तथा वृक्षाचलस्य च ॥
श्रीमद्दक्षिणकैलासमहात्म्यमपि विस्तरात् ॥ ३८॥

पुंडरीकपुरस्यापि कांच्याश्रीमहिमाऽद्भुतः ॥
कुंभकोणप्रशंसा च तथा मध्यार्जुनस्य च ॥ ३९ ॥

चतुर्द्दशसहस्रेण कथितोत्र शिवेन हि ॥
भीमोऽष्टमोमहांशोत्र कथितोविस्तरेण हि ॥४०॥

दिङ्नागसंख्यया चैव सहस्रेण मुनीश्वर ॥
पाताललोकलिंगानां महिमाकथनं मुने ॥ ४१ ॥

श्रीहाटकेशमहिमा शेषस्यात्र तपः क्रिया ॥
प्रसादश्च महेशस्य तस्य भूभारधारणे ॥ ४२ ॥

सदाशिवांशोनवमस्तस्मिन् शंभोः कथानकम् ॥
शिवेनोक्तं महादेव्यै नामसाहस्रमुत्तमम् ॥ ४३ ॥

कलौशैवसमाचारप्रमाणेन विमुक्तिदम् ॥
महाशांभवधर्माणां कीर्तनं परिकीर्तितम् ॥ ४४

षड्वक्त्रस्य सभाश्चैष्टचं सहस्रेणैव कीर्तितम् ॥
ईश्वरांशोत्र दशमः देशधर्मानुकीर्तनम् ॥ ४५ ॥

बिल्वार्चनं रुद्रजपः पंचाक्षरमहोदयः ॥
शिवलिंगार्चनस्यापि भस्मरुद्राक्षकीर्त्तनम् ॥ ४६ ॥

शांभवानां शिवक्षेत्रशैवभक्तार्च्चनं तथा ॥
शिवनाम्नः स्मृतश्चापि दशमे महिमाद्व्यः ॥ ४७ ॥

तस्मिन् प्रकीर्तितोविप्र शंकरस्याख्यसंख्येयां ॥
एकादशोमहादेवः प्रोक्तोंशः शंभुना तदा ॥ ४८ ॥

मुनेत्र क्रमसंख्यातः शिवपूजा क्रमात्मकः ॥
आभिषेचनिकानां च फलं पुष्पेषु कीर्तितम् ॥४९॥

भक्तीनां दशकानां च कीर्तनं पूजनं तथा ॥
मुनिसंख्याऽस्य ग्रंथस्य चेशोनाम्नात्र द्वादशः ॥५०॥

शिवनाम्नां सहस्रस्य कीर्तनं तत्र कीर्तितम् ॥
प्रसादः शंकरस्यापि ममैवानुग्रहात्मकः ॥ ५१ ॥

शिवरत्नाकरकथा महात्म्यं मुनितोषणम् ॥
एतदध्यायसाहस्रैः कीर्तितं श्रीशिवेन हि ॥ ५२ ॥

देव्यै देवेन कथितं रहस्यं शिवसम्मितम् ॥
यथा शिवसमोदेवोनास्ति लोकत्रयेष्वपि ॥५३॥

तथा शिवरहस्यस्य तुल्यमन्यन्नविद्यते ॥
शैवसारमहारत्नकोशोयं मुनिसत्तम ॥ ५४ ॥

पुण्योयं पावनश्चायं भक्तिसारकथाश्रयः ॥
संसारायासधर्माणां कथनेन विवर्जिताः ॥
वर्णाश्रमकथाख्यानवृथाश्रमाविवर्जिताः ॥ ५५ ॥

अत्याश्रमोऽतिधर्माणामाकरोयं महामुने ॥
नानाकथासुधाः शैवाः परमानन्दनिर्भराः ॥ ५६ ॥

देव्यै देवेन कथिताः शतसाहस्रतोधिकाः ॥
भक्तैः श्राव्योयमतुलइतिहासवरोत्तमः ॥ ५७ ॥

शैवसारमहारत्नसर्वस्वोयं मुनीश्वर ॥
स्कंदे गजानने गौर्यायथाप्रीतिर्महेशितुः ॥ ५८ ॥

तथा शिवरहस्येपि गोप्याद्गोप्यमिदं शुभम् ॥
न देयं नैववक्तव्यमभक्तेभ्यस्त्वया मुने ॥ ५९ ॥

शपथः पदयोर्विप्र नोचेन्मूर्धाद्य ते पतेत् ॥
वेदान्तसारसर्वस्वं शिवभक्तिप्रकाशकम् ॥ ६० ॥

देयं भक्ताय विप्राय पुत्रायात्यन्तरागिणे ॥
वक्तव्यमनहंकारचित्तायात्मगुणाय च ॥ ६१ ॥

शैवाय शंभोरुत्कर्षभक्तियुक्ताय ते मुने ॥
संवत्सरोपोषिताय भक्तायान्तेनिवासिने ॥ ६२ ॥

त्रिनेत्रचिन्तापात्राय नान्यस्मै सत्यमुच्यते ॥६३॥

॥ स्कन्दउवाच. ॥

जगाद जगतां गुरुस्त्रिजगतां जनित्रींमुदा
जगत्त्रितयजंतुहृत्त्रिविधतापदुःखापहम् ॥
जडस्य जगतः स्थितिप्रलयभावभावं भवं
व्यशोषयदिदं मुहुः शिवरहस्यरत्नांशुमान् ॥ ६४ ॥

तदेव भवते वक्ष्ये भवदावाग्निशोपकम् ॥६५॥

विधुन्तुदमुखोत्थितप्रकटसोमधामप्रभा
विकासितदिशामुखप्रथितपांडिमानोपमाम् ॥
सुधामपि बुधापरं इचनवक्त्र व्यासंजनां
विधूयसुरलोकगाः परिपठंति शंभोः कथाम् ॥६६॥

अनाथ जननाथितं प्रकथयाम्यहं सुन्दरं
गिरीन्द्रवरकन्यकाहृदयनाथपादांबुजम् ॥
मनोरथपथातिगंप्रथितभक्तिभावं सदा
सुभक्तजनमुक्तिदं सुदृढमोहशोकच्छिदम् ॥ ६७॥

क्षमारथरथांगकस्फुटसुपाणिवाणासनो
हिरण्यनगकार्मुकः सकलविश्वनाथोऽधुना ॥
सएव सुखसंपदां निधिरपारपुण्यास्पदः
सएव सुकृती सदा यजतिवेद वेदान्तगम् ॥ ६८ ॥

सएव विबुधार्चितः प्रचुरधर्मसाराधिकः
सउरामउसागरावसनमेदनीदानकृत् ॥
क्षणार्धमपिकादरः शिवरहस्य धर्मश्रवाः
सएव गणनायकः शिवपादाब्जयुग्मार्चकः ॥ ६९ ॥

ॐ नमःशिवाय.

# शिवरहस्य.

प्रथमांश

सुरासुरचराचरप्रभवनाशरक्षाक्रमै-
र्विशांपतिरणत्कलिप्रभवयुद्धदुःखोद्भवैः॥
श्रमैकरसधूर्गतैर्विविधवर्णधर्माश्रमैः
कथाभिरिह नश्वरं न भजति श्रुतिशेखरम् ॥ ७०॥

तुषाद्रिरपि खंडितः किमिहलभ्यते तंडुला-
स्तथा शिवकथां विना नहि सुखं विमुक्तं मनः ॥
शैवानंदरहस्यसागरमहाद्वीपोपमाद्वादश
तेंशाःशाश्वतशंकरेण विहितानामानि तेषां ब्रुवे॥७१॥

माहेशःप्रथमस्ततोपि हि भवोहारश्चतुर्थः शिवो-
भर्गः शंकरउग्रभीमइति च प्रोक्तस्तथैवांशकः ॥

नाम्ना चैव सदाशिवेश्वरमहादेवेशसंज्ञाक्रमात्
ग्रन्थैः पद्यमहाघमौलिभिदुरैर्वेदान्तसारातिगैः ॥
शब्दैःसुंदरवाग्विलासमधुरैरध्यायवृन्दैः शिवः
साहस्रैश्च शतैः सहस्रकिरणाकारैस्तथा शंकरः॥७२॥

दिगूलोकामरवृन्दवेदऋतुभिर्दिगूनागतः संख्यया
मद्वक्त्रामलनीलनीरजसमैर्नेत्रक्रमैः शंकर-
स्यास्याक्षिक्रमशोमुनिक्रममथोदेव्यै शिवेनाकथि

॥ ७३ ॥

इति श्रीशिवरहस्ये प्रथमांशे स्कन्दजैगीषव्य-
संवादे द्वादशांशकथनं नाम एकादशो-
ऽध्यायः ॥ ११ ॥

॥ सूतउवाच. ॥

जैगीषव्याय यत्प्रोक्तं स्कन्देनामिततेजसा॥
कैलासापारसौधानां गोपुराणां नगस्य च ॥ १ ॥

प्रमाणं लिङ्गसंघानामालयानां च निर्मितिम् ॥
शिवेन निर्मितं साक्षात् मनसैवातुलोपमम् ॥ २ ॥

## ॥ स्कन्दउवाच. ॥

शृणुष्वाद्यमहाभाग कैलासस्थानमुत्तमम् ॥
शृणुष्व शैलं शिखरैः शंभोरावासमुत्तमम् ॥ ३ ॥

सर्वगस्यापि देवस्य महादेवस्य शूलिनः ॥
महाकैलासमित्युक्तं शिवतत्वार्थवेदिभिः ॥ ४ ॥

ईशानगणमुख्यस्य कैलासदक्षिणाश्रमम् ॥
अयं मुनेऽमरेन्द्राणां निवासोमेरुरुन्नतः ॥ ५ ॥

प्रविष्टःषोडशाधस्तात् द्वात्रिंशन्मूर्ध्नि विस्तृतः ॥
वृषस्तंभमयोभाति महाकैलाससन्निधौ ॥ ६ ॥

कैलासादपि पूर्वस्यां पञ्चाशच्च सहस्रकैः ॥
योजनैः प्राक्स्थितोमेरुर्नानासुरगणाश्रयः ॥७॥

ज्वलज्ज्वनलसंकाशः कनकोत्तमपर्वतः ॥
सहस्रयोजनोत्सेधं विद्धि मेरुं सुरालयम् ॥ ८ ॥

षट्षष्टिःकथितोयोगिनूर्ध्वायामैकमूलतः ॥
लक्षयोजनमानेन कैलासोधरणिधरः ॥ ९ ॥

कुलाचलाः सप्तशतं प्राकाराः परिखास्तथा ॥
प्राकारस्यांतरालेषु सप्तद्वीपाः ससागराः ॥ १० ॥

सप्ताब्धयः सुधाभोधिकल्लोलामलवीजिताः ॥
कोटियोजनमानेन कैलासोभूधरोमहान् ॥ ११ ॥

सर्वतोराजतेऽत्यन्तं पञ्चाशल्लक्षमानतः ॥
सप्तपातालमूलांतः सप्तलोकान्तरालयः ॥ १२ ॥

महाराजतभूभागश्चंद्रकोटिसमप्रभः ॥
नाग्निर्नविद्युन्नोसूर्यस्तत्तेजः सदृशोनहि ॥ १३ ॥

चतुर्दशमहालोकानुच्छ्रायःशिखरैः स्वयम् ॥
मध्ये सुधासागरस्य फेनमंडोपमस्थितः ॥ १४ ॥

नहरोनहरिर्धाता महेंद्रश्चैव देवताः ॥
न सुपर्णोरगायक्षानगंधर्वादितेः सुताः ॥ १५ ॥

नवीक्षितुं शक्नुवन्ति किंपुनर्गतिरंजसा ॥
तत्प्रभाभिहतालोकाहराजहरयोद्विज ॥ १६ ॥

तत्तेजसा प्रतिहताः सूर्येन्दुपवनानलाः ॥
सुधासागरकल्लोलैः कैलाशस्पर्शवायवः ॥ १७ ॥

पुनंति लोकानखिलान्विष्णुब्रह्महरामरान् ॥
सुरासुराणां गमनं न तत्र मनसापि हि ॥ १८ ॥

न वेदवचनैः शक्योमहाकैलाशपर्वतः ॥
तल्लेशलेशमहिमा कः शक्तोवक्तुमप्यणुम् ॥ १९ ॥

सहस्रवदनः शेषः सहस्राक्षोपि नेक्षते ॥
किंपुनर्मानवाः क्षुद्रावराकास्ते सुरासुराः ॥ २० ॥

शतं कुलाचलामुख्याः प्राकाराइव संस्थिताः ॥
महद्भिरुच्छ्रितैः शृंगैः केचिद्गोपुरवत्स्थिताः ॥ २१ ॥

तदंतरांतरालेषु परिखाकृतयोब्धयः ॥
ततोपिसप्तप्राकारं शंभोरंतर्गृहं परम् ॥ २२॥

प्राकारभूतास्ते शैलास्तान् शृणुष्व द्विजोत्तम ॥
कुमुदः पारियात्रश्च मैनाकः पूर्वदिग्गतः ॥ २३ ॥

दक्षिणे मलयोविंध्यः पश्चिमे योगिपुंगव ॥
उदयास्ताचलौ शृंगो उत्तरस्यां दिशि स्थितः ॥२४॥

नीलोदक्षिणकैलासोहिमवान् दक्षिणे स्थितः ॥
विगाह्यावहिताः सर्वे अब्धिभिः सर्वतोदिशम् ॥२५॥

द्वीपाब्धयस्ते परिखाः सप्तसैव पर्वताः ॥
तेषु तेष्वन्तरालेषु विहरान्ति दिवौकसः ॥ २६ ॥

गंधर्वाप्सरसः सिद्धानागयक्षाः सुपर्णकाः ॥
किन्नराः पुरुषाः पुण्याविद्याधरसचारणाः ॥ २७॥

मुनयोगणसंघाश्च नानाभूमैकभूमयः ॥
ततोपि विष्णुब्रह्माद्याईशानारुद्रमूर्तयः ॥ २८ ॥

विहरन्ति पयोंभोधिप्राकारवरमाश्रिताः ॥
स्वादूदकाब्धितीरे च ततोपि प्रमथाधिपाः ॥ २९ ॥

ततोपि रत्नप्राकारोदशसाहस्रयोजनः ॥
तद्रत्नकांतिधाराभिर्मंडितं भुवनत्रयम् ॥ ३० ॥

मत्तकोकिलनृत्याढ्यस्तत्रास्ते रत्नपर्वतः ॥
शतयोजनउच्छ्रायः पद्मरागोनगोत्तमः ॥ ३१ ॥

मयूखमालाविततस्तन्मयूखतिरस्कृतः ॥
चंद्रकांतमणिः प्रोद्यत्प्राकारोस्ति तदंतरः ॥ ३२ ॥

पञ्चाशच्च सहस्रैश्च योजनायामतोद्विज ॥
सोमांशुशतधाराभिर्नित्यपीयूषधारवान् ॥ ३३ ॥

तत्कांतिसारधाराभीरंजितास्तत्र भूमयः ॥
हीरसारमहातारधाराव्याप्तोनगोत्तमः ॥ ३४ ॥

दशसाहस्रमानेन तत्रास्ते हीरकोद्यगः ॥
इंद्रनीलामलमणिप्राकारोस्ति तदंतरे ॥ ३५ ॥

पंचाशत्सोपि मानेन नीलनीलाऽमलद्युतिः ॥
नैर्मल्यगर्भसौंदर्यधाराधारैकभूमयः ॥ ३६ ॥

तत्रास्ति पर्वतवरइंद्रनीलशिलोच्चयः ॥
नीलनीरदसंश्लिष्टविद्युल्लेखान्वितच्छविः ॥ ३७ ॥

दशसाहस्रविस्तारः परिणाहेऽपि तादृशः ॥
हरिन्मणीन्द्रप्रवरप्राकारोस्ति तदंतरः ॥ ३८॥

तन्मणींद्रप्रभाभासिर्हरिताएव भूमयः ॥
प्रवालपर्वतस्तत्र विंशत्साहस्रमुन्नतः ॥ ३९ ॥

विंवामललसत्कांतिकान्तोभूधरनायकः ॥
तदंतरेऽपि प्राकारोगोमेदमणिकल्पितः ॥ ४० ॥

त्रिंशत्साहस्रमानेन मधुपिंगलसुंदरः ॥
तत्रोच्चः पर्वतोविप्र कुरुविंदमणिप्रभः ॥ ४१ ॥

पक्षसंख्यासहस्रेण शिखरैश्चापि तादृशः ॥
तस्यांतरोपि प्राकारोपुष्परागशिलाश्रितः ॥ ४२ ॥

चत्वारिंशत्सहस्राणि योजनोन्नतिमानतः ॥
तस्यामलछविगणैः सदृशास्तत्र भूमयः ॥ ४३ ॥

तत्रापि भूधरश्रेष्ठोमुक्तामणिशतैश्चितः ॥
उन्मत्तकोकिलोतुंगलोचनामलसच्छविः ॥ ४४

तदंतरेत्विषाकारोविंशत्साहस्रमानतः ॥
तत्विषाचाभितः सर्वाः पीतीभूतदिगंतराः ॥ ४५ ॥

वैडूर्यानिकसूत्रोत्थधारारसविजृम्भिताः ॥
भूमयस्तत्र शोभंते विस्मयानां स्मयप्रदाः ॥ ४६ ॥

तत्रास्ति पर्वतवरोनवरत्नयुतच्छविः ॥
कश्चिन्मरकतस्वच्छलहरी हरिताकृतिः ॥ ४७ ॥

क्वचिद्विद्रुमसंकाशः संध्याघननिभः क्वचित् ॥
क्वचिद्धीरकजात्यच्छफलमूलसमच्छविः ॥ ४८ ॥

क्वचिद्वैडूर्यसूत्रोत्थभाभासितदिगंतरः ॥
उन्मत्तकोकिलाक्षाभःकुरुविंदनिभः क्वचित् ॥ ४९ ॥

पुष्परागरसोप्युद्यद्रागरक्तोऽरुणः क्वचित् ॥ ५० ॥

तृणग्राहिमहानीलनीलल्लोहितभोपमः ॥
क्वचिद्गोमेदकास्फारमधुधारासमच्छविः ॥ ५१ ॥

मुक्ताकांतितिरस्कारी श्लक्ष्णनैर्मल्यभायुतः ॥
स्वच्छाच्छस्फटिकोपांतबिंबिताखिलदिक्तटः ॥५२॥

नानारागमयूखैश्च इंद्रचापनिभः क्वचित् ॥
तत्रास्ति मंडपवरं नानाचित्रविचित्रितम् ॥ ५३ ॥

पद्मरागमणिस्तंभस्तंभपीठमनोहरम् ॥
सिंहशार्दूलशरभगजहंसशुकाकृतिः ॥ ५४ ॥

व्यालशुंडानालिन्यादिचित्रचित्रितविस्मयम् ॥
एकैकरत्नसंक्रांतनीलछायैकभासुरम् ॥ ५५ ॥

पंक्तिशः स्तंभसाहस्रैर्नवरत्नपरिष्कृतैः ॥
आपादपीठजश्लक्ष्णसोपानंगुष्टभीतिकम् ॥ ५६ ॥

स्वच्छादर्शतलप्रायभूमिभागैकरंजितम् ॥
तत्तत्स्तंभप्रभाज्योत्स्ना प्रभाकरशतप्रभम् ॥ ५७ ॥

न सूर्यचंद्रौ काशेते वन्हिनक्षत्रविद्युतां ॥
तिरस्कृताःप्रभास्तत्र न रात्रौ न दिवा क्वचित् ॥५८॥

एवं लक्षस्तंभयुतामंडपास्तत्रकल्पिताः ॥
पर्यंतगोपुरोत्तुंगरत्नसौधायुतैर्वृताः ॥ ५९ ॥

सहस्रलक्षफलकस्तंभकुंभैर्युतामने ॥
गोपुराणां प्रमाणं तु मनसापि न शक्यते ॥ ६० ॥

नानारुद्रावतारादिगणकल्पितविग्रहाः ॥
मूर्तयोदेवदेवस्य देव्यावाहनसंयुताः ॥ ६१ ॥

स्कंदहेरंबनंदीनां सप्तलोकांतमुच्छ्रिताः ॥
गोपुराणां तलैर्दिव्यैर्विस्तारायामलक्षकम् ॥ ६२ ॥

लिंगोद्भवस्तत्र पार्श्वे वृषवाहस्ततः परम् ॥
त्रिपुरत्वक्शरीवीतः क्वचित्सांबः सपुत्रकः ॥ ६३ ॥

स्कंदहेरंबसहितः क्वचिद्गणगणैर्वृतः ॥
उमार्धविग्रहश्चापि नृत्यटोपयुतः क्वचित् ॥ ६४ ॥

वामांगदक्षिणांगेषु जनार्दनविधिः क्वचित् ॥
देवीपरिणयाकारः क्वचिद्भिक्षाटनाकृतिः ॥ ६५ ॥

शूलासक्तकरश्चापि मृगपाणिः पुरारिहा ॥
अंधकासुरसंहारदक्षिणामूर्तिरूपनृक् ॥ ६६ ॥

मुनीनां ज्ञानदः सिद्धिचिन्मुद्रापरिचिन्हितः ॥
तत्पूरुषवामदेवाईशानाघोरसंज्ञकाः ॥ ६७ ॥

बालेंदुमुकुटाः सर्वे कपर्दवरशोभिताः ॥
रत्नाभरणभूषाढ्यामूर्तयः शंकरस्य हि ॥ ६८ ॥

दिक्पालपालिभिश्चैव तत्तद्रागमणिप्रभैः ॥
कल्पिताः परमेशेन शिवलीलाविचित्रिताः ॥६९॥

पर्यंतस्फाटिकायेच वृपानीलविलोचनाः ।
महाशृंगैकमुकुटघंटामणिविभूषणाः ॥ ७० ॥

गोपुरोर्ध्वगताः सर्वे महाहीरकशृंगकाः ॥
प्राकारराजवृत्रभामहार्हमणिकल्पिताः ॥ ७१ ॥

तलानां कोटिभिश्चापि गोपुराणां प्रकल्पनैः ॥
गोपुराग्रमहारत्नकलशैस्तुल्यतारकैः ॥ ७२ ॥

दोधूयमानोज्वलिताः समीरणपताककाः ॥
तत्रगर्भगृहं शंभोर्नवरत्नान्वितोज्वलम् ॥ ७३ ॥

तत्रास्ति मणिपीठोद्यश्चंद्रस्फाटिकसन्निभम् ॥
महालिंगं महाकारं रत्ननागफणान्वितम् ॥ ७४ ॥

महारत्नवने जातफुल्लमालाविभूषितम् ॥
सुवर्णखचितानेकबिल्वचंपकपूजितम् ॥ ७५ ॥

शंभुना च महादेव्या लोकानुग्रहकाम्यया ॥
समर्चितं त्रिकालेषु प्रदोषेषु विशेषतः ॥ ७६ ॥

तत्रस्थरत्ननिर्यातकांतिभिर्दीपितं तदा ॥
तत्रवाद्यानि कुर्वंति गणाः शंभोर्महात्मनः ॥ ७७ ॥

काकलीमुरजापारमड्डुडिंडिमझर्झराः ॥
शंखमर्दलभेर्यश्च निःसाणपटहानकाः ॥ ७८ ॥

गोमुखाः स्वस्तिकातालावेणुवीणानिनादिताः ॥
रुद्रकन्यासहस्राणि नाट्यंकुर्वन्ति तत्र हि ॥ ७९ ॥

हावभावमनोज्ञानि पेशलालापवंन्ति च
यौवनोन्मादधारीणि रणितांघ्रिस्थनूपुरैः ॥ ८० ॥

स्फुरद्रत्नजटाटंककपोलामलसत्प्रभाः ॥
धूपामोदैकबहुलगंधायितदिशांतराः ॥ ८१ ॥

नंदिप्रोत्सारितगणास्तत्रास्ते शङ्करोंबया ॥
पूजितं तं महालिंगं पश्यन् रत्नैः सुपूजितम्॥ ८२ ॥

रुद्रकन्याकराब्जोत्थनखक्कणनघट्टितम् ॥
वीणामुखोत्थगांधर्वगानंशृण्वन्सदांबया ॥ ८३ ॥

शिव शिव शिव शंभो चंद्रमौलेऽमलात्मन्
हर हर गुरुभारं शांभवान्मोदयस्व ॥
वितर परममुक्तिं संसृतिर्माकिदाचित्
भवतु भव भवाब्धेस्तारकं त्वां प्रपन्नाः ॥ ८४ ॥

एवं शंकरनामसारसुधया झाव्यन् गणान् शंकरः
भर्गप्रेमयुतान् शिवावदनकांभोजभ्रमत्षट्पदः॥८५॥

॥ ईश्वरउवाच.॥

कैलासेश्वरलिंगमेतदमलं दृष्टं सकृत्पूजितं
मामप्याशुसुधार्द्रसारहृदयं कर्तुं प्रवृत्तं शिवे ॥
इत्यंबावदनं निरीक्ष्य भगवान्प्रोवाच साक्षाच्छिव-
स्तल्लिंगालयदर्शनं न सुकरं पुण्यैरगण्यैरपि ॥८६॥

नोपश्यन्ति सुरासुराः प्रमथपाविष्णुर्विधिर्नेश्वराः
पश्यत्येव महेश्वरोगिरिजया स्वं लिंगमत्यादरात् ॥
भोगिभोगफणामणिप्रविलसल्लिंगैकमौलौलस-
च्चंद्रासारकरप्रचारजनितानंगप्रभावोज्झितम्॥ ८७ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णनं नाम
द्वादशोऽध्यायः ॥ १२ ॥

॥ सूतउवाच. ॥

कैलासेश्वरलिंगस्य महादेवः सनातनः ॥
वरिवस्यां स्वयं चक्रे सर्वज्ञोह्यपि शंकरः ॥ १ ॥

॥ मुनयऊचुः ॥

सकथं सर्वपूज्योपि भगवाञ्जगतां पतिः ॥
कैलासेश्वरलिङ्गस्य पूजनं कृतवान् वद ॥ २ ॥

॥ सूतउवाच ॥

एवमेव पुरा पृष्टोजैगीषव्येन शांकरः ॥
तमाह विनयानंदं देवसेनापतिः पुरा ॥ ३ ॥

॥ स्कंदउवाच ॥

साधुपृष्टं त्वया विप्र तत्वं वक्ष्यामि साम्प्रतम् ॥
देवदेवस्य चरितं शृण्वतामघनाशनम् ॥ ४ ॥
ससर्वगोप्यघोरात्मा सर्वाकारतया स्थितः ॥
लिङ्गार्चनं हि सर्वेषां विमुक्तिदमितिद्विजाः ॥ ५ ॥
स्वयं करोति भगवान् अम्बिकापतिरीश्वरः ॥
भुक्तिदं मुक्तिदं चेति सर्वेषां बोधनाय हि ॥ ६ ॥
संसारसागरे मग्नान् समुद्धर्तुं महेश्वरः ॥
कार्यं सुरासुरैश्चैवं विष्णुब्रह्ममरुद्गणैः ॥ ७ ॥
देवैर्मुनीन्द्रैर्गणपैर्द्विजैश्चैवाथ शांकरैः ॥
पूजैव परमं श्रेयइति दर्शयितुं शिवः ॥ ८ ॥

स्वयं देव्या महादेवः पूजां लिङ्गे करोति हि ॥
तल्लिङ्गपूजनं देव्या शिवेनाकारि तच्छृणु ॥ ९ ॥

प्रातः संगवमध्यान्हप्रदोषेषु मुनीश्वरः ॥
नंदिकेशादिगणपैरुद्राणीभिः सदाशिवः ॥ १० ॥

पूजाप्रकल्पनं शंभोः शंभुना वरिवस्यया ॥
कैलासेश्वरलिङ्गस्य पूजनं तच्छृणुष्व मे ॥ ११ ॥

सप्तसागरपात्रोत्थरसधारादिभिः शिवः ॥
गणानीतैश्च संभारैर्मनसाकल्पनाक्षमैः ॥ १२ ॥

पूजया भोगमोक्षौ च सर्वेषां च प्रदर्शितुम् ॥
करोत्युपचितः शंभुः कैलासेश्वरपूजनम् ॥ १३ ॥

॥ जैगीषव्यउवाच ॥

तत्पूजनप्रकारं मे कथय,श्रवणोत्सुकम् ॥
एभिर्मुनिवरैर्देवैर्गणैरुद्रैश्च विशेषतः ॥ १४ ॥

॥ स्कंदउवाच ॥

शृणु त्वं देवदेवेन कैलासेश्वरपूजनम् ॥
यथा कृतं महेशेन शृणु त्वं मुक्तिदायकम् ॥१५ ॥

श्रवणेनापि भक्तानां सर्वेषां मुक्तिदायकम् ॥
शृणुष्वैकमना विप्र त्वमेभिर्भूसुरैः सुरैः ॥ १६ ॥

गणाद्यैर्नंदिकेशाद्यैरम्बिकापतिपूजनम् ॥
देवदेवेन कथितं पृच्छत्यै शंकरेण हि ॥
तद्वक्ष्यामि समासेन शृणु त्वं पापनाशनम् ॥ १७॥

स्नात्वा कैलासगङ्गातटमणिकलिते मण्डपे शम्भुरीशो
देव्यानन्दीशमुख्यैर्गणवरसहितोभस्मनोद्धूल्यगात्रम् ॥
कृत्वाभालतले त्रिपुण्ड्ररचनां बालेन्दुमौलिःस्वयं
रुद्राक्षामलहारकण्ठवलयः पञ्चास्यपञ्चाक्षरः ॥ १८ ॥

तत्रेशानवरस्य पञ्चमुखकं योगीन्द्रपञ्चानने-
शानस्येश्वरलिङ्गमद्भुततमं तत्पञ्चवक्त्रेश्वरम् ॥
तद्वक्त्रामलतोझरीभररमैः पञ्चापगानिःसृता
कैलासाचलनिम्नगा तटगता सद्रत्नसोपानकाः॥१९॥

दिव्यापारशिवालयस्थितमहार्लिंगैकसङ्घाकुला-
स्तीरेषु प्रथितोरुमंडपमणिक्लृप्तैः सुधाब्धिप्लुताः॥२०॥

नानाबिल्ववनैरपारतरुजैः फुल्लप्रसूनाकुलै-
श्शोभिद्वारकुलैश्च मन्दिरकुलैरक्तच्छदैर्हल्लकैः ॥
काकानां च कुलैः सुकच्छपमहामीनैर्बकानाकुलैः
स्तोकैःपोतकचक्रवाककुररैः पुण्यैश्च सत्सारसैः
॥ २१ ॥

॥ स्कंदउवाच ॥

तत्तीरामलमण्डपे मणिमहाकूमे सुसिंहासने
देव्या नन्दिगणेश्वरैर्हरवरोपश्यन् सरिन्निर्झरीः ॥
लिङ्गं पंचमुखेश्वरं मधुरिकामोचाफलैः शंकर-
स्तद्वक्त्रामलपङ्कजोद्भवनदीपुण्यैर्जलैरीश्वरः ॥ २२ ॥

॥ ईश्वरउवाच ॥

प्रालेयाचलमिन्दुकुन्दधवलङ्गोक्षीरफेनप्रभम्
भस्माभ्यङ्गमनङ्गदेहदहनज्वालावलीलोचनम् ॥
विष्णुब्रह्ममरुद्गणार्चितपदं ऋग्वेदनादोदयम्
वन्देऽहं सकलङ्कलङ्करहितं स्थाणोर्मुखं पश्चिमम्॥२३॥

गौरं कुङ्कुमपङ्किलं सतिलकं व्यापाण्डुगण्डस्थलम्
भ्रूविक्षेपकटाक्षवीक्षणलसत्संस्रस्तकर्णोत्पलम् ॥
स्निग्धं विम्बफलाधरं प्रहसितन्नीळाळकालङ्कृतम्
वन्दे याजुषवेदघोषजनकं वक्त्रं हरस्योत्तरम् ॥२४॥

वालार्काग्नितडित्प्रदीप्तकनकप्रस्पर्द्धितेजोऽरुणम्
गम्भीरध्वनिसामवेदजनकन्ताम्राधरं सुन्दरम् ॥
अर्द्धेन्दुद्युतिलोलकुञ्जरजटाभारप्रवृद्धोदकम्
वन्दे सिद्धसुरासुरेन्द्रनमितम्पूर्वं मुखं शूलिनः



कालाभ्रभ्रमराञ्जनद्युतिनिभं व्यावृत्तपिङ्गेक्षणम्
कर्णोद्भासितभोगिमस्तकमणिप्रोद्भिन्नदंष्ट्राङ्कुरम् ॥
सर्पप्रोतकपोलशुक्तिशकलं व्याकीर्णकर्णोत्पलम्
वन्दे दक्षिणमीश्वरस्य वदनञ्चाथर्वनादोदयम् ॥२६॥

व्यक्ताव्यक्तनिरूपितञ्च परमं शुद्धांगुसत्त्वाधिकम्
यस्मादुत्तरतत्त्वमक्षरमिदन्ध्येयं सदा योगिभिः ॥
ॐकारादिसमस्तमन्त्रजनकं सूक्ष्मातिसूक्ष्मं परम्
ध्यायेत्पञ्चममीश्वरस्य वदनं खव्यापि तेजोमयम्
॥ २७ ॥

एतानि पञ्चवदनानि महेश्वरस्य
ये कीर्तयन्ति मनुजाः सततम्प्रभाते ॥
गच्छन्ति ते शिवपदं रुचिरैर्विमानैः
क्रीडन्ति शंकरगणैः सततं शिवाग्रे ॥ २८ ॥

इत्युक्त्वा निरगात्ततो सुरसरित्तीरात्तदांदोलितै-
र्हारैस्तैर्भुजगेश्वरप्रकलितैरत्नाञ्छसत्पादुकः ॥
कैलासेश्वरवामसुन्दरमहानन्दैकसारास्पद-
न्दृष्ट्वा लिङ्गवरं प्रदोषसमये सम्पूज्य पूजाभरैः २९

प्राद्योत्फुल्लगुरुकपङ्कजलसद्वक्त्रोभवानी हरः
पश्येति प्रसभन्मदीय महिमारम्भैकपूजाभरम् ॥३०

॥ ईश्वरउवाच ॥

कुम्भैरम्भोधराच्छच्छाविजितधवलैः पूरितैः क्षीरवार्द्धौ
पर्वोद्यच्छशिसन्निभैः स्फटिकजैः कोट्यावधैः संख्यया ॥
तत्क्षीरोत्तममण्डसारसुभगैः सिञ्चामि लिङ्गं मम
कैलासेश्वरनायके जनिजरारोगापहे शङ्करे ॥ ३१ ॥

आनीतं मम तत्पयोम्बुधिभवं वीरैर्गणेन्द्रैः शिवे
स्वच्छं शोभनगंधयुक्तममृतं श्रीपार्वतीशप्रियम् ॥
सद्वृत्तामलधारया जनगतस्तुष्टः प्रदोषेष्वहम्
कष्टानि प्रसभं हरामि सुकृतां राशिन्दिशामि क्षणा-
त् ॥ ३२ ॥

सिञ्चन् लिङ्गसुपूजकोपि गिरिजे तस्मादहं पूजये-
दध्यम्भोनिधिसम्भवन्निविडितन्तत्खण्डदभ्रापि च ॥
प्रोतण्डिडिममण्डलाभमगजे दत्वापि लिङ्गोत्तमे
गोदोहप्रथिते प्रदोषसमये सन्दारिताघौघकम् ॥ ३३

कार्यम्पूजनमेतदेव समये सर्वैः सुरैरन्वहम्
भोगादिप्रदमेवमेवविधिना भक्तिप्रदं ज्ञानदम् ॥
तल्लिङ्गं परिपूजयामि वसुधापृक्धुर्यमौलौ शुभे
उत्तुङ्गामलरत्नकुम्भविलसत्याज्याज्यधारादिभिः ३४

अम्भोधिप्रभवैः समाहृतजलैः संख्यातिगैस्तद्भवै-
स्तन्नाज्यैश्च फलैश्च गन्धसुभगैर्गन्धीकृतास्तादिशः ॥
सिञ्चामि प्रसभं सुगोधृतवनैः कैलासलिङ्गम्मम
मध्वम्भोधिसमाहृतम्मणिघटैर्माध्वीकसारम्मधु ३५

गर्भोयन्मणिसारकान्तिसुभगं गोमेदकाच्छप्रभम्
सिञ्चाम्यद्रिवरात्मजे सुमधुरं माध्वीकगर्भं मधु ॥
धाराः श्रेष्ठमदीय लिङ्गशिरसि हर्षेण पश्याम्बिके
शैलोद्दामशिखाऽद्रिशेखरमिताऽउत्तुङ्गगण्डोपमाः ३६

प्रालेयाचलमौलिसारसुभगां चापाण्डुरां शर्करां
दत्वा तां मम लिङ्गमौलिविलसच्चन्द्रांशुधारासमाम् ॥
हर्षात्सावितमन्तरं प्रतिदिनं हृष्यामि पश्याऽद्रिजे
कुल्यास्तत्र मनोरमाद्रितनये नारेलनीरोद्भवाः ॥ ३७

ताभिःसम्भृतसद्घटैश्च विततैर्लक्षैः प्रवाहाकुला
तल्लिङ्गाभिषेकनीरात्प्रवहति मधुजा देवगङ्गेति नाम्ना ॥
तुङ्गाच्छौघतरङ्गभङ्गसुभगा तस्यां रतास्ते सुरा
देवश्रीपतिपूजिते सुललिते लिङ्गस्य सेवां मुदा ।३८।

सप्तच्छदाच्छफलशैलवराद्रिकन्ये
क्लृप्तोमया सुरगुरुः पितरश्च यक्षाः ॥
तुष्टाभवन्ति हि कृते शशिखण्डमौलि
लिङ्गार्चनेऽस्य फलमेव पुनर्भवोन ॥ ३९ ॥

उत्तुङ्गसालसुरसालरसालसारै-
र्निष्पतहेममञ्जरिसोदरगर्भजातैः ॥
तल्लिङ्गसेचनमुमे सुरसैः करोमि
पुंसामपि प्रमथनाथपदं ददामि ॥ ४० ॥

देवं श्रीपतिपूजितं सुललितं लिङ्गैकसारम्मुदा
स्फारं सारमहारसादिकलशैः संस्नापयाम्यम्बिके ॥
कैलासाचललिङ्गमौलिविलसल्लिङ्गैकसद्भूषणम्
लिङ्गन्त्वेतदपारगन्धललितैर्नीरैश्च गन्धोदकैः ॥ ४१॥

इक्षुसागरमहोर्मिभिरीशो
लिङ्गमौलिरयमेव विशिष्टः ॥
सिक्तये घटसहस्रसुगन्धैः
कारितो गिरिसुते कमनीये ॥ ४२ ॥

कोशैः काननसम्भवैर्मधुझरीसारातिसारैः स्फुटं
निर्यत्पीततरातिकान्तिनिवहैर्गन्धीकृताशामुखैः ॥
तत्कोशामलराशिभिर्गिरिसुते संछन्नमैशं शिरः
पश्यामि प्रथितेक्षणःप्रकटिते पुण्ये प्रदोषे मम ॥४३

कस्तूरीघनसारकुङ्कुममहापाटीरसारैर्घटै-
श्चन्द्रासारविलोलिताम्बुघटितैः सत्पाटलामोदितैः ॥
श्रान्तामे गणपुङ्गवाश्च नितराम्पुण्ये प्रदोषे मम
स्वाद्वच्छामलनीरधारितघटोद्वाहैः परं शैलजे ॥४४॥

शंखानाञ्च सहस्रकैर्मणियुतैर्गोशृङ्गधारादिभिः
क्षीराज्यादिमधुप्रवाहजदधिप्रष्टैश्च तैलैरपि ॥
तैर्गन्धोत्तमपिष्टलेपनगतैः श्रीचिक्कणाघर्षणैः
श्रीपत्रैर्मृदुसारसूक्ष्मतृणकैरुन्मञ्जुगव्यैरपि ॥ ४५ ॥

सौवर्णोत्तमकुम्भसम्भवमहाधारासहस्रैः शतै
रर्घ्यैरत्नसुवर्णकल्पितकुशाग्रेन्दूद्भवैस्तज्जलैः ॥
अष्टाङ्गार्घ्यककल्पितैः सुमधुरैर्गर्भाम्बुकुम्भैः शिवे
सौवर्णैः स्फटिकोद्भवैरपि तथा ताम्रादिधातूद्भवैः॥४६

संसिच्याखिलमिन्दुकुन्दजमहापाटीरसत्पाटला
मोदैश्चाम्बुदसन्निभैश्चकलशैः सूर्यप्रभोद्दामभिः ॥
धूपैश्चापि महामधूत्थमधुपाकासारपारैरपि
काश्मीरागरुगन्धपुञ्जविमलश्रीसंयुतैः सुन्दरैः ॥ ४७

कैलासेश्वरलिङ्गमूर्द्धिसततन्धाराभिरद्भिस्तदा
सञ्जाते रुचिरे प्रदोषसमये पूजाविधावुत्सुका: ॥
रुद्राणां स्तवनेन मामपि शिवे सन्तोषयन्त: स्थिता
मूर्तास्ते विहिताग्रग्रन्थककरानिश्वासभूताममम ॥ ४८

मदीयरजताचलप्रकटशाङ्किभाराशयो
गणाश्च मम सुन्दरि प्रकटचन्द्रकान्त्युज्ज्वला: ॥ ४९

घनरसमृगनाभिसारधारा
मृगमदपाटलशालिचन्द्रगन्धै:॥
घुमघुमितसुगन्धगन्धिताशा
मुखमुखरै: परिलिप्य लिङ्गमेतत् ॥ ५० ॥

परिहृष्टोनितराम्भवामि गौरि
त्रिदशालभ्यसुगन्धयक्षधूपै: ॥
मणिजालकस्वर्णरत्नचित्रै:
परिधायामलस्वर्णसद्दुकूलै: ॥ ५१ ॥

शिवलिङ्गम्मम शैलराजकन्ये
परिपश्यामि सुगन्धगन्धिवस्त्रै: ॥
ब्रह्माण्डगोलकमुमे प्रभया न तुल्यं
मल्लिङ्गगोलकवरोत्तमरत्नधाम्न: ॥ ५२ ॥

सारावधूतशशिमौलिकलाललाम
तद्रत्नमौल्यकलने न विधिर्न विष्णुः॥
सर्पाधिपोप्यगसुतेऽथ विकुण्ठिताक्षो
भास्वत्फणामणिसहस्रविधारकोपि ॥ ५३ ॥

प्रभाततसभावलीमणिगणादिकांन्त्यायुतं
त्रिपुंड्रनिटिलोल्लसत्तिलकिताच्छसत्सुंदरम्
प्रपश्यगिरिकन्यके विमलमौलिलिङ्गं मम ॥ ५४ ॥

सहस्रमुखसत्फणाप्रवरमौलिमाणिक्यभा
युताविजितकान्तिभिर्ममसुभोगिसंवेष्टितैः ॥
फणाच्छडिकताम्वरच्छविजिताच्छसच्छत्रकं
शिवे शिरसि मे सदा दधति लिङ्गमौलौ मम ॥५५॥

नानामणिद्युतिसरावलिभूषितन्त-
न्मल्लिंङ्गमेव कमलाच्छदशम्प्रपश्य ॥
पुण्ये प्रदोषसमये मुदितः सदाह-
न्तल्लिङ्गमध्यभवने महिमास्थितोहम् ॥ ५६ ॥

विकसितपद्मरत्नकञ्जमाला
नवनीलोत्पलजा सहस्रमाला॥
मधुवन्धुरगंन्धदिव्यगन्धैः
सितमंन्दारजरक्तमालिकाभिः ॥ ५७ ॥

दिनान्तसमयोल्लसन्मधुरगन्धजातीसरै-
र्वसन्तकलिकास्फुरन्मधुरगन्धमल्लीसरैः ॥
विकुण्ठितमिदम्मम प्रकटसोमधामप्रभा
प्रयुक्तमगकन्यके विमलद्रोणमालायुतम् ॥ ५८ ॥

कदम्बवननीपजस्फुरदपारमालाभरै-
र्विलोलवरपीठकप्रकटमौलिलिङ्गं शिवे ॥
प्रपश्य नयनां चलैर्विकचमञ्जरीकप्रभैः
प्रदोपसमयेम्बिके नयनजन्मनस्तत्फलम् ॥ ५९ ॥

तद्बिल्वरक्तकमलैरमलैर्भवानि
पुन्नागनागनवचम्पकदूर्वयापि ॥
नीलोत्पलैर्दमनकैः करवीरजाति-
द्रोणार्ककाशयवकैःकनकैःसमर्च्य ॥ ६० ॥

सत्पुंण्डरीकवकुलैर्धवकर्णिकार-
माधूककुन्दकुसुमैरतिहर्पितोहम् ॥ ६१ ॥

राजीवामलमालिकोत्थमधुपैः पश्याम्बिके पूजितम्
एतल्लिङ्गवरम्प्रदोपसमये विल्वच्छदोत्तंसकम् ॥
सुरत्नमणिकल्पितैरतुलभूपणैर्भूपितम्
धत्तूरेण हि शोभतेद्यनितराम्मौलिस्थचंद्राधिकम् ६२

अगरुतरुजातधूपधूमैर्बकुलामोदविकासिदिक्समूहैः ॥
मरुदाकुलँल्लम्बितोरुधाराविकसत्स्वर्गपथाप्रचारजालैः॥६३॥

सुवर्णमणिभाजनैः शशिनिभोद्यदंभोजिनी
प्रियांशुचयराङ्कमप्रकटदाक्ष्यरत्नांशुभिः ॥
मनोरथपथातिगैर्मम सुलिङ्गमालायितैः
सुपाण्डुरशशिच्छवीहिमतुषारकुन्दप्रभैः ॥ ६४ ॥

सुचन्द्रवरखण्डकैर्विरचितोरुदीपावली
सुगोघृतसुवर्तिकोज्वलसुदीपजालैरपि ॥
गृहाङ्गणतमस्ततिप्रबलदारणात्यारै-
रखण्डतरमण्डनैःप्रथितपद्मंहंसोपमैः ॥ ६५ ॥

सुतारकगणावलीललितमुक्तजालप्रभै-
र्विलोकय गिरीन्द्रजे मम सुमौलिभास्वत्करम् ॥६६॥

नानाभक्ष्यमहाद्रिगन्धसुरसैश्चामोदिताशागणैः
सुस्वाद्वन्नजराशिभिश्च घृतजैःसूपप्रवाहैःशिवे ॥
शाकैःशैलनिभैर्मधुप्रमथितैःक्षीरादिदध्योदनैः
प्रालेयाचलसन्निभैःसुगुडकैर्नैवेद्यकैःशाङ्करि॥६७॥

नारिकेलवकुलैःसुकपित्थैर्मातुलिङ्गकदलीसुरसालैः
॥६८॥

खर्जूरैर्वदरीफलैश्च सुभगे जम्बूरसैर्दाडिमैः
कङ्कोलामलकैःसुरादनफलैराजादनैर्जातिकैः
नादेयेक्षुजकाण्डकैर्गिरिवराज्जाते मुदे मे भवेत्॥६९

ताम्बूलैः खदिरैर्लवङ्गमुखरैर्जातीफलैलायुतै-
र्मुक्ताचूर्णसुपूर्णपूगमधुरैः कर्पूरसम्वासितैः॥
उत्फुल्लामलनागवल्लिजदलैःप्रोद्यद्गिरीन्द्रप्रभे
नैवेद्यम्परिकल्पयामि गिरिजे तस्मिन्प्रदोषेप्यहम्७०

वीणानिक्वणमंजुमंजुलसुधाधारासमैर्गायनै-
स्तन्नामामृतमीश्वरेश्वरि मुदा रुद्राणि निःकल्पितम्॥
शंभो शङ्कर धूर्जटे त्रिनयन कालान्धकारे हर
पाहीश प्रमथाधिनाथ महिमाल्लिङ्गकृते पाहि नः७१

रत्नैः कल्पितमर्दलध्वनियुतैः शङ्खोत्थनादैःशिवे
प्रोद्यत्काहलिनिस्वनैर्मधुरितैस्तन्मण्डुडिण्डीरवैः॥
दुन्दुभ्याघातनादैर्मम गणवरगास्योरुनिश्वासरागै-
र्वेणोरन्ध्रनिपेवणांगुलिभवैस्तालैश्च सज्झल्लरैः॥७२॥

तुष्टोहम्प्रथिते प्रदोषसमये तल्लिङ्गसेवादरो
नान्यत्किञ्चिदवेदिषंत्रिजगतां व्यापारमेवाद्रिजे॥७३॥

रङ्गेतुङ्गतरंगभंगचपलैर्नृत्यैर्महामर्दले-
र्वीणावेणुनिनादसामलयतोनृत्यन्ति लिङ्गाग्रतः॥
रुद्राणीगणकोटयोत्र सुभगे मञ्जीरसिञ्जत्स्वनै-
श्शंभो शंकर साम्ब पाहि शिव नस्तूर्णं प्रसादं कुरु
॥ ७४ ॥

इत्येवं सुभगेविलासमधुरैर्हावैश्च भावैरपि
उत्कान्ताङ्गककांतिपुञ्जविलसत्पूर्णेन्दुसाम्यानना ॥
कुम्भाव्यक्तसुकुम्भसन्निभकुचाकांञ्चीझणानिस्वना-
स्तालोत्थाहतिपादपद्मजरवैःकुर्वन्ति विद्युत्ध्वनिम्
॥७५॥

गणेशकरदोर्लतैर्विविधलोकसाम्राज्यधृ
र्विविक्तकृतलांछनैःशशिसमानमुक्तातते: ॥
महोडुगणमौक्तिकप्रकटतारपंक्तीततै-
र्गिरीन्द्रतनये धृतैरमितछत्रकैर्मद्गणैः ॥७६॥

वरटारमणस्य कामिनीगोत्थितपक्षाहननाभचामरौघै-
गणवृन्दैरखिलैश्च सेव्यमानम्मम लिङ्गालयधूननैः
शिवेद्य ॥ ७७॥

प्रवालमयदण्डिनामलयशैलभूमारुत
सुपोततरवायुना नगवरारिपाणीजुषा ॥
रयेन चमरीमृगप्रचलवालगुच्छात्मना
सुवीजितमुमे तदा ममसुलिङ्गमत्यादरात् ॥ ७८ ॥

धृतैःप्रमथपाणिभिर्वनकलापपिच्छोच्चयैः
कृतैर्व्यजनकोटिभिर्हरितचन्द्रकोद्यंशुभि- ॥
मदीय मणिमण्डपोहरिमणिप्रभाकल्पितैः
शिवेयगिरिजे तदा प्रथितभाभिरादीपितः ॥ ७९ ॥

प्रमथप्रकरोत्थहस्तसंस्थैर्मणिवर्यैर्विविधैर्गुणाग्रलम्बैः ॥
विलसन्नवरत्नगुच्छसङ्घैर्धुवदीशानकराग्रगैःपताकैः॥८०॥

लिङ्गप्रक्रमणैरहंसइतितल्लिङ्गप्रमाणम्मुदा
स्वात्मानम्परिचिन्तयामि गिरिजेप्यानंदधारावृतः ॥
वृत्युत्थाखिललोकजालमखिलं मत्तोन भिन्नं कचि-
न्नानेति प्रसभम्वदंति निगमावाचाम्मनोदूरगम्॥८१

अत्यानन्दमुमे मदीयममलञ्जानन्ति नो योगिनो
नो वेदायतयः सुरासुरगणाविष्णवादयोप्युज्वलाः ॥
ज्ञानञ्ज्ञेयमिदं शिवेखिलमुमे लिंङ्गोप्यलिंङ्गोस्म्यह-
माकाशादिविदूरगः स्थितिलये सृष्टावसङ्गोस्म्यहम्
॥८२ ॥

इत्येवं परमार्थतस्त्रिभुवने तिष्ठामि विश्वातिगो
गोप्यम्मद्धृदयङ्गिरीन्द्रतनये तुभ्यम्मया दर्शितम् ॥
इत्युक्त्वा परमेश्वरस्त्रिजगताङ्नाथोपि विश्वातिगो
दृष्ट्वा लिङ्गमपारबिल्वकुसुमैःसम्पूजितम्मस्तके ॥८३

दृष्ट्वा तामगजां तदाति परमानन्दप्रसादैकभूः
कैलासाचलमौलिमण्डपवरे तल्लिङ्गसान्निध्यके ॥८४

अण्डखण्डनमहाघनघोपश्चण्डताण्डवलसद्विधिरुण्डः॥
कुण्डलीशकृतकुण्डलगण्डस्तण्डुमड्डुनिननोत्थलयांघ्रिः
॥ ८५ ॥

नन्दिभृङ्गिकृतडिंडिमनादैर्मण्डितोहि शिवया सहिरङ्गः॥
ढुण्ढिराजकृतशंखनिनादैस्तुण्डपट्टककृततूर्यनिनादैः८६

जटाच्छटाविघर्षिताः परिपतन्ति तारागणाः
वमन्ति रुधिरम्मुखैर्भुवनगायकास्वर्जनाः॥
जगन्नटनसंभ्रमोभवति हंतआन्दोलितो-
हरीन्द्रविधयः सुरामुनिजनाःसकम्पाकुलाः॥ ८७ ॥

अष्टावक्रसुगीतसाममुरजाचण्डप्रचण्डोल्लस-
ड्डिण्डीमध्वनिमण्डुमर्दलमहासामाष्टदंष्ट्ररवैः॥
भ्राजत्पद्मजमुण्डपण्डजमहामाल्लालसद्वक्षसं
लीलाचालितहस्तकङ्कणमहानागोर्ध्वमौलिंशिवम्८८

रत्नाप्लावितकान्तिराङ्कितदशन्नृत्यन्तमैक्षच्छिवा
श्रीमद्देवपतिं ललाटशशिनं शोभान्वितम्सुन्दरम् ॥
उद्यद्भानुमरीचिसन्निभजटासाम्राज्यपादायितं
लीलानीलसुरक्तपङ्कजलसद्भङ्गातरङ्गोत्थितम् ॥ ८९॥

पारावारसुधाघनोत्थनटनव्यालाफणामण्डलं-
मानम्राखिललोकजालमुमया सद्रत्नरङ्गान्तरे ॥
नृत्यन्तन्ददृशुः सरुद्रगणपाः कैलासमौलिस्थितम्
झल्लाझल्लितकङ्कणम्पदचलत्सन्नूपुरं सत्प्रभम् ॥९०॥

किणाकिणिमणिध्वनिस्फटिकरत्नसन्मेखलम्
घुणाघुणकृतारवम्पदगरत्नमञ्जिरकम् ॥
चटच्चटरवोत्थितप्रपदपद्मघोषं शिवम्
त्रिकोत्थितमहारवप्रकटदिग्विमोहं स्फुटम् ॥ ९१ ॥

लोकत्रयोद्गतसुरासुरकिन्नराद्यं
मन्दस्मिताखिलविमोहनवेषभूषम् ॥
राजच्छशाङ्कमहसा धवलीकृताश-
न्तन्नीललोहितमुमा जगदादिहेतुम् ॥ १२॥

नृत्यन्तमिष्टदमुपासितपञ्चवक्त्रम्
श्रीलोचनत्रयविभूषितरङ्गनाथम् ॥
अष्टाकृतिन्निखिलकष्टहरम्प्रदोषेऽ-
पश्यच्छिवासुकरुणारससारदृष्ट्या ॥ १३ ॥

तां वीक्ष्यागसुतां स्मयन्निव महादेवस्सकैलासभूः
कैलासेश्वरपूजया सरसया कष्टानि संजघ्निवान् ॥
लोकानाङ्गणपात्मनामथसुमाम्प्राहप्रसन्नाननः
पश्याम्बेति वदन्सदाशिवतरोमुग्धेन्दुचूडः शिवः १४

॥ शिवउवाच ॥

कैलासेश्वरलिङ्गमेतदमलम्मुक्तिप्रदं शाश्वत-
मापातालनिमग्नमूलमसकृत् सम्पूजितन्तन्मया ॥
तस्योर्ध्वामलमौलिमूलमगजे जानन्ति नैवागमा
देवाद्यैर्मुनिभिस्त्वयापि च मया कोवास्ति तत्पूजकः १५

पूज्यापूज्यप्रतीतिशब्दरहितस्तत्केवलोहं शिवे
वेदातीतगुणोऽगुणोपि सकलोनिर्द्वन्द्वएवामलः ॥१६॥

तथापि तल्लिङ्गवरं सदाऽयश्चकास्तिमच्छैलवरे सदाम्बिके ॥
तद्दर्शनार्थम्मुनयस्सुरासुरास्तिष्ठन्तिचाद्यापिजरायुविह्वलाः ९७

॥ देव्युवाच ॥

त्वयापि नज्ञायतइत्यहोमे साश्चर्यमुक्तं हि त्वया सदाशिव ॥
तथापि तत्त्वीकृतलिङ्गपूजया रहस्यमेतन्ममतद्वद प्रभो ॥९८

॥ सूतउवाच ॥

इत्युक्तङ्गिरिजामनोहरवचःश्रुत्वाप्रहस्याधिका
लोकं स्रष्टुमथातिपातुमखिलन्तत्पालकः शङ्करः ॥
वाचाचन्दनशीतयासुखकरःशीतांशुधारीशिवः
प्राहोत्फुल्लमनोहराब्जवदनोदेवीन्तदा भूतये ॥ ९९ ॥

॥ ईश्वरउवाच ॥

न कर्मभिर्नैव समाधिभिर्जपै-
स्तपस्यया वा विविधैश्च यज्ञैः ॥
व्रतैश्च दानैर्नियमैर्यमैश्च
प्राप्योम्बिके मत्पदपूजनं विना ॥ १०० ॥

तस्मादहं लिंगवरं सदा प्रिये
सम्पूजयामीष्टदमेव लोकान् ॥
संरक्षितुं कार्यमिदं विमुक्तैय
सर्वार्थदश्चेति मतम्मुदे मम ॥ १०१ ॥

ध्यायामि तद्वेदशिरोविगम्य-
मोङ्कारगम्यम्परमार्थतत्वम् ॥
सत्यं शिवञ्ज्ञानसुखं सुबोध-
न्निर्द्वन्द्वमक्षुब्धमनन्तरूपम् ॥ १०२ ॥
एकं स्थिरं शाश्वतमव्ययन्त-
त्प्राक्सृष्टितोविश्वमिदन्न यत्र ॥
संवीक्षितन्तत्पुनरुद्बभूव
तदेव जाये हृदि भावयामि ॥१०३॥
यस्मात्परन्नापरमस्ति किञ्चि-
द्यस्मादणीयोन हि किञ्चिदस्ति ॥
येनैव पूर्णम्परिदृश्यमानं
विश्वन्तदेवाद्यविभावयामि ॥ १०४ ॥
इत्युक्त्वा गिरिजाम्महाशिववरोध्यायन्परं स्थाणुव-
न्निर्व्यापारतरङ्गसागरइवाक्षुब्धाक्षगात्रश्शिवः ॥
देवीचापिमुमोदहर्षभरितानन्दाङ्कास्तेगणाः
सर्वेसुन्दररूपधारिणअथ ध्यानाचलाक्षेन्द्रियाः ॥१०५
इत्थन्तस्य सुपूजनङ्गणवरात् श्रुत्वा महामुक्तिद-
म्मुक्तिः प्राप्यतएव नात्र विषये सत्यं वदामि स्फुटम्
॥१०६॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासेश्वरप्रदोष-
पूजावर्णनन्नाम त्रयोदशोध्यायः ॥१३॥

॥ मुनिदेवगणाऊचुः ॥

कुमार शरसंभूत मारमाराङ्गसंभव ॥
उमारमणपादाब्जध्यानमारितपातक ॥ १ ॥
अमरारिमहाशूरतारकासुरसंहृते ॥
त्वत्तः श्रुतमशेषेण कैलासेशस्य पूजनम् ॥ २ ॥
भववक्त्रोत्थितशिवकथानन्दितमानसाः ॥
निर्धूतपातकाजाताधन्याः पावनपावनाः ॥ ३ ॥
पुनश्शिवकथासिन्धुतरङ्गोध्यतमानसान् ॥
कुरु त्वन्त्रिपुरारातिवरपुत्त्रातुलप्रभ ॥ ४ ॥

॥ सूतउवाच ॥

इत्थन्देवैश्च मुनिभिर्गणेन्द्रैः प्रार्थितस्तदा ॥
कुमारः प्राह तान्धन्याञ्जैगीषव्यम्पुरः स्थितम् ॥ ५ ॥
परिणतहिमधामकान्तवक्त्रोविकचत्पद्मविलोचनोनगारिः ॥
नवचम्पकसुन्दराननाभः कुरुविन्दाभरदो बभाणविप्रम् ॥ ६ ॥

॥ स्कन्दउवाच ॥

पर्णादामुनयस्सर्वे अपर्णापतिवैभवम् ॥
तूर्णमभ्यर्णगास्सर्वे समाकर्णयतानघाः ॥ ७ ॥
सुपर्णवाहनाद्याश्च पूयङ्कर्णरसायनम् ॥
अर्णवान्तर्निवसतेश्चरितं वर्णयाम्यहम् ॥ ८ ॥
महाकैलासभूभागे पञ्चकोटिप्रमाणके ॥
शैलप्राकारमध्ये तु गणानां वसतिः कृता ॥ ९ ॥

नवलक्षप्रमाणेन पूर्वद्वारादिगोपुरम् ॥
नीलशैलजसारेण नानारुद्रगणान्वितम् ॥ १० ॥

यष्टिका पिण्डिकाद्यैश्च देवकोष्टैश्च शोभितम् ॥
दशसाहस्रफलकैर्गवाक्षितमिव स्थितम् ॥ ११ ॥

वृषभैश्च शिलाराजद्रुद्ररूपैः परीवृतम् ॥
नन्दीश्वरालयन्तत्र हेमरौप्यविराजितम् ॥ १२ ॥

नानासौधतलोपेतं वनवाटिविराजितम् ॥
सहस्रस्तम्भसय्युक्तम्पताकोज्वलकुम्भकम् ॥ १३ ॥

कक्ष्या गवाक्षविततं सिंहासनवरान्वितम् ॥
तत्रस्थनन्दिकेशानं स्वर्णवेत्रलसत्करम् ॥ १४ ॥

नवरत्नप्रभाभास्वत्किरीटाकल्पशोभितम् ॥
सोमधामसमानास्यं राजद्बालेन्दुशेखरम् ॥ १५ ॥

चतुर्भुजमुदाराङ्गन्त्रिपुण्ड्रोज्वलफालकम् ॥
भस्माभ्यक्तजटाशोभिमस्तकं रत्नकुण्डलम्॥ १६ ॥

मुक्तान्तरितरुद्राक्षमालाशतविराजितम् ॥
अपर्णापतिपादाब्जध्यानपूतहृदन्तरम् ॥ १७ ॥

गणेन्द्रैश्च मुनीन्द्रैश्च सुरेन्द्रैर्नारदादिभिः ॥
गन्धर्वाप्सरसां सङ्घैरुद्रैर्नागैश्च सिद्धकैः ॥ १८ ॥

उपासितम्महात्मानमिन्द्रेण मरुता तथा॥
सेवितन्नन्दिकेशानम्प्रमथैः परिवारितम् ॥ १९ ॥

तत्रालयन्महेशस्य नवरत्नविचित्रितम् ॥
हेमप्राकारसम्पन्नन्नानावृषभशोभितम् ॥ २० ॥

गर्भागारन्तत्र शम्भोः स्फटिकोपलनिर्मितम्॥
नन्दीश्वराभिधं लिङ्गन्तत्रास्त्येकम्मनोहरम् ॥२१॥

दर्शनस्पर्शनेनापि पापसंघनिवर्हणम् ॥
धूपैर्दीपोपहाराद्यैर्भक्ष्यैर्भोज्यैश्च नित्यश : ॥ २२ ॥

कमलैरमलैश्चैव नीलोत्पलसहस्रकैः ॥
विल्वचम्पकपुन्नागनागधत्तूरपाटलैः ॥ २३ ॥

सहस्रविल्वपत्रैश्च पञ्चामृतनिषेचनैः ॥
सुगन्धागरुधूपैश्च दीपैः कर्पूरखण्डनैः ॥ २४

पूजयन्तन्महेशानन्नन्दिकेशं शिलामयम् ॥
स्तोत्रैःस्तुवन्तमीशानन्त्रिकालं सावधानतः ॥ २५॥

तत्स्तुतिङ्कथयाम्यद्य तन्मुने शृणु सादरम् ॥२६॥

॥ नन्दिकेश्वरउवाच ॥

इन्दुखण्डललितामलमौले कुन्दकान्तिसदृशसमदेह ॥
इन्दिरारमणलोचनपूज्यमन्मनोगहनपङ्कजवास॥२७॥

॥ स्कन्दउवाच. ॥

इत्थं स्तुवन्तन्तल्लिङ्गम्प्राचीप्राकारसौधगः ॥
संस्थितस्सुयशानाथोगणकोटिपरीवृतः ॥ २८ ॥
निषधोहेमकूटश्च प्राकूप्राकारस्य पर्वतौ ॥
पञ्चलक्षप्रमाणेन तत्रैवाग्नेयगोपुरम् ॥ २९ ॥
रुद्रावतारचरितैर्वृषभैश्शिखरैर्वृतम् ॥
तत्रालयोम्बिकेशस्य गणेन्द्रस्य महात्मनः ॥ ३० ॥
लिङ्गाकारस्तत्र शम्भुः सुकेशेश्वरसंज्ञकः ॥
पूजितोगणपेन्द्रेण गणलक्षैः परीवृतः ॥ ३१॥
सुकेशेन स्तुतं लिङ्गं सुकेशेश्वरसंज्ञितम् ॥
पूजितश्च त्रिलोकेषु विल्वपत्रैःशुभैस्तथा ॥ ३२ ॥

॥ सुकेशउवाच. ॥

पञ्चकोशगगनातिग शम्भो व्योमकेश गुणसारसहंस ॥
काशिकापुरनिवास महेश पाहि शङ्कर सुकेश महेश ॥३३॥

॥ स्कन्दउवाच. ॥

नीलश्च मन्दरश्चैव प्राकारे दक्षिणे नगौ ॥
तत्रापि गोपुरं शम्भोर्नानारुद्रगणावृतम् ॥
दशलक्षप्रमाणेन उच्छ्रितङ्गगनातिगम् ॥३४॥
उल्लिखन्तन्देवमार्गं सहस्रमणिसय्युतम् ॥
रुद्रावतारक्रीडाभिर्वृषस्तम्भैश्च शोभितम् ॥ ३५ ॥
चण्डीश्वरालयन्तत्र तप्तहेमविभूषितम् ॥
सहस्रस्तम्भसय्युक्तम्मुक्तावितततोरणम् ॥ ३६ ॥

नीलसन्मणिकलसञ्च कक्ष्याशतविराजितम्॥
सौधापारलसच्छृङ्गैरुपेतं वनभूषितम् ॥ ३७ ॥

तत्र सिंहासनासीनं विद्युत्पिङ्गजटाधरम् ॥
पर्वशर्वरिनाथार्घधरम्भस्मविभूषितम् ॥ ३८ ॥

त्रिपुण्ड्रविलसत्फालं रुद्राक्षाभरणान्वितम् ॥
महार्हवसनोपेतन्नानारत्नपरिष्कृतम् ॥ ३९ ॥

निमीलिताक्षन्ध्यायन्तन्दिव्यं शम्भोःपदाम्बुजम् ॥
किम्पुरुषैस्सिद्धसाध्यैर्मुनिवृन्दैर्यमेन च ॥ ४० ॥

गणेन्द्रैस्सेवितपदं रुद्रसङ्घैर्निषेवितम् ॥
तत्रेश्वरस्य सदनं मदनान्तकरस्य च ॥ ४१ ॥

प्राकारगोपुरोपेतन्नवरत्नप्रकल्पितम् ॥
चण्डिकेशेश्वरं लिङ्गञ्चण्डपापविनाशनम् ॥ ४२ ॥

तल्लिङ्गज्योतिषासर्वेद्योतितास्सूर्यलोमकाः ॥
तल्लिङ्गम्पूजयत्यत्र त्रिकालश्चण्डिकेश्वरः ॥ ४३ ॥

बिल्वैर्मन्दारकुसुमैर्मल्लिकाकरवीरकैः ॥
कर्णिकारैरपामार्गैर्मालाभिरपि शङ्करम् ॥ ४४ ॥

धूपदीपोपहाराद्यैर्नर्तकैःकरतालकैः ॥
स्तोत्रैःस्तौति महादेवम्प्राञ्जलिश्चण्डिकेश्वरः ॥ ४५ ॥

॥ चण्डिकेश्वरउवाच ॥

चण्डीश खण्डपरशो शशिखण्डचूड
ब्रह्माण्डमौलिग धराधर कार्मुकेश ॥
विध्युत्थमुण्डवरमालक कुण्डलीश
उच्चण्डताण्डवप्रसीद त्रिशूलदण्ड ॥ ४६ ॥

॥ स्कन्दउवाच ॥

इत्थम्विधाय स्तुतिमादरेण
चण्डीश्वरस्त्रिजगताम्पतिमिन्दुमौलिम् ॥
नत्वा महेश्वरपदाम्बुरुहं सदैव
ध्यायन्स्वकीय हृदयाब्जसुखं विधत्ते ॥४७॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासप्राकार-
वर्णनन्नाम चतुर्दशोध्यायः॥१४॥

---

॥ स्कन्दउवाच ॥

नैर्ऋते गोपुरं शम्भोः पञ्चलक्षप्रमाणकम् ॥
रुद्राणाञ्चरितैश्चैव शोभितं शिखरैरपि ॥ १ ॥

बाणस्तत्र महादेवमुपास्ते गणलक्षकैः ॥
नवरत्नसरोभूपोमहाप्रासादमध्यगः ॥ २ ॥

तदालयं रत्नकुम्भं सहस्रस्तम्भमण्डितम् ॥
तत्र वाणेश्वरागारन्तेन लिङ्गं समर्चितम् ॥
मण्डपैर्गोपुरोपेतन्त्रिकालम्बिल्वपल्लवैः ॥ ३ ॥

॥ वाणउवाच. ॥

वाणेश शम्भो हरिवाणपाणे
त्वम्पाहि गङ्गाधर चन्द्रचूड ॥
विश्वेश भर्ग मदनान्तक कालकाल
मामद्य शङ्कर विभो गणनाथपूज्य ॥ ४ ॥

भद्राणि मे संविदधत्स्वशम्भो
दक्षाध्वरध्वंसक अन्धकारे ॥
महेशान पञ्चाननेन्दुप्रशोभि-
न्प्रकृष्टैकधामप्रभो संप्रसीद ॥ ५ ॥

इत्थं स्तौति गणेन्द्रोसौ वाणोवाणेश्वरं शिवम् ॥
नैर्ऋते गोपुरे तत्र प्रासादवरमध्यगः ॥ ६ ॥

अस्ताद्रिः पारियात्रश्च तत्प्राकारे च सन्नगौ ॥
तत्रैव गोपुरं शम्भोर्दशलक्षैकयोजनम् ॥ ७ ॥

पट्टिकादेवकोष्ठैश्च स्तम्भैःकुम्भैश्च कोणगैः॥
रुद्रावतारक्रीडाभीरचितं वृषभैर्वृतम् ॥ ८ ॥

तलानाञ्च सहस्रेण निर्मितञ्चित्रवेदिकम् ॥
सुवर्णरत्नकलशैः कैलासादपि सुन्दरम् ॥ ९ ॥

तत्रास्ति सौधप्रवरं सहस्रस्तम्भमण्डितम् ॥
मणिमाणिक्यखचितन्दिव्यसिंहासनैर्युतम् ॥ १० ॥

धूपदीपादिबहुलम्भक्ष्यभोज्यसमन्वितम् ॥
तत्र भृङ्गीमहातेजाभस्मोद्धूलितविग्रहः ॥ ११ ॥

त्रिपुण्ड्रविलसत्फालोमणिमाणिक्यकङ्कणः ॥
चन्द्रार्धशेखरावद्धराजत्पिङ्गजटाधरः ॥ १२ ॥

सिंहासनस्थोवरदोगन्धर्वैर्गणपैर्वृतः ॥
वरुणेन च गन्धर्वैर्गरुडैरप्सरोगणैः ॥ १३ ॥

सेवितोरत्नसौधस्थोदशलक्षगणैर्वृतः ॥
वासुकिश्शंखपालश्च कम्वलाश्वतरौ तथा ॥१४॥

शेषश्च तक्षकश्चैव दैत्यनाथैर्नृपैस्तथा ।
उपासते भृङ्गिरिटिः शिवध्यानहताशुभः ॥१५॥

तत्रास्ति गर्भभवनम्प्राकारवरगोपुरम् ॥
भृङ्गीश्वरस्य तल्लिङ्गं संम्पूज्य स्तौति भक्तितः ॥१६॥

पञ्चामृतैः फलरसैः पञ्चगव्योदकैरपि ॥
चन्दनैः पुष्पमालाभिर्बिल्वमन्दारचम्पकैः ॥ १७ ॥

धूपैर्दीपैस्तथा पुण्यैर्नैवेद्यैर्मुग्ववासजैः ॥ १८ ॥

॥ भृगीउवाच ॥

भृङ्गीश मे मनसिजस्तव पादपद्म-
भृङ्गोभवत्वनुदिनं सरसानुमोदः ॥
प्राप्नोतु भक्तिमखिलान्तव पादपद्मे
मायातु यातु दुरिते चरिते तवेश ॥ १९ ॥

श्रीशङ्कर प्रभु हरेश्वर विश्वमूर्ते
विश्वाधिकेश कररङ्गकुरङ्गबाल ॥
मन्दारकुन्दनवचम्पकबिल्वमाल
दिव्योत्तमाङ्गदभुजङ्ग सुरेश पाहि ॥ २० ॥

॥ स्कन्दउवाच ॥

इत्थं स्तौति सदाकालं शङ्करं लोकशङ्करम् ॥
गणानां शतलक्षैश्च स्वसमानैः परीवृतः ॥ २१ ॥
वायव्ये गोपुरं शम्भोः पञ्चलक्षप्रमाणतः ॥
रुद्रावतारक्रीडाभिरन्वितम्मणिवेदिकम् ॥ २२ ॥
रत्नकुम्भशताकीर्णं वायूद्धूतपताककम् ॥
वृषभालङ्कृतन्दिव्यन्तत्र सौधे महामनाः ॥ २३ ॥
सहस्रस्तम्भसय्युक्तहेमासनसमाश्रितः ॥
रिटिरास्ते शिवध्यानविधूताखिलहृत्तमः ॥ २४ ॥
भस्माभ्यक्तस्त्रिपुण्ड्राङ्कोरत्नाकल्पविभूषितः ॥
सोमार्धशेखरोद्भासि मुकुटोवायुसेवितः ॥ २५ ॥

द्विलक्षगणपैश्चैव रुद्रवृन्दानिषेवितः ॥
तत्र गर्भगृहं शम्भोरिटीशस्य महेशितुः ॥ २६ ॥

प्राकारगोपुरोपेतन्धूपैर्दीपैर्मनोहरैः ॥
जातीमल्लिकमन्दारबिल्वैरभ्यर्च्य शङ्करम् ॥२७॥

कृताञ्जलिपुटः स्तौति रिटीशम्भक्तिभावतः ॥
समुद्यत्पुलकोदेवन्त्रिकालं लिङ्गसंस्थितम् ॥२८॥

॥ रिटिरुवाच ॥

विश्वेश विश्वमदनान्तक विश्वमूर्ते
गौरीवरोत्तमभुजङ्गफणाभिराम ॥
गङ्गाधरान्धकरिपो प्रमथाधिनाथ
पाहीश मामवधियाग्यललाटसोम ॥ २९ ॥

॥ स्कन्दउवाच ॥

इत्थं स्तौति रिटिर्भक्त्या रिटीशम्मुदितान्तरः ॥
ततोन्तरे च प्राकारसंस्थितात्र कुलाचलाः ॥ ३० ॥

दुन्दुभिर्मन्दरोनाम्ना पर्वतोरैवतस्ततः ॥
तत्रापि गोपुरं शम्भोर्दशलक्षोर्ध्वगं स्थितम् ॥ ३१ ॥

सहस्रतलसय्युक्तम्पट्टिकावेदिकान्वितम् ॥
रत्नशृङ्गाग्रविलसत्धूयमानपताककम् ॥ ३२ ॥

रुद्रावतारक्रीडाभिरन्वितं वृषभैरपि ॥
तत्रास्ति सौधप्रवरम्माणिक्यतलकुट्टिमम् ॥ ३३ ॥

सहस्रकनकस्तम्भैर्निर्मितं वनराजितम् ॥
हेमसिंहासनैर्युक्तन्धूपगन्धानुमोदितम् ॥ ३४ ॥

मणिप्रभाभासितश्च तिरस्कृततमोगणम् ॥
कालाग्निरुद्रस्तत्रास्ते यक्षेशैश्च निषेवितः ॥ ३५ ॥

भस्मरुद्राक्षवीताङ्गोमुक्तामाणिक्यभूषणः ॥
मुकुटोद्यत्सुधाधामखण्डोज्वलितवक्त्रकः ॥ ३६ ॥

त्रिपुण्ड्ररेखावितत फालभागमनोहरः ॥
त्रिशूलपाणिर्वरदोहेमसिंहासनास्थितः ॥ ३७ ॥

कुबेरेण च देवैश्च पञ्चलक्षगणैरपि ॥
हेतिपाशमहाशूलधरैस्तैरहिमन्युभिः ॥ ३८ ॥

तत्रागारम्महेशस्य कालरुद्रेश्वरस्य च ॥
प्राकारगोपुरयुतन्धूपदीपशतायुतम् ॥ ३९ ॥

नैवेद्यैश्चम्पकैश्चैव विल्वमन्दारपङ्कजैः ॥
सम्पूज्य परया भक्त्या स्तौति देवम्पिनाकिनम् ४०

॥ कालाग्निरुद्रउवाच ॥

त्रियम्बक सदाशिव त्रिपुरमारकालान्तक
त्रिशूलधर शङ्कर मथितविष्णुवाणासन ॥
प्रसादजनितानन प्रकटचन्द्रधामागम
सुधांशुकशिखण्डकासुरसनाथ माम्पालय ॥ ४१ ॥

प्रभालालितविग्रहासुरसुरेशशेषार्चित
प्रभो भुवनसुन्दर सुदृढभावमुक्तिप्रद ॥
भुजङ्गवरकङ्कण प्रविलसत्प्रभामण्डल
त्रिलोचन यमान्तक त्रिपुरदाह लीलाधर ॥ ४२ ॥

॥ स्कन्दउवाच. ॥

इत्थं स्तौति प्रहृष्टात्मा कालरुद्रोमहेश्वरम् ॥
तस्य प्राकारकोणे च ऐशान्यान्दिशि संस्थितः॥४३॥

वीरभद्रस्सदैवास्ते गणलक्षैः परीवृतः ॥
तदुत्तरं हि कैलास तत्र गोपुरमुत्तमम् ॥ ४४ ॥

पञ्चलक्षप्रमाणेन वेदिकापट्टिकान्वितम् ॥
सुवर्णरत्नखचितङ्कलशैश्शोभितम्मुने ॥ ४५ ॥

रुद्रावतारवृषभैश्शोभितन्तन्मनोहरम् ॥
तत्र सौधवरे क्लृप्ते सहस्रस्तम्भमण्डपे ॥ ४६ ॥

हेमरत्नान्विते दिव्ये हेमसिंहासनस्थितः ॥
ईशानेन च रुद्रैश्च गणलक्षसमन्वितः ॥ ४७ ॥
भस्मोद्धूलितसर्वाङ्गस्त्रिपुण्ड्रपरिचिन्हितः ॥
राजद्रत्नाङ्गदैर्युक्तोमणिरुद्राक्षधारकः ॥ ४८ ॥

मुकुटोद्यत्सुधाधामखण्डार्धजटिलालकः ॥
सदाशिवार्चकवरश्शूलहस्तोहि भैरवः ॥ ४९ ॥

तत्रैकम्भवनं शम्भोर्वीरभद्रेश्वरस्य च ॥
नवरत्नान्वितन्दिव्यम्प्राकारवरगोपुरम् ॥ ५० ॥

धूपामोदितदिक्चक्रम्मणिद्युतिविराजितम् ॥
तल्लिङ्गम्पूजयत्येव बिल्वमन्दारचम्पकैः ॥ ५१ ॥

दीपोपहारधूपैश्च चन्दनेनाक्षतादिभिः ॥
स्तौति हृष्टस्त्रिकालं सस्तल्लिङ्गम्परमेश्वरम् ॥ ५२ ॥

॥ वीरभद्रउवाच ॥

क्षयद्वीरदक्षाध्वरध्वंसकाशा-
वसेशानमाशाविहीनेति तुष्टः॥
त्वमेवासि भद्रन्त्वमेवासि भद्रं
सताश्चासतां वाशु मां रक्षयाद्य ॥ ५३ ॥

॥ स्कन्दउवाच ॥

इत्थं सदाशिवं स्तौति वीरभद्रोगणाग्रणीः ॥
शैलावरणमेतद्वै शम्भोश्शिवगणाश्रयम् ॥५४॥

दशलक्षप्रमाणेन परिधाकृतिविस्तरम् ॥
गोपुरार्बुदकोपेतं रम्यमण्डपमण्डितम् ॥ ५५ ॥

सहस्रनियुतस्तम्भैः कुम्भैश्चापि समन्वितम् ॥
रम्यलिङ्गालयोत्तुङ्गराजद्रूपभशेखरम् ॥५६॥

घगत्घगितदिक्चक्रं शैलावरणमीशितुः ॥
व्यायामायतदीर्घञ्च एतद्वोभिहितम्मया ॥ ५७ ॥

एवमाभ्यन्तराः क्लृप्ताः प्राकारावरगोपुराः ॥
सहस्रप्रमथाधीशैः सप्तसागरमध्यगैः ॥ ५८॥

शैलद्वीपसरिद्भिश्च निर्मितं विपिनैरपि ॥
ध्यात्वा ध्यायमिदं विप्र गणोभवति शाङ्करः ॥ ५९॥

॥ स्कन्दउवाच ॥

सप्तप्राकारमध्ये हरविधिहरयोर्नोगणानापि वातो-
नो चन्द्रोन च सूर्यरश्मिनिचयन्नाग्नित्रयं वासुराः ॥
एकस्तत्र महेश्वरोविहरति स्वैरं सहाम्बोमुदा
तद्वेदैरपि वक्तुमेव नभवेत्का वा कथान्यस्य हि॥६०॥

शरशरधिरथाङ्गं यन्तृयानञ्च वाहा
धनुवरमथ तज्ज्या वैरिवर्गोरथी च ॥
हरिविधिश्रुतयः क्ष्मा पुष्पवन्तौ तथाद्रिध-
र्नगवरउरगेन्द्रास्त्रैपुरं श्रीमहेशः ॥ ६१ ॥

विश्वासश्श्रुतिरेकएव भगवानास्ते सहाम्बोभव -
स्तस्यापारविचित्रसर्वबहुलाः स्वाभाविकाश्शक्तयः॥
तस्यानन्दघनस्य भक्तिपरमाभावागणास्ते द्विज
ब्रह्मेन्द्रादिमरुत्पदेषु विरतास्सक्तामहेशार्चने ॥ ६२॥

इति श्रीशिवरहस्ये प्रथमांशे शैलप्राकारवर्णन-
न्नाम पञ्चदशोध्यायः ॥ १५ ॥

धूपामोदितदिक्चक्रम्मणिद्युतिविराजितम् ॥
तल्लिङ्गम्पूजयत्येत्र विल्वमन्दारचम्पकैः ॥ ५१ ॥

दीरोपहारधूपैश्च चन्दनेनाक्षतादिभिः ॥
स्तौति हृष्टन्त्रिकालं सस्तल्लिङ्गम्परमेश्वरम् ॥ ५२ ॥

॥ वीरभद्रउवाच ॥

क्षयद्वीरदक्षाध्वरध्वंसकाशा-
वसेशानमाशाविहीनेति तुष्टः॥
त्वमेवासि भद्रन्त्वमेवासि भद्रं
सताश्चासतां वाशु मां रक्षयाद्य ॥ ५३ ॥

॥ स्कन्दउवाच ॥

इत्थं सदाशिवं स्तौति वीरभद्रोगणाग्रणीः ॥
शैलावरणमेतद्वै शम्भोश्शिवगणाश्रयम् ॥५४॥

दशलक्षप्रमाणेन परिधाकृतिविस्तरम् ॥
गोपुरार्बुदकोपेतं रम्यमण्डपमण्डितम् ॥ ५५ ॥

सहस्रनियुतस्तम्भैः कुम्भैश्चापि समन्वितम् ॥
रम्यलिङ्गालयोत्तुङ्गराजद्भृपभशेखरम् ॥५६॥

धगत्वगितादिकूचक्रं शैलावरणमीशितुः ॥
न्यायामायतदीर्घश्च एतद्योभिहितम्मया ॥ ५७ ॥

एवमाभ्यन्तराः क्लृप्ताः प्राकारावरगोपुराः ॥
सहस्रप्रमथाधीशैः सप्तसागरमध्यगैः ॥ ५८॥

शैलद्वीपसरिद्भिश्च निर्मितं विपिनैरपि ॥
ध्यात्वा ध्यायमिदं विप्र गणोभवति शाङ्करः ॥ ५९॥

॥ स्कन्दउवाच ॥

सप्तप्राकारमध्ये हरविधिहरयोर्नोगणानापि वातो-
नो चन्द्रोन च सूर्यरश्मिनिचयन्नाग्नित्रयं वासुराः ॥
एकस्तत्र महेश्वरोविहरति स्वैरं सहाम्बोमुदा
तद्वेदैरपि वक्तुमेव नभवेत्का वा कथान्यस्य हि॥६०॥

शरशराधिरथाङ्गं यन्तृयानश्च वाहा
धनुवरमथ तज्ज्या वैरिवर्गोरथी च ॥
हरिविधिश्रुतयः क्ष्मा पुष्पवन्तौ तथाब्धि-
र्नगवरउरगेन्द्रास्त्रिपुरं श्रीमहेशः ॥ ६१ ॥

विश्वात्मश्रुतिरेकएव भगवानास्ते सहाम्बोभव -
स्तस्यापारविचित्रसर्ववहुलाः स्वाभाविकाश्शक्तयः॥
तस्यानन्दघनस्य भक्तिपरमाभावागणास्ते द्विज
ब्रह्मेन्द्रादिमरुत्पदेषु विरतास्सक्तामहेशार्चने ॥ ६२॥

इति श्रीशिवरहस्ये प्रथमांशे शैलप्राकारवर्णन-
न्नाम पञ्चदशोध्यायः ॥ १५ ॥

## ॥ जैगीषव्यउवाच ॥

शिखिवाह नमस्तेस्तु नगपौत्र महाप्रभो ॥
सुन्दरानन सन्दोह द्वादशोत्पललोचन ॥ १ ॥

नाकनायक मैनाकमातुलानलसम्भव ॥
शोकमोहसुदैत्याजि गतप्राणापहारक ॥ २ ॥

तारकक्रौश्चमथन पुनर्विस्तरतोवद ॥
न हि तृप्यामि त्वद्वक्त्रकथारसझरीभरैः ॥ ३ ॥

कियन्तस्तत्र प्राकारागोपुराट्टालसुन्दराः ॥
कैलासस्य महेशस्य वसतेरतुलस्य च ॥ ४ ॥

## ॥ स्कन्दउवाच. ॥

शृणुध्वम्ब्रह्मविष्ण्वाद्याविप्राः परमसुन्दराः ॥
क्षीरोदधिमहास्वान्ते प्राकारोस्ति तदन्तरः ॥ ५ ॥

उद्भूतचन्द्रकिरणैस्तरङ्गैश्चैव भासुरः ॥
रजतोच्छ्रायशृङ्गाग्रमहावृषभलालितः ॥ ६ ॥

नानागोपुररत्नोद्यत्प्रभाभासितदिङ्मुखः ॥
स्फाटिकैः कृतदेवेशवर सुन्दरविग्रहैः ॥ ७ ॥

शोभितोगोपुराणाञ्च समूहैः परिशोभितः ॥
तत्पूर्वदेशे देवस्य तत्पूर्वस्य मनोहरम् ॥ ८ ॥

गोपुरं सौधसुभगं स्तम्भविद्रुमपुत्रकम् ॥
मणिक्लृप्ताच्छवलभीनिर्यत्सारश्च सद्गुणम् ॥ ९ ॥

तत्र सिंहासनवरन्नवरत्नविचित्रितम् ॥
तत्र स्थितङ्गणैर्दिव्यैः शूलखड्गलसत्करैः ॥ १० ॥

कपर्दधृतचन्द्रार्धैर्भासितामललोचनैः ॥
त्रिपुण्ड्ररेखोज्वलितफालैः फालविलोचनैः ॥ ११ ॥

रत्नान्तरितरुद्राक्षमालाललितकन्धरैः ॥
नीरदोद्यत्प्रभाभास्वन्नीरजोपमकन्धरैः ॥१२॥

वाताशनकृतोच्छ्वासचलत्धारमनोहरैः ॥
महाडमरुनादेन भीषिताखिलदिक्तटैः ॥ १३ ॥

फणामाणिकृतापारनूपुराङ्घ्रिजकङ्कणैः ॥
रणन्मञ्जीरवलयैः सिंहसिंहाननैर्गणैः ॥ १४ ॥

पुण्डरीकाजिनभवत्कृष्णरेखाकटीतटैः ॥
महेभचर्मवसनैर्बालातपसमप्रभैः ॥ १५ ॥

गणेन्द्रैर्वारणेन्द्राभैः करिशुण्डोरुबाहुभिः ॥
अहिमन्युभिरुत्कृष्टैः कोटीभिर्गणपैर्वृतः ॥ १६ ॥

पृषत्ककरनिस्त्रिंशबाणासनधरैर्वरैः ॥
पूर्वतोभाति तत्पूर्वइन्दुकुन्दसमप्रभः ॥ १७ ॥

जटामुकुटसंशोभिपूर्णराजत्कलाधरः ॥
भस्माभ्यक्तस्त्रिपुण्ड्राङ्कश्चतुर्बाहुरुदारधीः ॥ १८ ॥

त्रिनेत्रोनीलकण्ठश्च बालसूर्यायुतप्रभः ॥
तत्पूरुषोमहालिङ्गं सर्वदा जलधारया ॥ १९ ॥

समर्चयति विप्रेन्द्र बिल्वपत्रैश्शिवार्चकः ॥
स्तुवते सावधानेन तल्लिङ्गं रत्नधामगम् ॥ २० ॥

॥ तत्पूरुषउवाच ॥

स्वच्छच्छत्राभिराम च्छविजितरजत च्छन्दसङ्गीततुष्ट
स्वच्छन्दानन्दमूर्ते निजनिजमहिमच्छन्न वाञ्छात्तदेह॥ २१
श्रीचन्द्रचूड सुरभक्तजनप्रियात्त
लीलातनोविजितमार विभो पुरारे ॥
कैलासवास भुवनाधिपते त्रिनेत्र
भस्माच्छदेह विलसच्छशिभाल शम्भो ॥ २२ ॥
श्रीदेवानन्तमूर्ते सुरदितिजनुत श्रीनिवास कृपाब्धे
मच्चित्ते वासमङ्गीकुरु निखिलपते देहि भक्तिन्त्वदङ्घ्रौ २३
आशीविषाङ्गद सदैव महेश काशी-
वासी कृतानन्दवनप्रसीद ॥
संसारवारिशितरे पुरारे
कीनाशनाशभयमाशु विनाशयाद्य ॥ २४ ॥

॥ स्कन्दउवाच. ॥

इत्थं स्तौति सदाकालन्तत्पुरुषः पुरुषेश्वरम् ॥
तत्रास्ते गणपाधीशः प्रतीचीम्पालयन्दिशम् ॥ २५

नीलेन्दीवरसङ्काशशङ्खग्रीवावलयसुन्दरम् ॥
पुष्परागकृतानेकमालाकलितकन्धरम् ॥४३॥

वैय्याघ्रचर्मविलसत्कटिरत्नसुकाञ्चिकम् ॥
अहिमन्युवरानेकताहृशैर्गणपैर्वृतम् ॥ ४४ ॥

पाशाङ्कुशाभयकरम्पाशिना परिसेवितम् ॥
दधिमण्डमहाम्भोधिमध्यसौधवराश्रयम् ॥ ४५ ॥

गणैश्चर्ममहादण्डडिण्डिमारावभीषणैः ॥
सेवितम्पाशिभिस्तत्र पश्चिमाम्पाति सोदिशम् ॥
सद्योजातेश्वरं लिङ्गं स्तौति भक्त्या प्रपूजयन् ॥४६॥

॥ सद्योजातउवाच ॥

पाटीरद्रुमकीटकेतनजटाकोटीरमम्बान्वित-
न्देवोच्चैस्तटिनीस्फटोद्भटजटाजूटीकृताहिच्छटम् ॥
देवाधीश्वर सुन्दरञ्च वरदम्मत्तेभचर्माम्बरम्
श्रीमल्लोचनसंय्युतं विभुनुतं स्वात्मप्रदं ज्ञानदम् ४७

सुधाकरललाटगं वरगुणौघरत्नाकरं
स्फुरत्त्रितयलोचनज्वलनदग्धमीनध्वजम् ॥
कुलाचलकुमारिकाकुचतटीपटीराङ्कित-
म्भजामि भजतां सदा भयदमीश्वरंशङ्करम् ॥ ४८ ॥

इत्थं स्तौति सदा लिङ्गं सद्योजातोमहेश्वरम् ॥
तदुत्तरेपि प्राकारोगोमेदमणिकल्पितः ॥ ४९ ॥

घृतोदेनावृतस्तत्र तत्कल्लोलोत्थवायुभिः ॥
परिवीतोगोपुरैश्च तन्मणीन्द्रकृतैश्शुभैः ॥ ५० ॥

वररुद्रावतारोद्यद्विग्रहैर्वृषभैर्युतम् ॥
शोभितन्तत्प्रभाभिश्च तत्रास्थानञ्च तस्य हि ॥ ५१॥

सौधैरपाराशिखरैर्बहुस्तम्भविराजितैः ॥
तत्र संस्थम्महाबाहुं वामदेवन्त्रिलोचनम् ॥ ५२ ॥

सिंहासने सुखासीनम्भस्मोद्धूलनपाण्डुरम् ॥
हरिन्मणिनिभाकारविद्युन्निभजटाधरम् ॥ ५३ ॥

त्रिपुण्ड्राङ्कितसत्फालं खट्वाखेटधरं शुभम् ॥
प्रसन्नास्यन्नीलकण्ठं राजदिन्दुकलाधरम् ॥ ५४ ॥

हरितैर्गणपैश्चैव वायुभिः परिसेवितम् ॥
उद्यन्मरकतागर्भसुन्दरैर्वायुवेगितैः ॥ ५५ ॥

त्रिपुण्ड्रचन्द्राहिधरैर्जटामण्डलमस्तकैः ॥
बाणबाणासनधरैरक्षकैर्भूतिभूपितैः ॥ ५६ ॥

वल्लकीमुरजोत्तुङ्गमृदङ्गवरवादकैः ॥
सेवितम्परितोवीरैश्शूलामलसत्करैः ॥ ५७ ॥

वामदेवं सोमशोभाजिनवद्धकटीतटम् ॥
कण्ठे भुजङ्गसंयुक्तम्मृगेन्द्रामललोचनम् ॥ ५८ ॥

कुबेरेणोत्तराम्पाति दिशंय्यक्षेश्वरावृताम् ॥
वामदेवेश्वरं लिङ्गम्पूज्य संस्तुवतेनिशम् ॥ ५९॥

॥ वामदेवउवाच ॥

तिष्टंतःकतिपाटने तव विभो निश्वासनिष्टीववत्
च्छायानिष्ठुरतां विधूय गिरिशब्रह्मैकनिष्ठाः कति ॥
वैकुण्ठार्चितरत्नपीठनिलयश्रीकण्ठकण्ठोल्लसत्
नीलज्येष्टकनिष्ठकुष्टहनन श्रेष्ठान्तरातिष्ठ मे ॥६०॥

सुरकुवलयसोमं वामदेवाख्यसाम-
स्तुतमखिलगुणानां सीमधामानमीशम् ॥
जगदवनविनाशं शाम्भवोद्यत्सुकाम-
न्निजनयनकटाक्षैर्दग्धकामम्भजेहम् ॥ ६१ ॥

एवं स्तौति महादेवं वामदेवः प्रसन्नधीः ॥
तदन्तरागिरेर्मूर्ध्नि संस्थोहीरकसौधगः ॥ ६२ ॥

रुद्रावतारप्रभवैर्विग्रहैर्वृषभैरपि ॥
उरगेन्द्रमहाहारोमध्यन्दिनकरप्रभः ॥ ६३ ॥

शर्वरीनाथमुकुटीभूतिभूषितविग्रहः ॥
गजेन्द्रचर्मवसनोहारमालावृताङ्गकः ॥ ६४ ॥

आन्तरीक्षैरुद्रगणैः पाति व्योममनोहरम् ॥
निषङ्गिभिः कवचिभिश्छुरिकाहेतिधारिभिः ॥ ६५ ॥

व्योमकेशप्रसादेन ईशानुर्वशिलासतताम् ॥
ईशानेशम्महालिङ्गं सम्पूज्य स्तौति भक्तितः ॥६६॥

॥ ईशानउवाच ॥

रथन्तररवप्रियं रथरथाङ्गपाणीशरम्
मनोरथपथातिगं सुरथनागसत्कङ्कणम् ॥
भगीरथरथानुगाविहितजन्हुकन्याजटम्
भजामि सुरगोद्विजप्रियमपारणम्पापहम् ॥ ६७ ॥

चपके निजवाजिहेषितैश्चरणे वायुसुभोजिशिञ्जितैः ॥
करिसंन्निमहेभवृंहितैर्मुखरन्दैवतमाविरस्तु चित्ते ॥६८॥

अस्वीकृतस्वीकृतवेदराशिर्नाङ्गीकृताङ्गीकृतशम्बरारिः ॥
अस्त्रीकृतस्त्रीकृतनिर्झरारिर्देवस्तदा मे हृदये चकास्ति ॥६९॥

एवं स्तौति सदेशानोवररुद्रगणावृतः ॥
आन्तरैः परिघाद्यैश्च प्राकारवरगोपुरम् ॥
महाकैलासभवने माणिकल्पितमुत्तमम् ॥ ७० ॥

रत्नप्राकारमेतत्ते पञ्चब्रह्मप्रकल्पितम् ॥
महेशेन तदा विप्र शृण्वतामघनाशनम् ॥ ७१ ॥

॥ स्कन्दउवाच. ॥

विचित्रं शिवनिर्माणं विचित्रं शिवचेष्टितम् ॥
विचित्रा शिवमायास्ति महामायस्य शूलिनः॥७२॥

यस्यांशलेशलवलेशशतांशलेश-
लेशैर्जगज्जननकर्मगतिप्रणाशम् ॥
कुर्वन्ति वामभुजभूमधुकैटभारि-
र्दक्षाङ्गनेत्र जननौ भवतां हराजौ ॥ ७३ ॥

क्वचित्कल्पे सृष्टौ हरविधिमुकुन्दाः प्रतिभुवः
क्वचिद्ब्रह्माविष्णुः क्वचिदपि च रुद्रोपि करणम् ॥
जगत्संस्थानाशप्रकृतिजगुणैर्नैवकरणाः
भजन्तश्चान्योन्यजनकजननाश्शम्भुकृपया ॥ ७४ ॥

मनोवाचाचक्षुर्विषयमपि नस्तस्य चरितम्
शिवस्यैतालीलाः प्रथितवितताजागतगताः ॥
स्वतन्त्रोयं शंभुर्गुणगणविहीनोपि सगुणः
स्वया शक्त्या चित्रं विहरति गिरीशो ह्य जगति॥७५॥

इति श्रीशिवरहस्ये प्रथमांशे पञ्चब्रह्मप्राकारवर्णन-
न्नामशोडशोध्यायः ॥१६॥

॥ स्कन्दउवाच, ॥

तदन्तरेपि प्राकारश्चन्द्रकान्तशिलामलः ॥
कलधौतमहासानुशिखरोपरिसंस्थितः ॥ १ ॥

पञ्चलक्षप्रमाणेन आयामेनोच्छ्रयेण च ॥
परिणाहेपि विप्रेन्द्र वरिवर्त्युज्वलप्रभः ॥ २ ॥

कनकामलकुम्भाग्रे रत्नभ्राजन्मणिप्रभः ॥
सुधाब्धिजलकल्लोलविलसत्पादपीठकः ॥ ३ ॥

चतुर्दिक्षु महाद्वारगोपुरोत्तमशेखरः ॥
सोमधामायुतोद्भासि चाकचक्यजितान्तरः ॥ ४ ॥

जगच्चक्रमहाबिम्बविम्बिताम्बरसुन्दरः ॥
तत्कान्तिकान्तधाराभिर्दिशोपि धवलीकृताः ॥ ५ ॥

उद्यत्सुधांशुकिरणोनिष्टप्तकनकोज्वलः ॥
सुधातरङ्गनित्योर्ध्वहासफेनोपमोमलः ॥ ६ ॥

कैलासाचलसर्वस्वसारभूतोयमुत्तमः ॥
धवलिम्नाये तु लोके पादपास्सन्ति वर्णने ॥७॥

तेषामप्यतिवावल्यादुपमास्य द्विजोत्तम ॥
तत्प्राकारमहामौलौ स्फटिकोपलनिर्मिताः ॥ ८ ॥

वृषभानीलनयनाः पुच्छे शृङ्गे विभूषिताः ॥
कुरुविन्दोल्लसज्जिव्हा ककुदाभोगभासुराः ॥ ९ ॥

कर्णाग्रलम्बितात्यच्छस्फुरच्चामरपङ्क्तयः ॥
केचिदानन्दभरिताः पश्यन्त्यन्योन्यमीक्षणैः ॥१०॥

केचित्सुरभिपाश्चात्यभागभोगैकसम्भ्रमाः ॥
विवृतोद्यत्कुन्दकान्तिदन्तावलिविभूषिताः ॥ ११ ॥

केचिदाताम्रनेत्रान्तास्सुरघट्टमहोपलाः ॥
प्रवालमणिक्लृसेन लम्बिनावृषणेन च ॥१२॥

नर्दन्तिघनसन्नाहध्वनिभिर्जितदिङ्मुखाः ॥
एवन्तत्र महासौधप्राकारवरसंस्थिताः ॥ १३ ॥

कल्पागानां वनन्तत्र च्छदपुष्पफलावृतम् ॥
नानापलाशकलिकाकुसुमैः फुल्लशेखरम् ॥ १४ ॥

रत्नालवालकलितं राजद्रामण्यवेदिकम् ॥
तत्र तत्कुसुमोद्गन्धबन्धुरामलमारुतम् ॥ १५ ॥

घ्राणतर्पणमत्यन्तं शीतासारविसारिणम् ॥
वसन्तप्रमुखानेकर्तुभिःपरिसेवितम् ॥ १६ ॥

वासाधिकप्रदन्तत्र तत्कल्पककुलम्महत् ॥
मन्दारपारिजातैश्च सन्तानैश्चन्दनैर्वृतम् ॥ १७ ॥

नयनानन्दजननन्तापत्रितयवारकम् ॥
तत्कैलासमहापारसारभूतम्मनोहरम् ॥ १८ ॥

हरिन्मणिनिभस्वच्छच्छत्रच्छायासमप्रभम् ॥
तत्सुमप्रभवामोदगन्धप्रमितमारुतम् ॥ १९ ॥

विष्णुब्रह्मामरेन्द्राद्यामुनयश्च गणास्सुराः ॥
तृषान्तराः प्रमुदितानेच्छन्ति वननन्दनम् ॥ २० ॥

तत्सुखांशशतांशांशशतकन्तत्र नास्ति हि ॥
इत्यन्योन्यं संवदन्ति कथं तत्प्राप्यते वनम् ॥ २१ ॥

केवलं श्रीमहेशस्य प्रसादेन विना द्विज ॥
नास्माकम्प्रसरस्तत्र इति विस्मायितान्तराः ॥ २२

तत्रोत्फुल्लमहारत्नसोपानावलिभासुराः ॥
स्वच्छाच्छस्फटिकाकारपानीयोत्तमकुम्भिकाः ॥ २३

सुवर्णमृदुलालोलम्मृणालोच्छूलकुड्मलैः ॥
रत्नकल्हारकञ्जैश्च कुमुदैश्चैव शोभिताः ॥ २४ ॥

उत्फुल्लैरत्नकमलसहस्रदलसंवृताः ॥
हरिन्मणीन्द्रविततहरिच्छदवरैर्युताः ॥ २५ ॥

तत्रत्यविलसन्नीलत्वेल्लन्मुक्ताफलोपमाः ॥
तत्पङ्कजरजःपुञ्जरञ्जितामन्दमारुताः ॥ २६ ॥

तद्गन्धमधुरामोदविसार्पितदिगन्तराः ॥
नीरनीरजवल्योपि विततास्तत्र शङ्कर ॥ २७ ॥

इन्द्रनीलकृतानेककलिकोद्दामकेसरैः॥
चेल्लिताकीलितापारनीलेन्दीवरभासुरा ः२८

विकचत्कुमुदासारकेसरच्छदसंवृता ः॥
कासारसारसवरचलनाच्चलपत्त्रका ः॥२९॥

उद्यत्सुपुण्डरीकोत्थतुच्छीकृतसुधावलाः ॥
सन्त्यक्तनीरजदलस्वच्छशारदवत्स्थिताः ॥ ३० ॥

तत्रान्ते रत्नविलसत्पद्मरागमणिद्युतिः ॥
प्रासाद.शृङ्गसाहस्रैः परीतस्सरसस्तदा ॥ ३१ ॥

विचितापारसद्रत्नस्तम्भपङ्क्तिविराजितः ॥
तत्तद्धिमलताजालस्तम्भविद्रुमपुत्रिकः ॥ ३२ ॥

गोपानसीगतापारगवाक्षोज्वलकुम्भकः ॥
राजत्सुरत्नकलशप्रभाकीलितदिङ्मुखः ॥ ३३ ॥

उद्यद्भानुसहस्राभःकिञ्जल्काकृतिभासुरः ॥
क्वचित्सिंहासनन्तत्र नवरत्नविचित्रितम् ॥ ३४ ॥

क्वचिन्मञ्चारत्नपादामूलके विद्रुमान्विताः ॥
स्फटिकोपलसत्क्लृप्ततलादिवितताः शुभाः ॥ ३५ ।

हरिन्मणितलाश्चापि कुरुविन्दतलामलाः ॥
इन्द्रनीलमणिक्लृप्तमहापीठमनोहराः ॥ ३६ ॥

मुक्तावितानकलितामणिलम्बितशृङ्खलाः ॥
मञ्चामनोज्ञारुचिरास्सोपधानोपशोभिताः ॥ ३७ ॥

पुष्परागकगोमेदवैदूर्यतलकान्तिभिः ॥
भान्ति तत्र महापीठाविद्युदुद्यत्प्रभायुताः ॥ ३८ ॥

क्वचिन्निम्नभ्रमात्तत्र पतन्ति प्रसभङ्गणाः ॥
उन्नतेषु प्रदेशेषु निम्नभ्रान्तिकरास्तथा ॥ ३९ ॥

स्थले जलभ्रमश्चापि जले तत्र स्थलभ्रमः ॥
नानारत्नपतत्पत्र शुकशारिकसेवितः ॥४०॥

रत्नपञ्जरमध्यस्थशुकशारिकपङ्क्तिभिः ॥
क्रीडामयूरैर्वलभीलम्बिपिच्छैकभासुरैः ॥ ४१ ॥

तत्र पक्षिगणास्सर्वे शिव शङ्कर पाहि नः ॥
धूपधूममहागन्धबन्धुरामलमारुतः ॥ ४२ ॥

मणिप्रभाभिस्सततं सोमसूर्यौ तिरस्कृतौ ॥
सरसीमध्यसंक्लृप्तसौधोद्यद्वरकुम्भकम् ॥ ४३ ॥

मणिस्तम्भकृतासारभाभासितदिगन्तरम् ॥
सुवर्णाम्बरसंक्लृप्तविततामलमौक्तिकम् ॥ ४४ ॥

जालिकापारविततं वितानावलिभासुरम् ॥
तन्मध्यहीरकोत्तुङ्गसिंहासनवरान्वितम् ॥ ४५ ॥

तत्र देव्या महादेवोविहारशयनासनैः ॥
सरः प्रान्तोरुकलशधारासारोर्ध्वशीकरैः ॥
वानीरगन्धनीरोघ्यधारासारोर्ध्वशीकरै : ॥ ४६ ॥

कदाचित्तत्र मध्यस्थोदेव्या व्यजनहस्तया ॥
सेवितः श्रीमहेशानः क्वचित्पीठस्थितः शिवः॥४७॥

तत्र नानाविधाःक्रीडादेव्या चक्रे महेश्वरः ॥
विचित्राणाश्चरित्राणान्त्रिनेत्रप्रियकारिणः ॥ ४८ ॥

देव्या प्रमुदितोदेवस्तत्र सौधवरेषु च ॥
काश्चित्तत्र वदाम्यद्य शृणु भूसुर शाम्भव ॥ ४९ ॥

विपिने सरसस्तीरे प्रासादाग्रेषु गोपुरे ॥
विजहारमहादेवोभवान्या शङ्करस्तदा ॥ ५० ॥

शैलमालोकयद्देवोदेव्या देवीसखीगणैः ॥
अदर्शयद्विचित्राणि तस्मिन्कैलासपर्वते ॥ ५१ ॥

सालकृतमालतमालैरामलकीवकुलार्जुनपाटलैः ॥
पनसैर्लकुचवाल्हिकनीपैर्दाडिमैश्च सुरसालरसालैः ॥ ५२ ॥

जम्बूनिम्बकदम्बजैःफलमहाकङ्कोलहिन्तालकै-
रङ्कोलैस्सरलैरशोकतिलकैस्तिन्दूकमालूरकैः॥
पुन्नागैर्नगसर्जकैश्च रसिकैश्चाम्पेयमाधूककै-
र्बिल्वाश्वत्थकपित्थतिन्तिणिभवैर्भूनिंबजालैर्धवैः ५३

वटखदिरकुराठैः कर्णिकाराश्वमारै-
र्वरवदरपलाशैर्लोध्रसच्चन्दनैश्च ॥
कुरवकशुकतुण्डैर्शिंशपाच्छेङ्गुदीभि-
र्निचुलविकचभण्डैः केतकैः सिन्दुवारैः ॥ ५४ ॥

केदारैः कोविदारैश्च देवदारुकपित्थकैः ॥
तगरागरुकृष्णाभ्रतुङ्गनीपककम्रकैः ॥ ५५ ॥

मन्दारद्वयपारिजातवकजैरर्कैश्च सप्तच्छदैः
पूगीनारलखर्जुरैश्च कुटजैर्नारङ्गजातीद्रुमैः ॥
यक्षोदुम्वरकन्दलैर्मुनिभवैराजादनैर्वर्वरैः
शल्योदुम्वरशिग्रुकैर्मधुभवैसन्मातुलिङ्गैरपि ॥ ५६ ॥

भूतावासहरीतकीत्रिकटुकैःशम्युद्भवैकन्दरैः
प्राचीनामलकैः करञ्जककुभैर्गन्धाक्तजम्बूफलैः ॥
बन्धूकैश्चिरविल्वजैश्च तगरैःकृष्णागरूत्थद्रुमै-
र्मालिङ्गैश्च शिरीषकैश्च कुसुमैरन्यैश्च शाखीशतैः ५७

मल्लीमालतिजातिकासुरभितैःसायन्तनोन्निद्रितै-
श्चन्द्रासारविकासितैरतिसितैःसच्चंद्रिकाकांतिभिः ॥
वल्लीनान्निवहैः कदम्वजरजस्सन्दोहगन्धानिलैः॥५८॥

उत्फुल्लैस्तिलकैस्तमालजसुमैः फुल्लैर्लसत्केतकैः
कुन्दैरिन्दुकरप्रसारितमुखैरालोलसप्तच्छदैः ॥
कौसुम्भैररुणप्रभासुमधुरैः प्रोद्भूतसत्केसरैः ॥५९॥

ॐ नमः शिवाय.

# शिवरहस्य.

प्रथमांश.

द्राक्षागुच्छसवल्लिकाः सितसिताः पुण्ड्रेक्षुसाराकराः
पूगद्रूकवलीकृताङ्गमधुरास्सन्नागवल्लीलताः
मन्दारादिविचित्रसुन्दरतरुप्रोद्भासिगुच्छच्छटाः ६०

उत्फुल्लदाडिमसुमैर्वककर्णिकारै-
र्नीपादिवृक्षकुसुमैरपि सुन्दरैश्च ॥
पीतायमानैः प्रभया सुचम्पकै-
रुत्फुल्लपाटलकदम्बजराजवृक्षैः ॥ ६१ ॥

सर्त्किशुकैश्शुकमुखैर्वरशाल्मलीभिः
पुन्नागनागनवनीपसुमैः प्रफुल्लैः ॥
भारातिभारशिखरैः कलधौतशैल-
म्पश्याम्बिकेऽथ सुमनोहरवृक्षसङ्घैः ॥ ६२ ॥

वल्लीविकासिततनुः प्रसभम्भवानि
प्रोद्यत्सुधांशुचयकोटिनिभोविभाति ॥ ६३ ॥

उत्फुल्लामलपुण्डरीककुमुदैर्नीलोत्पलैस्सुन्दरै-
रारक्ताम्बुजकञ्जनीभिरभितस्सद्रत्नसोपानकैः ॥
तत्प्रान्तामलबिल्वमूलजमहालिङ्गाकृतिश्शंकर-
स्तुष्यत्येव सरस्सु रुद्रगणपैर्देव्या गिरीन्द्रेऽधिकम्॥६४॥

तत्धन्यधारामृतपानपीनाः स्वात्मैकतानाइव चक्रवाकाः ॥
सरस्सु कल्लोलचलात्तपक्षाहंसाबकास्सारसपंक्तयश्च ॥
नार्द्रीकृताङ्गाः खलु सञ्चरन्ति भावाभवाब्धाविव मे प्रभावात्
॥६५॥

कपिवरकुलमाद्यञ्चालनालोकनाद्यैः
फलपतनजवर्षैः पुष्परेणुप्रकीर्णाः ॥
शिखरिशिखरसाराभूमयश्शोशुभन्ते
करिकटमदधाराप्रस्रवैः पङ्किलाश्च ॥ ६६ ॥

शुकबकपिककाककोकघूकैर्निभृतविनादितचक्रवाकपाकैः ॥
गहनविपिनशाखिमस्तसंस्थामधुरारावविनादिचक्रवाकाः
॥ ६७ ॥

गिरिवरशिखराग्रे नृत्तसाटोपबर्हाः
करिकुलकृतघोषैर्बृंहितैर्वारणानाम् ॥
गिरिसरसिनिनादैस्सारसानां शुकाना-
म्पिकरवकलकण्ठैर्नादितन्तद्गृहान्तः ॥ ६८ ॥

चलितचमरकुञ्जदन्तशृङ्गखरखुरघट्टनशैलसानुनिम्नम् ॥
सुमनसगतवायुगन्धमोदत्सुमरजसाङ्कितभूमिगर्भभागम्
॥ ६९ ॥

फलकुलसुमभारैर्दीर्घितानम्रशाखा
व्रजदलिकुलमालानीलनीलाब्जतुल्याः ॥
मधुररमणशीलाभाविहस्ताग्रशाखा
हरगिरिवरसानौ स्वर्णवृक्षाविभान्ति ॥ ७० ॥

कलधौतनगप्रशस्तमुस्ताकुलकामोदितकोलजालमेतत् ॥
सितदंष्ट्रोत्थितघर्घरोरुदावम्परिपश्य प्रसभम्मुदागिरीशे॥७१॥

करिकुम्भोथ्थतरक्तयुक्तमुक्ता-
मणिजालावृतभूमिभागमेतत् ॥
द्विपकुलमित्तअत्युदारघोपम्
हरिणन्धावितसिंहनादभीतम् ॥ ७२ ॥

वल्मीकोर्ध्वफणत्फणीश्वरकुलं वातोत्थदिक्चक्रक-
मार्तत्रस्तविलोचनं हरिरवैर्भीत्या प्रसूतं शिशुम् ॥
त्यक्त्वा धावति पश्य पश्य गिरिजे प्रोड्डीणमेणीकुल-
कैलासाचलरत्नसौधगमहासिंहासनाध्यासिते ॥७३॥

देव्युत्फुल्लमुखारविन्दविगलन्माध्वीकसारम्मधु
पीत्वा लोचनषट्पदैर्वदति ताम्पश्येति लिङ्गन्युमे ॥
विल्वा कोमलपल्लवैरनुदिनकैलासशृङ्गेर्चितं
लिगन्देवगणस्तुतं सुविमलम्पश्याम्बिके सुन्दरम्
॥ ७४ ॥

सम्भान्ति वै मदनमत्तमयूरपिञ्छैः
सञ्छादितानि चमरीगणपुच्छभारैः ॥
संवीजितानि करिविस्तृतकर्णनालै-
रसिक्तानि वै नगगवाम्पयसैव नित्यम् ॥
सङ्घर्षणान्मृगकरीन्द्रसुदेहभारे-
र्विल्वच्छदैः पतनसम्परिपूजितानि ॥७५॥

॥ स्कंन्दउवाच ॥

गौरीवल्लभ भल्लशौरिहृदय-भ्रूसञ्जिसन्नेत्रक
लीलाकार्मण अन्धकारि भगवन्भिल्लाकृते शङ्कर ॥
वेदस्तेनुगुणं विधिं नयति तद्विश्वेश विश्वाधिक
त्वल्लीलाधिगमेन सर्वजगतान्नाशप्रभावस्थितिः ७६

दीक्षाशिक्षितमन्मथत्रिपुर भोदक्षादिदीक्षापह
लीलाधारितदेह सुन्दरगुणोल्लासैकधामन्विभो ॥
त्र्यक्षाक्षादिविदूर शिक्षितमहामौनीन्द्रविज्ञानद
भिक्षाभोजन पक्षपातदयया भक्ताधिवासाव माम् ७७

इति श्रीशिवरहस्ये प्रथमांशे कैलासप्रासादवर्णनन्नाम सप्तदशोध्यायः ॥ १७ ॥

॥ स्कन्दउवाच ॥

हीराकरमहासौधे धर्मतप्तोहि शङ्करः ॥
देव्या सरस्तटे सिंहासनवरे स्थितस्तदा ॥ १ ॥

सुचन्द्रचन्दनद्रावविलेपितमहाङ्गकः ॥
महागरुमहाधूमविधूपितशिखस्तदा ॥ २ ॥

रत्नपात्रस्थितापारमहामोदान्नभोजनः ॥
तत्र कल्पद्रुमफलन्देव्या भुंक्ते महेश्वरः ॥३॥

सुरत्नखचितानेकरत्नपात्रस्थितान्फलान् ॥
दृष्ट्वा तुष्यति देवेशः कदाचिदमृताशनः ॥ ४ ॥

रत्नादर्शविलोकाच्छप्रतिबिम्बैकदर्शनः ॥ ५ ॥

देव्याललाटफलके तिलकं रत्ननिर्मितम् ॥
कल्पयत्यतिहृष्टात्मा सदानन्दघनश्शिवः ॥ ६ ॥

पाटीरचन्द्रकस्तूरीलिप्तम्मलयपङ्कजम् ॥
देवीं विलिप्य संहृष्टः स्वाङ्गमीशोतिहर्षतः ॥ ७ ॥

देव्याधम्मिलमल्लीनाङ्घ्राणानन्दकुतूहलः ॥
कल्पकामोदवहलपुष्पस्रग्भिश्च भूषणैः ॥८॥

त्यक्त्वा कपर्दमुकुटं रत्नकल्पितमुत्तमम् ॥
धारयत्यतिसंहृष्टश्चन्द्रखण्डम्महेश्वरः ॥
हारकेयूरवलयैर्भूषां स्वाङ्गेप्यनुत्तमाम् ॥ ९ ॥

काकोदरमहाहारन्त्यक्त्वा रत्नप्रभाधिकम् ॥
नवरत्नमहाहारावलीं लम्बितमौक्तिकाम् ॥ १० ॥

स्वकण्ठङ्कल्पयत्येव देव्याः कण्ठेपि शङ्करः ॥
शितिकण्ठोविरूपाक्षोदेव्या क्रीडति तत्र हि ॥११॥

ततस्तत्र ब्रह्मकल्पशतमानं कलाधरः ॥
भूतम्भाविभवत्तत्र कालकल्पं द्विजोत्तमाः ॥ १२ ॥

कालातीतस्य देवस्य सदा मृत्युञ्जयस्य च ॥
तस्य क्षणार्धन्सा क्रीडा केन वक्तुं हि पार्यते ॥१३॥

॥ स्कन्दउवाच. ॥

धारासारगृहेषु शङ्खमुरजोद्घुष्टेषु तुष्टश्शिव-
श्चन्द्रोशीरसुगन्धबन्धुरजलैस्सत्पाटलामोदितैः ॥
लालाटोत्थहुताशसूर्यकिरणैस्सन्तप्तगात्रोम्बया
लीलालम्बितरत्नकीरकरयाध्यास्ते च सिंहासने ।१४।

हीरासारनिबद्धरत्नजमहादोलासनान्दोलनै-
रत्नश्वेतजकान्तिवृन्दनिवहैस्स्वोद्धूतवातोत्थितैः ॥
सूक्ष्मैरम्बरकान्तिभिर्विकसितैस्तच्छैलसानुप्रभै-
रम्बामीक्षति क्रीडितुं ससुधाकल्लोलवारान्निधिः १५

॥ ईश्वरउवाच. ॥

मणिद्वीपनीपान्प्रपश्याम्बिके त्वन्तवापारमोदप्रदावासभूतान्
सुधासिन्धुकल्लोलशीताधिवासान् सदानन्दकन्दं विधत्तेमहे-
शि ॥ १६ ॥

हरिन्मणिनिभोद्रिजे तव शरीरकान्त्याधिकः
समस्तकलधौतजोप्यगवरोयमप्युन्नतः ॥
विभाति हरितप्रभस्समृगपक्षिवल्लीद्रुमः
प्रपश्य मुकुरेम्बिके तव सरूपभाग्याधिकम् ॥१७॥

मन्मौलिस्थितचंन्द्रकान्तिनिकरैः कान्त्या स्वया शैलराट्
स्वस्यापारशिखाभिनृत्तशिखिभिः पुंस्कोकिलानां रवैः १८

सारङ्गैरुरगैर्वृकैश्चमरिभिः प्रोद्भूतपुच्छैस्सदा ॥
खड्गानान्निवहैः कलापिजकुलैः प्रोदभ्रदेणीकुलैः १९

हरितमणितृणाग्रे सञ्चरन्तश्चरन्ति
कनकमणिमृगांस्ते मुक्तवैदूर्यचित्राः ॥
रजतनिभकपोतारत्नपादाः कलन्ति
स्वकगलरणितैस्ते स्वप्रियापृष्ठलग्नाः ॥२०॥

हंसानाञ्च कुलं स्ववक्त्रगमहामुक्ताफलम्भक्षति
व्याधूतातिदिगन्तकान्तिबहुलास्ते स्वच्छदेहामलाः॥
क्रीडन्ति प्रसभम्प्रभूतपयसि प्रोत्फुल्लरक्ताब्जिनी
मध्यस्थाइव चक्रवाकजकुलम्मोनं विधत्ते शिवे॥२१॥

सुखयति मृदुवातोप्यत्र प्रीत्या ममाद्य
मृगमदसुमसंस्थैर्गन्धमाद्यत्परागैः ॥ २२ ॥

कस्तूरीमृगकाअपि द्रुततरन्धावन्ति गन्धाशया
स्वस्याङ्गस्थितमप्युमे नहितराजानन्ति मूढाइव ॥
देहेषु स्थितमप्युमे खलु सुरा जानन्ति नो मां यथा
तद्वत्तेपि मृगाविमूढमतयः कैलासशैले मम ॥२३॥

मृदुतरकेतकिधूलिसमूहैः पिञ्जरितशैलवरसानुः ॥
कोनुसुखं न भजेत अत्रस्थोदिविपदोहसत्येव ॥२४॥

हरिन्मणिनिभाः शुकावदनरत्नगोमेदकाः
सुरत्नमणिकल्पिताः कनकहीरनीलप्रभाः ॥
वदन्ति नगमौलिगाः शिव शिव प्रभो पाहि नः
प्रकृष्टदयया दृशा प्रमथनाथ कष्टं हर ॥ २५ ॥

सुशारिकसुकोकिलाहर हरेश विश्वेश्वर
अनाथजनवत्सल पुरहर प्रपश्याद्य नः ॥
इति ध्वनिकृतः सदा शिखरिशीर्षजन्हूरताः
सुरत्नमणिसन्निभास्तरलकान्तरक्ताक्षकाः ॥२६॥

पश्याद्रिजे किसलयं सुरसालजातं
पुंस्कोकिलाः स्वलपनेन तुदन्ति भुक्त्यै ॥
कीराननेः परिपतन्त्यलयः प्रकामं
जम्बूफलभ्रमजिताः शुकतुण्डमूढाः ॥ २७ ॥

पलाशकलिकाभ्रमन्मधुपरागसौख्यादरा
यथाविपदतोम्बिके सुकृततर्पदुःखाकुलाः ॥ २८ ॥

वृक्षालम्बितशृङ्खलासुचलिते वैदूर्यमञ्चे शिव-
स्तद्वत्पुष्पकरागकान्तिविलसन्मञ्चास्थिता साम्बिका ॥
दोलान्दोलनकैर्वने विहरतः स्वैरं शिवस्सुन्दरो
देवीभिः कलितैः सुचामरगणैः सेव्योपि ताभिर्वृतः
॥२९॥

श्रीचन्दनप्रभवसारविलिप्तगात्रौ
चिक्रीडतुर्नगसुमोद्गतवायुगन्धैः ॥ ३० ॥

नखमुखविघटितदाडिमीफलोद्य-
न्मणिनिभबीजवरन्ददाति देवी ॥
स्वकराम्बुजसंस्थकाचपात्रे
वदनं वीक्ष्य महेशितुः सहासम ॥
कीरोपि शङ्करमुखं समवेक्ष्य देवी-
न्नत्वा गिरा समभियाचति बालवाचा ॥ ३१ ॥

देहीश शङ्कर विभो शशिखण्डचूड
माद्यद्रसालकदलीफललारमम्बाम् ॥
आज्ञापयेति तव नाम वदामि शम्भो
विश्वेश मामनुगृहाण सहासवक्त्र ॥ ३२ ॥

इन्द्रनीलमणिकल्पितसौधे मञ्चसंस्तृतशशिद्युतिकान्ते ॥
तल्पकेधिशयितस्य पुरारेः पादपङ्कजयुगं स्वकराब्जैः ॥३३॥

रङ्गमण्डलगता मुहुरम्बा वीणया वदति शङ्करनाम ॥३४॥

रत्नोत्थामलसौधभूमिषु पुरोदेवस्य देव्याः पुरो
रुद्राण्योनवयौवना घनकुचाः क्रीडन्ति तौर्यत्रिकैः ॥
मल्लीगुच्छकचानताननवराः प्रोद्यज्झणन्नूपुराः
कैलासाचलमौलिगाः सुमधुरङ्गायन्ति नृत्यन्तिच३५

॥ रुद्राण्यऊचुः ॥

विश्वेश विश्वाधिक दीनबन्धो
पाहीश शङ्कर विभो दययार्द्रदृष्ट्या ॥
पाहि प्रसीद मदमत्तमरालराज-
मातङ्गजेतृगमने जगताञ्जनित्रि ॥ ३६ ॥

॥ स्कन्दउवाच. ॥

आसत्यलोकावधिशैलमौलि
स्वशेखरापारत्विषातिरस्कृताः ॥
तत्रस्थदेहाः प्रणमन्ति देवताः
श्रीचन्द्रसूर्यावपि तर्जितौ भयात् ॥ ३७ ॥

महेश्वरापारदयानिधानं
सुधाब्धिकल्लोलितपादपीठम् ॥
समुल्लिहानं शिखरैरपारै-
र्लोकानहोमुड्डुलधौतशैलम् ॥ ३८ ॥

शोशुभ्यते नात्र दिनं न रात्रि-
र्नो ब्रह्मविष्ण्वृष्यसुरामरुद्गणाः ॥
न वाति वायु. प्रलभं हि तत्र
तिग्मांशुशीतांशुरुभौ हि बिभ्यतः ॥ ३९ ॥

अग्निर्नदावेषु शिखावलीढ-
ड्रुक्षेषु तत्कोचकवेणुसङ्घे ॥
वातोपि न प्रचलति द्युमणेःकरोवा
सोमस्य सुन्दरकराः प्रभवन्ति नैव ॥ ४० ॥

एकोरुद्रइति श्रुतिस्तदितरोनास्त्येव तत्रागमो
देव्यादत्तकरः सदैव पशुपस्तत्रैव संचार्यसौ ॥
पश्यल्लिङ्गकदम्बकं गिरिवरोत्फुल्लद्रुमाणां गण-
न्तत्रापारसुगोपुरान्तरगतः स्वैरम्मुदा शङ्करः ॥ ४१ ॥

तत्प्राकारवरैकरक्षणचणाः सन्त्येव कोट्योगणा-
रुद्राण्यश्च चरन्ति तस्य सविधन्नान्ये गणावासुराः
॥४२॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासमौलिवर्णन-
न्नाम अष्टादशोध्यायः ॥ १८ ॥

---

॥ स्कन्दउवाच ॥

तदन्तरास्ति प्राकारोवैडूर्यमणिकल्पितः ॥
राजच्छलामवृषभैर्वैडूर्यमणिकल्पितैः ॥ १ ॥

तद्रत्नसंक्रमाक्रान्तकाञ्चनाखिलपर्वतः ॥
निष्टप्तराजतोभास्वत्तत्कान्त्या पीतवत्स्थितः ॥२॥

तत्र पुष्पवनं दिव्यं नानारत्नगणान्वितम् ॥
नीलगोमेदहीरैश्च पुष्परागैः प्रवालकैः ॥ ३ ॥

कुरुविन्दैर्मरकतैर्मुक्ताभिरभिशोभितम् ॥
नीलोत्पलामलजलकासारमभितः स्थितम् ॥४॥

प्रवालैस्तवकैश्चैव कलिकोत्फुल्लपुष्पकैः ॥
तत्तद्रत्नैश्च सङ्क्लृप्तैरिन्द्रचापनिभप्रभैः ॥ ५ ॥

विततास्च्छमणिभ्राजच्छाणोल्लीढकरप्रभैः ॥
द्योभूमिसर्वलोकेषु तादृशं न वनङ्क्वचित् ॥ ६ ॥

सौदर्यसारसर्वस्वं रम्यं मंजुलमारुतम् ॥
सुवर्णचम्पकोत्फुल्लधूलिकोद्यत्समीरणम् ॥ ७ ॥

तद्वातस्पर्शनेनापि ब्रह्मविष्णुमहेश्वराः ॥
कृतकृत्याभवन्त्येव तदा धन्यतरास्सुराः ॥ ८ ॥

हरिन्मणिनिभाकारैः श्रेणीलम्बिततत्सुमैः ॥
प्रफुल्लतत्सुमामोदधूलिकेलिसुगन्धधृक् ॥ ९ ॥

पाटलामोदबहुलमिन्दीवरगणावृतम् ॥
भ्रमत्सारङ्गमायूरं नवशाड्वलसुन्दरम् ॥ १० ॥

शष्पावृतेव भूर्भाति महामारकतोपलैः ॥
स्वच्छन्दचमरीपुच्छवीजनोड्डीनषट्पदैः ॥ ११ ॥

कर्णिकारैःस्वर्णवर्णैर्नभोभाति हिरण्मयम् ॥
शुभ्राभ्रचयसङ्काशकाशमन्दारसंयुतम् ॥ १२ ॥

रक्ताङ्गमणिमन्दारफुल्लकोरककैः शुभैः ॥
तद्गन्धवन्धुरामोदशीतवन्धुरमारुतम् ॥ १३ ॥

तमालसालजोद्दामघर्घरारावभीषितम् ॥
आरग्वधसुमालोलफुल्लमञ्जरिशोभितम् ॥ १४ ॥

शुकतुण्डप्रभास्वच्छपलाशैर्गुच्छसुन्दरैः ॥
फुल्लपुन्नागजैश्चैव सुमैस्तत्कोरकैरपि ॥ १५ ॥

नभोवतीर्णसरसं भाति मुक्ताद्रवाधिकम् ॥
देवदारुसमैः फुल्लैः कदम्बालम्बिगुच्छकैः ॥ १६ ॥

शेफालिगुच्छैराताम्रैः कुब्जाम्रनिविडच्छदैः ॥
कुरवामोदवकुलमञ्जरीभिर्मनोहरम् ॥ १७ ॥

उद्यदिन्दुकरस्वच्छगुच्छैर्हल्लकसल्लकैः ॥
भल्लभल्लातकोद्दामपारिभद्रोद्भवैः सुमैः ॥ १८ ॥

तमालपिप्पलीगुच्छसुमामोदितमारुतम् ॥
उग्रगन्धायितादिशासमूहैर्मधूकोद्भवैः ॥ १९ ॥

पतत्सुमैश्च भूर्भाति ताराइव नभश्च्युताः ॥
पुण्यक्षयाद्दिवोभ्रष्टायथा सुकृतिनोफलाः ॥ २० ॥

पनसोद्दाममूलस्थफलभारावनामितम् ॥
सुवर्णकन्दुकाकारविलसच्छकुचैरपि ॥२१॥

सौरभामोदपक्वोद्यत्पलाण्डुकुसुमैरपि ॥
उत्तुङ्गमातुलुङ्गैश्च स्थूलनंम्रोरुशाखकैः ॥२२॥

रसगर्भरसालैश्च कम्रकाम्रजसत्फलैः ॥
महानीलमणिप्रख्यैर्जम्बूकारञ्जकैर्वृतम् ॥ २३ ॥

आनम्रदाडिमोत्फुल्लफलैः स्फुटितसत्सुमैः ॥
अङ्कोलकैः शिंशपैश्च अर्जुनभ्राजिगुच्छकैः ॥२४॥

पक्वबिल्वफलामोदतत्सुमोद्बुद्धगन्धितम् ॥
पतत्कपित्थनिवहैस्तथैवामलकादिभिः ॥ २५ ॥

नारङ्गरञ्जितोत्तुङ्गशाखिशाखाभिरन्वितम् ॥
बादामाक्रोडखर्जूरतत्फलानम्रशाखकम् ॥ २६ ॥

जातीफलरसास्वादमाद्यत्कपिगणाकुलम् ॥
रम्यतालफलोद्भूतगन्धानन्दितमारुतम् ॥ २७ ॥

हरिद्रत्ननिभात्यच्छ सुपीतकदलीदलैः॥
रम्यसप्तच्छदोपेतं नारेलफलगुच्छकैः ॥ २८ ॥

सितासितफलानम्रमारुतोद्धूतमौलिभिः ॥
उद्यद्युमणिगर्भाभपूगीफलभरैर्द्रुमैः ॥ २९ ॥

स्तवकानतिसंफुल्लराजत्कुटजपङ्क्तिभिः ॥
कुटजैर्वटजैश्चैव कूटागारमिव स्थितम् ॥ ३० ॥

विभ्राजत्धवलात्यच्छबालार्कसमकेसरम् ॥
नीपानोकहजात्युच्चैरशोकैः शोकनाशकैः ॥ ३१ ॥

प्रभातवुधसद्बोधिद्रुमच्छदरवाण्डजैः ॥
बकुलैर्धूतकोलैश्च केसरामोदसुन्दरैः ॥ ३२ ॥

पक्वेलाकोलजैः शुभ्रैः सुगन्धबदरीधवैः ॥
सुगन्धवत्धजम्बूकसुगन्धामोदिमारुतम् ॥३३॥

कन्दर्पवर्ष्मसङ्काशकाश्मीरद्रुमकेसरैः ॥
तगरामोदबहलङ्कृष्णागरुनगैर्युतम् ॥ ३४ ॥

लोध्रवध्रजभेरुंडप्रकाण्डच्छदगुच्छकम् ॥
वटन्तपस्विनमिव सटाजालाचितस्थिरम् ॥३५॥

खदिरैर्बदरैश्चैव प्रवालैरिव तत्फलैः ॥
कोविदारमहाशाखविदारितनभोघटम् ॥ ३६ ॥

भल्लालिङ्गितसन्मल्लीसुमबन्धुरमारुतम् ॥
वेणुसङ्घर्षणरववीणानादोपमं वनम् ॥३७॥

सल्लकीपल्लवैर्युक्तं मल्लीवल्लीकृताङ्ककम् ॥
वल्योपिलास्यं कुर्वन्ति शाखाभिः फुल्लभल्लकम् ॥ ३८ ॥

गन्धगन्धितदिक्चक्रं वक्राङ्गं शाखिसुन्दरम् ॥
शाखिभिश्च विकर्षन्तन्नभोमण्डलगान्ग्रहान् ॥ ३९ ॥

विकचोडुगणाकारफुल्लागलिततत्सुमम् ॥
नम्यमानमहाशाखन्तद्रत्नविपिनम्महत् ॥ ४० ॥

चन्दनैर्नयनानन्दिसुमगन्धिसमारुतम् ॥
आन्दोलितमहाशाखालंबिताधोमुखस्रजम् ॥ ४१ ॥

गुच्छगच्छदलिव्रातं रसितान्दोलसुन्दरम् ॥
नववाटीवृतं रम्यं रत्नकान्तिझरीभरम् ॥ ४२ ॥

तत्राच्छस्फटिकाकारराजज्जलतरङ्गकम् ॥
वनसौरभशीताच्छशीकरासारमारुतम् ॥ ४३ ॥

गन्धगन्धितपद्मोत्थरजःपटलसुन्दरम् ॥
नीलनालीकसुभगं सरस्तत्र विराजते ॥ ४४ ॥

रत्नसोपानसम्बत्वचलदारक्तहल्लकम् ॥
तन्मध्यसौधं शृङ्गाग्रकलशोज्वलदीसिमत् ॥४५॥

विद्रुमामलतिम्बोद्यत्काञ्चनान्तररङ्गकम् ॥
सहस्रस्तम्भविततं पीठगोपानसीयुतम् ॥
राजत्प्रवालवृषभन्धूयमानपताककम् ॥ ४६ ॥

तत्रोज्वले महारत्नवेदिकासमलङ्कृते ॥
इन्दुकान्तितिरस्कारि हीरधारासमावृते ॥ ४७ ॥

सिंहासनवरे देव्या सहास्ते वृषभध्वजः ॥
जिघ्रंस्तद्वनसंफुल्लसुमगन्धं मनोहरम् ॥ ४८ ॥

मरालकुलसंचारं सारसानां रवं हरः ॥
देव्याः पश्यन्मुखाम्भोजंकालन्नयति शंकरः ॥ ४९ ॥

तत्रैव रुद्रकोट्योपि शूलामललसत्कराः ॥
प्राकारम्परिरक्षन्ति वहिस्तत्प्रान्तरे तु न ॥५०॥

तत्प्राकारन्तद्वनञ्च नलिनीनाञ्च सुन्दरम् ॥
ते रुद्रादेवदेवस्य चन्द्रचूडस्य शासनात् ॥ ५१ ॥

॥ ईश्वरउवाच. ॥

गिरीन्द्रशिखरस्रुतैर्हरितपीतनीलारुणैः
स्रवद्वहझरीभरैर्निखिलरीतिनिर्यासितैः ॥
स्रवत्करटिकुंभवत्स्फुटमदप्रभोयक्षिरि-
स्तमालतिलकैर्धवैस्तिलकितैर्गिरिगैरिकैः ॥ ५२ ॥

नगेन्द्रवरवारणैः प्रतिकृतैश्च सद्वारणै-
र्महेङ्गुदमनोहरर्ज्वलिततेजवल्लीगणैः ॥
विभाति मम शैलराट् गिरिवरागकन्ये भज॥ ५३॥

तद्बिल्वमूलपरिकल्पितरत्नवेदि-
मध्यस्थरत्नकमलामलकर्णिकायाम् ॥
दृष्ट्वागिरीन्द्रतनयाश्रितबाहुरीश-
श्चन्द्रोपलाकलितलिङ्गवराणि देव्या ॥ ५४ ॥

समर्चयति दूर्वया हरिमणिप्रभाभाधिक
प्रकृष्टतरकान्तया द्युमणिबालकान्तिप्रभैः ॥
नवारुणसुबिल्वजैश्छदवरैर्मुहुःशंकरः
फलैश्च रसगर्भितैर्विमलजम्बुनारिङ्गकैः ॥ ५५ ॥

सुदाडिमवरोद्भवैर्विदलितप्रभाभासुरैः
कपित्थकदलीफलैररसरसालपक्वैः फलैः
निवेद्य गिरिजाकरे दधति रक्तकञ्जाधिके ॥ ५६ ॥

॥ स्कन्दउवाच ॥

सरस्थोदेवेशः प्रथितमहिमा वेदशिखरै-
र्नतानामुद्बोधे प्रकटकरुणोभालशशिमान् ॥
प्रचण्डोद्दण्डाण्डस्फुटनविधिजोद्दण्डकुहरो-
हरश्चण्डाखण्डप्रमथमुदितस्ताण्डववरः ॥ ५७ ॥

मुकुन्दब्रह्मेन्द्रैरमरतिलकैस्सेवितपदो-
गणैश्चण्डीशाद्यैः सुरवरतुहुण्डादिगणकैः ॥ ५८ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णनन्नाम
एकोनविंशोध्यायः ॥१९॥

॥ स्कन्दउवाच ॥

तत्रान्तरे हि प्राकारोलक्षयोजनविस्तृतः ॥
हीरसारमहाधारातिरस्कृतशशिद्युतिः ॥ १ ॥

कैलासाचलकान्त्या च तत्क्षीरप्रभयापि च ॥
सुधाम्बुधिमहावीचिविम्बितेन्दुकरैरपि ॥ २ ॥

महेशमुकुटोद्दामचन्द्रास्फारकलादिभिः ॥
भाभासितदिशास्तोमस्तत्प्राकारोत्थशृङ्गकैः ॥ ३ ॥

चन्द्रसूर्यग्रहास्ताराविद्युतोप्यनलोद्विजाः ॥
तिरस्कृतास्तत्प्रभाभिस्तद्गोपुरवराश्रयाः ॥ ४ ॥

महाहीरकसङ्कृप्तानीलनेत्रास्त्रिशूलिनः ॥
तदग्रगोपुरं शुभ्रं पञ्चलक्षप्रमाणकम् ॥ ५ ॥

आसप्तपातालतलादुत्थितं हीरकल्पितम् ॥
कपोतपालिकाभिश्च देहलीभिर्विराजितम् ॥ ६ ॥

रुद्रावतारक्रीडाभिः कलशैर्वृषभैरपि ॥
तस्मिन्नूर्ध्वतरे देव्यानर्घ्यसिंहासनवराश्रयः ॥ ७ ॥

॥ स्कन्दउवाच. ॥

कैलासशैलवरगोपुरहीरसौधे
दिव्यैरनेकमणिकल्पितविष्टरस्थः ॥
देव्यै वदन्पशुपतिःसुमहच्च काल-
न्देवादिलोकमखिलङ्कथयत्युमायै ॥८॥

॥ ईश्वरउवाच ॥

कैलासशैलशिखरस्थितदिव्यलिङ्ग-
सङ्ख्या हरीन्द्रविधिनाप्यहिनायकेन ॥
गण्यन्तएव दिवितारकपांसुजाल-
न्धारापि वर्षजनिताः शृणु शैलकन्ये ॥ ९ ॥

लिङ्गानाङ्कुलमेतदेव गिरिजे मन्दारमालार्चितम्
बिल्वाकोमलपल्लवैरभिनवैर्दूर्वाङ्कुरैः शाङ्करि ॥
काले पुण्यतमे प्रदोपसमये गीताद्यसङ्घे शिवे
कार्यं सर्वसुरासुरैरिति मया रत्नप्रभादीपितम् ॥१०॥

कैलासाचललिङ्गमण्डलमिदम्भास्वज्जटामण्डल-
ङ्गङ्गातुङ्गतरङ्गकाङ्क्षितमहाकाकोदराकल्पकम् ॥
मन्दारद्रुमपुष्पसञ्चयमहाबिल्वादिमल्लीसुमै-
रत्नागारसुकुम्भमध्यविलसन्मध्येर्चितं पश्य वै॥११॥

बिल्वानाम्मूलभागे विलसति मणिभिश्चन्दनैः शीतशीतैः
कर्पूरैश्च सुगन्धितं हरिगणैरामोदजिघ्रासुभिः ॥
नित्यं वेष्टितमौलिभागममलैस्तच्छीतवाताशनैः
सेवेहङ्करुणापयोनिधिरुमे लोके स्वलिङ्गोच्चयम् ॥ १२ ॥

स्वीयैर्मौलिशशाङ्कदीधितिचयैर्गाङ्गैरिवाम्भोधरैः
कूजत्कोकिलसद्विजैरिव महारुद्रादिसन्मन्त्रितैः ॥
सर्वाङ्गेष्वभिषिक्तमैश्वरमहालिङ्गञ्च तत्पत्त्रकै-
र्वातैरेव विलूनवृन्तपतितैः सम्पूजितम्पश्य मे ॥१३॥

एवंमम्प्रभुवि प्रचण्डजरयात्प्रोच्चण्डपिञ्छोत्थितै-
र्वातैरेव शिखण्डिमण्डलमिदं प्रोच्चण्डसत्ताण्डवम् ॥
केकालापमनोहरञ्च विपिने सन्नर्तकीनान्त्वशम्
प्राप्नोतीममतीव सह्हुरसं सत्पुण्यसङ्घैः किल॥१४॥

अस्मिन्बिल्ववने नवारुणदलाक्रान्तोरुशाखान्विते
प्रच्छाये चमरीगणास्तपनलोभीत्यैव मूलव्रताः॥
तत्पत्रेषु पतत्पतत्रनिचयोत्सङ्गाद्गलत्पत्रकैः
पुच्छैश्चामरपङ्क्तिमञ्जुकलितैर्वीजन्ति लिङ्गान्युमे
॥ १५ ॥

सन्तुष्टाभवशैलनन्दिनि शिवे नातः परं विद्यते
मल्लिङ्गार्चनमेव साधनवरं मुक्तिप्रदं शाश्वतम् ॥
किं यज्ञैरखिलव्रतादिचरणैः किन्दानसङ्घैर्जपै-
रेतैः किं वितनोति मुक्तिरिति या साध्वी हि दुःखा-
त्मनाम् ॥ १६ ॥

उद्यद्बालदिवाकरेन्दुसदृशैः कैलासशृङ्गाग्रगै-
र्माणिक्यामलहीरकैश्च कलितैः सौधाग्रशृङ्गैः शिवे ॥
तत्तल्लोकनिवासिभिः सुरगणैः सञ्जातविस्मायकै-
र्नानासूर्यशशाङ्कसम्भवमहाकान्त्याधिकं शोभते ॥ १७ ॥

कैलासाचलपादसानुशिखरे सत्याधिके मेरुगा-
लोकालोकिनएव तत्र विहितादिक्पालसङ्घाः शिवे ॥
ब्रह्माविष्णुहरेश्वरामरवराः सप्तर्षयोमी ग्रहाः
औत्तानात्मजएष भाति नितरान्तारागणाराशयः
॥ १८ ॥

ते मेरुम्परितोभ्रमन्ति गिरिजे पश्याधुना संप्रति
तत्तद्गोपुरमध्यभागविलसत्तौर्यत्रिकाणां स्वनैः ॥
तत्तत्कालशिवार्चनेषु कलितैर्भेरीजशंखारवैः
कैलासोप्ययमीश्वरेश्वरि-महासन्नादनादान्तरः ॥१९॥

मेघानां शतकैरपि प्रमुदितोघोषैकभूपामुखः
श्रीशैलेन्द्रसुते विराजितसुधाधाराभिपातानने ॥२०॥

वसुधाधरकन्दरान्तरस्था-
रदखण्डद्विरदाः किशोरसिंहाः ॥
स्वककन्धरकेसरैर्नगेन्द्रे
परिनर्दन्तिविदीप्तियुक्तमेघान् ॥ २१ ॥

रविरथतुरगोत्थहेषघोष-
म्परिशृण्वन्ति इमे हयारिसङ्घाः ॥
विततानकर्णशृङ्गनेत्रा-
स्तडिदुत्थाखिलघस्मरैकरावाः ॥ २२ ॥

खरखुरपरिघट्टनोत्थधूल्या
जलदनिभं रविमम्बिके प्रपश्य ॥
रविरपि स्वतनूजमुख्यवाहै-
र्गिरिसंस्थैरभिजातलज्जयेव ॥
प्रसभम्मेघगणं विशीर्य हस्तै-
र्विजितास्मीति दिशम्प्रयातियाम्याम् ॥२३॥

गङ्गासागरसङ्गमोत्र गिरिजे सोमेश्वरोयं सदा
शैवानां सफलङ्करोति च मनः सन्तापपापापह ॥२९॥

एष प्रयागःसकलापगाश्रयो
गङ्गापि यत्राम्बुजामित्रजायुता ॥
तत्राप्लुतानान्दिवि दृष्टवासो
विसर्जिताङ्गाइति तेषु मुक्तिः ॥ ३० ॥

सा ब्रह्मणोवेदिरनन्तपुण्यदा
गया पितॄणाम्प्रमुदे भवानि ॥
दृश्यं च तत्रैव पदम्मदीयम्
सुरद्विजानान्तु तथैव वैष्णवम् ॥ ३१ ॥

तन्नैमिषम्पुण्यतमम्महर्षिभि-
स्समावृतान्ताम्वदरीं विलोकय ॥
सचित्रकूटः सुरसङ्घसंवृतः
सप्तैव पुर्योत्र विमुक्तिहेतवः ॥ ३२ ॥

एतद्द्वादशलिङ्गसङ्घमगजे तत्तत्पुरीषु स्थितम्
ॐकारोथ घृणीश्वरोयमगजे श्रीकामनाथोम्बिके ॥
असौ महाकालवरोमहेशो
नागेश्वरो वेणुवनैकसंश्रयः ॥ ३३ ॥

क्षाराम्बुधेस्तीरगतं सुपुण्यदं
वेदाख्यसक्ताननमब्जसंज्ञम् ॥
लिङ्गावृतन्तत्कमलालयाख्यं
श्रीसुन्दरं विष्णुपुरञ्च देवि ॥ ४४ ॥

ततोपि तद्वीपगगन्धमादने
नगोत्तमे लिङ्गवरम्ममाम्बिके ॥
हरिः पुरा भार्गवजेन शप्तो
भार्यावियुक्तोप्यहनत्खरावणम् ॥ ४५ ॥

तेनैव तत्पूजितमाम्बिकेद्य
पश्याधुना सेतुवरं सुपुण्यम् ॥
तत्पश्चिमे पुण्यतमम्ममाम्बिके
हालास्यसंज्ञं वरवेणुसंज्ञम् ॥ ४६ ॥

क्षेत्राणाञ्च पतिः सदैव कथितोवेदेषु पश्यादरा-
द्दारात्सर्वजगन्नतोपि विदुषान्दृष्टात्मनां शैलजे ॥
कष्टान्यप्यसमीक्ष्य योत्र विहितः क्षेत्रेषु वा सादर-
स्तस्मै तां वितरामि मुक्तिमगजे रुद्राक्षभस्मादृते ॥४१॥

इति श्रीशिवरहस्ये प्रथमांशे
ईश्वरदेवीसंवादे क्षेत्रवर्णनन्ना-
म विंशोध्यायः ॥२०॥

॥ देव्युवाच ॥

के गच्छन्ति महादेव एते देव पथा शिव ॥
भित्वैव मण्डलम्भानोः कएते पुरुषोत्तमाः ॥ १ ॥

सोमधामप्रविष्टाः के निवृत्ताश्च ततः पुनः ॥
धूमलेखानिभास्ते के कास्त्रियस्तावराननाः ॥२॥

के तु गच्छन्ति मुदिताविमानैरर्कसन्निभैः ॥
तप्यमानाः कशाघातैर्मुद्गरैरायसैर्नराः ॥ ३ ॥

स्त्रियोबालाश्च पुरुषैर्विकृताङ्गैः प्रहारिणः ॥
पाशबद्धाविकर्षद्भिर्यान्ति के दक्षिणान्दिशम् ॥४॥

ये राजसूयनरसर्वगवाश्वमेधै-
र्मेधादिपञ्चसकलाधिपमाद्रियानाः ॥
ये सप्तहोत्रविधियाजनतोभवानि
सौर्यातिवाहिकगतिं सुकृतैः प्रयान्ति ॥ १५ ॥

इष्टापूर्तध्यानयज्ञावभासा मत्पादाब्जध्यानपूजाविहीनाः ॥
अभ्रन्धूमोरात्रिमासार्धमासैर्यान्त्येवान्ते सोमधामस्य गौरि ॥१६॥

तपः श्रद्धायोगैर्विविधभववर्णाश्रमरताः
ततोनैकोधर्मैः प्रथितगुरुवेदान्तनिरताः ॥
तथैवान्होमासाः पुरुषमथवा मानसमुमे
गतिं यान्त्येवार्या विविधविधिपूजारतिरताः ॥१७॥

चन्द्रादभ्रन्धूमजालञ्च वायुं विद्युद्वर्षञ्चौषधीनाङ्गणेषु ॥
जाताश्चान्ने पौरुषे प्राप्य वीर्यं एवम्भूत्वास्त्रैणगर्भे पतन्ति ॥१८॥

ये वै पापाश्वोष्ट्रचण्डालसर्पा-
भूतद्रोहाद्यान्ति योनौ तिरश्चाम् ॥
ये वै पुण्याविप्रवाहूरुजाताः
शूद्राः पुण्याः पुण्यगर्भेषु देवि ॥ १९ ॥
इष्टापूर्तविमोहितावहुतराअन्यार्चनध्यानिनो-
नान्यच्छ्रेयइतीव मानसरसावालाःपुनर्मन्वते ॥
अल्पज्ञास्ते सर्वधर्मार्थमूढा-
यज्ञैश्चैते तर्तुमम्भोभवाब्धिम् ॥२० ॥

दीक्षाभिस्तपसा व्रतैश्च नियमैः कृच्छ्रैश्च दानैस्तथा
योगैर्वा श्रुतिपाठनैश्च पठनैरिष्टैश्च पूर्तैः शिवे ॥
वेदान्तार्थविचारनन्दितमहाकार्मन्दिवर्यैः शिवे
वर्णी चापि गृही वनी च सततन्तत्प्रोक्तधर्मादरः ॥
यत्प्राप्नोति फलञ्च लोकमखिलम्भूयस्ततोऽप्युत्तम-
ङ्कैलासं समवाप्य मत्पदमहाध्यानेन सम्प्राप्यते
॥ २१ ॥

मखमुखसुखसोमजातधारां
शिखिशिखवितताज्यधाराम् ॥
नखलखितमुखास्तथेन्द्रलेखाः
खगपतिवाहयुताखुवाहयुक्ताः ॥ २२ ॥

शिखिवाहाप्सराविमानयुक्ताः
परिपीत्वा हरिभिर्विमानवर्यैः ॥
अभियान्त्यम्ब विलोकयाद्य नाक-
म्परिपश्यामलपङ्कजास्यनेत्रे ॥ २३ ॥

सुतसङ्घमुदिताः प्रणीतसोमा-
विहरन्ति सगणैश्च नन्दनोत्थैः ॥
सुमजालैश्च सुचन्दनार्द्रगात्राः
परिपश्यन्ति मुखं हि सुन्दरीणाम् ॥ २४ ॥

एते पञ्चनएव केवलमुमे कर्मैकनिष्ठास्सदा
सन्त्यक्तान्यविधिप्रदानितमहादानैकनिष्ठाः परे ॥
ते वै चन्द्रमसम्प्रयान्ति नगजे धूमादिमार्गेण वै
पाथेपात्मककर्मजातसकलम्भुक्त्वा पतत्यन्ततः॥२५

रम्भारम्भोपमोरूद्वयगतसुभगे भेकपृष्ठाभके ते
कुम्भोद्यत्कुम्भिकुम्भोपमकुचयुगुलेनावृतानन्दनेषु ॥
तद्बिम्बोपमसुन्दराधररसम्पीत्वैव पीनाङ्कका-
स्तद्वक्षोजविहारसारहृदयाः पश्याम्बिके यज्वनः २६

एतद्यौवतमण्डलङ्कुचभरासंसक्तसत्केतकम्
भर्त्रालिङ्गनपीनमानसवरन्दिव्याङ्गरागांशुकम् ॥
नानारत्नविकासिताखिलदिशांस्तोमप्रभासुन्दरम्
यानैर्याति सदा मुदा पितृवने भर्त्रग्निदग्धं हि तत्
॥२७॥

गच्छन्ति पश्य मुदिताः सुरचामरौघैः
संवीजितास्तु सुरशक्रसदोविमानैः ॥
गोभूमिवस्त्रान्नसुवर्णकुप्य-
रौप्यप्रदाधान्यमहीसुरत्नदाः ॥ २८ ॥

विप्राग्रहारवनरोपणवापिकाभिः
पान्थान्खरोग्रकिरणैः श्रमभारखिन्नान् ॥
खिन्नाननाङ्गान्सुखशीतवातैः
कन्यान्नपानादिसुपादसेवनैः ॥
विश्रामयन्ति क्षणमम्बिके मे
शालासु ते यान्ति शिवेद्य पश्य ॥ २९ ॥

एते वीरभटाः सुशस्त्रनिवहैर्बाणैरभियोतितै-
र्धारासारशरेषु ये सुमुखतः प्राणांस्त्यजन्ति प्रियान्॥
तेमी मण्डलमाशु सप्रभमुमे तेजोमणेरन्तरा-
यान्त्येवाद्भुतविक्रमार्जितयशः स्फीताखिलाशातटाः ॥ ३० ॥

श्रुत्युक्ताचारधाराचरणपरिकरार्श्रान्तरायैर्विहीना
भोगाचारविचारवर्जितमनः स्वान्तादराः शाङ्कराः ॥
पारावारभवोग्रसारविरसे त्यक्तादराः शैलजे
ते यान्ति प्रसभम्ममालयमिदं नान्येध सत्यम्ब्रुवे
॥ ४१ ॥

कैलासाचलरुद्रमूर्तयइमे चन्द्रार्धचूडाः शिवे
नीलेन्दीवरलोचनत्रययुतास्ते नीलकंठाः सदा ॥
मर्त्यार्श्चैव गणाभवन्ति गिरिजे ते शाङ्कराः सर्वदा ॥
॥ ४२ ॥

॥ स्कन्दउवाच. ॥

एतः सर्वगतिं श्रुत्वा शङ्करात्परमेश्वरी ॥
प्रणम्याह महादेवी कैलासवरगोपुरे ॥ ४३ ॥

॥ देव्युवाच. ॥

असारसारम्प्रवदन्ति वेदाः
स्त्रियः प्रजान्नम्पशवोहिरण्यम् ॥
गुणत्रयीमध्यगता प्ररोचना
गुणातिगन्त्वां न भजन्ति केपि ॥ ४४ ॥

प्रवृत्युन्मुखावालकाः कामयन्ते
सुखापारवुध्या महादुःखजालम् ॥
यथा भक्ष्यवुध्या महापाशजालै-
र्निगृण्हन्ति मत्स्यान् जले धीवराश्च ॥ ४५ ॥

कथन्त्वत्पदार्जं खनि वै विमुक्तेः
समायान्ति दुःखाकुलादुर्मुखास्ते ॥
तथा त्वाश्चिदानन्दरूपञ्च सत्य-
ममत्वैकलोलाभवन्त्येव बालाः ॥ ४६ ॥

शशेशृङ्गवार्ता यथा स्याद्यथाजा-
गले वै प्रदुग्धम्मरौ वा यथापः ॥
तथा विश्वगाः प्रार्थयन्तीह कामा-
न्मनोमूलमेतन्मनोनास्ति यत्र ॥ ४७ ॥

भूमात्वङ्गिरिजापतिः शिवतरः सोमार्धधारी हरः
वामार्धाकृतिरप्रमेयविभवस्त्वं सोमधामाननः
वामाङ्गारिरिकामसक्तहृदयस्त्वङ्कृत्तिवासा हरः
॥ ४८ ॥

त्वामप्राप्य महेश सामरमतस्तोपप्रदं शङ्करम्
कामान्प्रार्थयते विमूढहृदयस्त्यस्य श्रमः केवलम् ॥४९॥

गङ्गोमानगतोरमापतिलसन्नेत्राहृतः सर्वदा
धूमाकारघनस्थितोसि भगवन् त्वं व्योमकेशः सदा ॥
धौम्याद्यार्चितपादपद्मयुगलश्चोमापतिः शङ्करः
कामान्मे दिश गौतमादिमुनिभिर्वेदैः स्तुतोसि प्रभो ॥५०॥

इति श्रीशिवरहस्ये प्रथमांशे शिवगौरीसंवादे
गतिनिरूपणन्नामैकविंशोध्यायः ॥२१॥

॥ स्कंदउवाच. ॥

कैलासात्पूर्वतोभाति निष्टप्तकनकप्रभः ॥
लक्षत्रयान्तरं तस्मात् भाति मेरुः सुरालयः ॥ १ ॥

तदग्रवृषभस्तम्भे ध्रुवाद्यास्तत्प्रदक्षिणम् ॥
कालचक्रान्तराः सर्वे भ्रमन्ति च दिवानिशम् ॥२॥
ध्रुवसप्तर्षिभिश्चैव राज्ञा चाथ त्रिशंकुना ॥
तदूर्ध्वशैलमौलिस्थाः स्मरशासनशासनात् ॥ ३ ॥

नानाद्रुमलतोपेतं रम्यपक्षिमृगैर्युतम् ॥
सरस्तत्रास्ति विपुलं मानसाख्यं मनोहरम् ॥
उत्फुल्लहेमकल्हारहेमपङ्कजभासुरम् ॥ ४ ॥

तदग्रमौलौ देवानां ब्रह्मविष्णुहरात्मनाम् ॥
दिक्पालानाञ्च सर्वेषां गंधर्वावसथाः कृताः ॥५॥
सत्यलोकोब्रह्मणश्च वैकुण्ठो वैष्णवं पुरम् ॥
अंशोननीति रुद्रस्य पुराणि क्रमशोमुने ॥ ६ ॥

तादृशः कनकाकारःपर्यन्तैर्वर्षभूषितः ॥
कुमुदाकारवद्भाति भूमेः पर्यन्तसागरैः ॥ ७ ॥

रत्नसानुवनारम्यं मेरोर्मूर्ध्नि सुविस्तरम् ॥
तत्रास्ति गोपुरं शंभोर्मणिमाणिक्यभूषितम् ॥
कदाचिच्छ्रीमहादेव्या देवोविहरति स्वयम् ॥८ ॥
शप्तोस्ति देवदेवेन स प्रान्तोभूधरस्य हि ॥
योवात्र कश्चित्प्रविशेत्सभवेत्स्त्रीवराकृतिः ॥
वृषस्तम्भनिभोमेरुः कैलासस्यास्य सत्तम ॥ ९ ॥

॥ स्कन्दउवाच ॥

तस्मिन्देव्या वसन् शम्भुः पार्वत्या रुद्रकैर्वृतः ॥
देव्याः सखीभिरभितोदिव्यसिंहासने स्थितः ॥
कदाचिद्देवसङ्घानाम्पुराणि क्रमशः शिवः ॥१०॥
मेरुमौलौ महालिङ्गम्मौर्वीशाख्यम्मनोहरम् ॥
तद्गोपुरमहासौधराजत्कलशवेदिकम् ॥ ११ ॥

तत्र सम्पूजयन्त्येव ब्रह्मविष्णुमहेश्वराः ॥
तल्लिङ्गम्बिल्वपत्रैश्च हेमपङ्कजकैरपि ॥ १२ ॥
धूपैर्दीपैश्च ते देवानैवेद्यैश्च मनोहरैः ॥
प्रदक्षिणप्रणामाद्यैस्तुवन्ति च सुरासुराः ॥ १३ ॥

॥देवाऊचुः॥

कुन्दामन्दमरन्दसौभगमहामन्दारसन्मालिका-
लोलोत्तुङ्गचलत्तरङ्गितमहागङ्गाम्बुजोत्कैरवम् ॥
पर्वानन्दितशर्वरीरमणभोत्तुङ्गाङ्गमौलिं शिवम्
ध्यायाम्यद्य महाघसंसृतिभवं दुःख विहायादरात्।१४।

आरक्तसुन्दरतरैररविन्दवृन्दैरक्तारविन्दमकरन्दपरागमौलिम्॥
मन्दारवन्दितपदाम्बुरुहम्महेशं सुन्दोपसुन्दवरदजगदादिकन्दम्
॥ १५ ॥

मूर्धोधर्मधुपालिसंक्रतियुतन्त्वदन्यजटानिर्झर
शैलान्निर्झरसारिणीय भवतोदृष्टिर्भयाम्भोझरी ॥
उप्सद्रागमसोझटितिनोनोझगियादोहृदि
ते धन्याः सलझलकणि नसभगवान् झङ्घ्रियौ ॥१६॥

॥ सूतउवाच ॥

एवं स्तुवन्ति तन्देवामेरुमौलिस्थितं शिवम् ॥
गन्धर्वाप्सरसःसिद्धामुनयोवीतकल्मपाः ॥१७॥

कैलासेत्र महादेवः सन्निधत्ते सदैव हि ॥
देव्या मणिमये सौधे विहरत्येप शङ्करः ॥ १८ ॥

तद्विहारं शृणुष्वाद्य सर्वपापविनाशनम् ॥
नानाचित्रविचित्राश्च क्रीडास्ताः परमेशितुः ॥
देव्यासह सुरश्रेष्ठावर्ण्यन्ते केन वा हि ताः ॥ १९ ॥

रुद्राण्योनवयौवनाघनकुचास्ताः सोमधामानना
रत्नोत्थामलकान्तिभूपिततनूवल्यः प्रभाभासुराः ॥
सम्बद्धस्तनचोलकेशवलयाःसेवाधिकारादरा
राजन्ते कलधौतसानुशिखरे लीलाक्वणन्नूपुराः॥२०॥

उद्यत्काव्यनिभाच्छचम्पकमहानासालसन्मौक्तिका-
स्ताराकारसुहीरहारवलयैस्तास्तत्र विद्युल्लताः ॥
रुद्राश्चापि महेश्वरन्त्रिजगतामाधारभूतं हरम्
तत्तत्कालसुसेवनैरनुपमैः श्रान्तिं विहायादरात्॥२१॥

स्नानोद्यन्मणिसुन्दरैश्च कलशैस्तागन्धधूपार्पणै-
र्दीपैः केशसुधूपनैः परिकरैः पर्यंकविश्राणनैः ॥
छत्रैश्चामरवीजनैः प्रपदकैरादर्शताम्बूलकै-
र्वीणाभिः पटवासकैरसुकरैः सेवन्ति शर्वं शिवाम् २२

रुद्राण्योनवकोटयश्च सरुणारुद्राश्च कोट्योदश
भैरव्योथ दिगम्बराश्च सततं कोटीभिरन्वासते ॥
योगिन्योप्यतिकोटयोत्र परितस्ताडाकिनीकोटिकम्
रोहीण्या सहितेन्दुधामवदनाः सेवन्ति शम्भुं शिवाम्॥२३॥

कैलासे नवशक्तिरत्नविलसत्पीठे महातत्ववाग्
जातेनैकगकोटिविस्तरयुते श्रीचक्रमध्यङ्गते ॥
बिन्दौ चन्द्रदिनेशकोटियुगुले मञ्चे चतुष्पीठगे
पञ्चब्रह्ममये वयङ्गिरिजयासार्धं हृदावध्महे ॥२४ ॥

शशिप्रसृमरैः करैः सितसितायमानोगिरि-
प्रभाततसुधाम्बुधेश्चलतरङ्गहस्तोत्थया ॥
समुच्चलितनैकया सकलरत्नसंक्षुधया
सुधांशुसकलालकोविहरति स्फुटं सोम्वया ॥२५ ॥

स्वच्छाद्रिपारदमहाकलधौतशैल-
सानुप्रभासमधिकोन्नतपाण्डुरागम् ॥
चञ्चद्विपाणमुकुटीतटलम्बमान-
सच्चामरौघपरिवीजितकर्णतालम् ॥ २६ ॥

कान्त्या त्वया परिगृपंतामिवोद्यतांशु-
मुक्षाणमद्रितनयापतिरक्षकालः ॥
आरुह्य याति नगराजसुतासहायः
श्रीमान् विभुर्भुजगराजकृताधिभूपः ॥ २७ ॥

उक्षाधस्तलयक्षपः प्रचलितोदेवस्य पादाम्बुजे
स्वस्कन्धे मणिपादुकोत्तमलसत्सानन्दचित्तोगणः ॥
पाहीशेति वदन् सदाशिव महादेव प्रभो मां सदा
तारानाथकलाधर श्रुतिशिरः कोटीरपालीगत ॥
॥ २८ ॥

कैलासमौलिधवलोत्तमशृंगसंस्थ-
लिङ्गावलिं समभिवीक्ष्य महोरुहर्षः॥
पश्येति तामगसुताम्प्रवदत्यभीक्ष्ण-
न्त्र्यक्षोक्षताक्षमनसा परिचिन्तनीयः ॥ २९ ॥

सौवर्णरत्नग्वचितैर्मणिजालक्लृप्तै-
श्चक्रैर्महोन्नततलैः शशिधामकुम्भम् ॥
देव्या रथं रथपतिःप्रथितोहिवेदै-
रारुह्य याति नगमौलिमहो द्विजेन्द्राः ॥ ३० ॥

नानारत्नयुतप्रभाततिततम्मुक्ताच्छगुच्छान्वित-
म्पालीपालिमरालराजनिकरैर्मुक्तावितानैर्युतम् ॥
भ्राजद्दिव्यपताकचामरयुतञ्छत्रैरपरिवृत-
मारुह्याखिलशैलराजसुतया दिव्यं विमानं हरः
॥ ३१ ॥

कैलासोत्तममौलिपालिषु सदा पश्यन्प्रयातीश्वरो
देवादीनखिलान् विलोकयति वै तल्लोकपालानपि ॥
ब्रह्माण्डान्तिकतः स्फुरत्सुरतटिन्याटोपमौलिः शिवो
विश्वश्चित्रमपारचित्रकयुतं युक्तोम्बया केवलः ॥३२॥

॥ ईश्वरउवाच. ॥

सुरतरुनिचितोरुभोगजालाः
सुरतरुसञ्चितदेवपुण्यवार्भिः ॥
सरभसमपयान्ति कर्मदेवा
गिरिजे पश्य महाविमानवर्याः ॥ ३३ ॥

देवस्त्रीकरकङ्कणोल्लसमणिस्फारत्प्रभाभासुरा
देवोद्याननिकुञ्जसीमसुभगैः स्रग्गन्धवातैरपि ॥
तत्रत्याच्छसुधासुधाधररसाः स्वादौदनाः केवलम्
ते देवैः सह भोगभाग्यनिकरैः पुष्णन्ति पश्याम्बिके
॥३४॥

विष्णुब्रह्ममरुद्गणैः सममुमे मां पश्य ते योधमो
लालाजालमुखेषु पूयक्रिमिजापारेमलाब्धौ स्थितः॥
शस्त्रोग्रद्विपिनाग्रगक्रकचकेष्वाकल्पविष्टाशन-
श्चण्डालः स हि दुःखपुञ्जमनिशम्भुक्तेऽवशः केवलम्॥
तिष्ठत्येव कनिष्टनिष्ठुरवचोदष्टः कशाताडितो
दृष्टत्कष्टजभोगभाग्यफलभाक् मन्निन्दनाददिजे
॥ ३५ ॥

पश्य नारकगणं हि दुःखितं लिङ्गमङ्गलसुदर्शनोज्झितम्
कुम्भतैलपचनेन सुपक्वभक्ष्यवन्निगिरते यमएनम्॥३६॥

रुद्राक्षकण्ठकरकर्णमहारुहाराः
कोटीरकङ्कणकशोभितबाहुदंडाः ॥
प्रदोपलिङ्गार्चनालिङ्गधामसन्दर्शनानन्दितवृत्तयोये ॥
यान्त्येव कैलासवरम्ममालयन्तएव हारामम सम्मताःशिवे
॥ ३७ ॥

कैलासाचलमौलिसंस्थितमहालिङ्गालयेपूयता
भ्रान्तिन्तेजनयन्ति रत्नकलशानानार्कसोमाइव ॥३८॥

अत्रत्यामललिङ्गमौलिजजटाजूटेन्दुगङ्गादयो
द्योतच्छैलशिखाविराजितशिखाकारोय शैलोमम ॥
पश्याद्रिजे गिरिवरोयतलिङ्गसङ्घम्
सम्पूजितश्च विलसन्नवबिल्वपत्रैः ॥ ३९ ॥

तत्रैव गाङ्गजपयोजवरत्नमील-
न्मौलिस्थचन्द्रजकरैर्ललितं विभक्तम् ॥
सौरभ्य सुन्दरतरं स्फुटमद्य देवि
संफुल्लमुत्पलवनं त्वमिह प्रपश्य ॥ ४० ॥

गणकरसम्पुटोत्थशंखनादै-
र्मधुरैर्मर्दलडिण्डिमोत्थनादैः ॥
शिवलिङ्गाग्रगतागणाविरेजु-
र्मम शैलोपि सदैव घोषयुक्तः ॥ ४१ ॥

कैलासोप्ययमद्रिराजतनये मल्लिङ्गमौलिः सदा
जातोमद्वरदानतश्च सुमहत्तेनापि तप्तन्तपः ॥
तत्तादृक् न सुरादिकैरपि पुनस्तत्सम्मुनीनाङ्गणैः
शैवेन्द्रैर्मम मद्गणैरपि शिवे तस्मिन्दया मे परा ॥४२॥
इत्यम्बावदनन्निरीक्ष्य भगवानाह प्रमोदास्पदं
कैलासस्य गुणौघवर्णनमुमादेव्याः पुरः शंकरः ॥
रम्यन्तत्र ममालयं करिवरास्यस्यापि वक्षे मुदा
तस्याप्यद्भुतमीश्वरस्य समुखे संस्थस्य धर्मस्य हि
॥ ४३ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासलिंगवर्णनन्नाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

॥ स्कन्दउवाच ॥

शृणुध्वं ब्रह्मविष्ण्वाद्याजैगीषव्यगणोत्तमाः ॥
तत्रान्तरोस्ति प्राकारोतोरणालंकृतःस हि ॥ १ ॥
राजकुम्भपताकाद्यैर्वृषभैस्तन्मणिप्रभैः ॥
रुद्रावताररचितैर्गवाक्षैः स्फाटिकैरपि ॥ २ ॥
कुमुदैर्व्यालिपीठैश्च देवकोष्ठयुतान्यपि ॥
मण्डपावलिसंक्लृप्तैः सहस्रायुतशोगणैः ॥ ३ ॥
मणिकाञ्चनचित्रैश्च मुक्तावितततोरणैः ॥
सरोभिः सागराकारैरत्नसोपानमण्डितैः ॥ ४ ॥
तत्प्रान्तमण्डपवरैः सहस्रस्तम्भशोभितैः ॥
सरोमध्यमणिव्रातमण्डपैरुच्छ्रितैरपि ॥ ५ ॥

तत्रान्तरे तु प्राकारे गोपुरान्तरदक्षिणे ॥
तत्र मत्सदनन्दिव्यन्नानारत्नचितं शुभम् ॥ ६ ॥

रत्नस्तम्भयुतं सौधन्नवरत्नाग्रशृङ्गकम् ॥
तत्सालभञ्जिकानिर्यद्रत्नकान्तिविभासितम् ॥ ७ ॥

ततः पश्चादंशुमद्भिर्मणिभिः कृतशेखरम् ॥
गवाक्षितं विचित्रैश्च नवरत्नप्ररोहिकम् ॥ ८ ॥

हरिन्मणिकृतैश्चैव मयूरवरकुक्कुटैः ॥
शोभितैर्मण्डपाग्रैश्च वरप्रासादतोरणैः ॥ ९ ॥
प्राकारैः सुन्दरतरैर्गोपुरावलिभासुरैः ॥
मणिद्वारकपाटैश्च शातकुम्भशलाककैः ॥१० ॥

धूपामोदयुतापाररम्योद्दामसुगन्धितम् ॥
मणिदीपप्रभाभासि रञ्जिताखिलदिक्तटम् ॥ ११ ॥
तत्र दिव्यसुमामोदिवनश्चैत्ररथाधिकम् ॥
मण्यालवालकलितरत्नवेदिविपाततम् ॥ १२ ॥

नानादेवद्रुमापारवल्लीगुच्छविराजितम् ॥
कौमारन्नाम तत्रास्ति सरश्चोत्फुल्लपङ्कजम् ॥ १३ ॥

मणिसोपानपालीभिस्तत्प्रान्तमणिमण्डपैः ॥
क्रीडामृगैः शुकैश्चापि मणिपञ्जरशारिकैः ॥ १४ ॥

तत्र तत्सौधमध्यस्थम्ममसौधवराश्रयम् ॥
सिंहासनं रत्नकृतम्पञ्चयोजनविस्तृतम् ॥ १५ ॥

तत्राहं सेवितोवीरैर्नवलक्षैरुदायुधैः ॥
सिंहसंहननैर्वीरैः कौमारैरुद्यतायुधैः ॥ १६ ॥

मत्तद्विपकराकारबाहुभिः शक्तिसंयुतैः ॥
वीरबाहुप्रभृतिभिः पुष्पवस्त्राङ्गलेपनैः ॥ १७ ॥

छत्रचामरहस्तैश्च आसेहं सेवितस्तदा ॥
महार्हवसनोपेतनवरत्नविभूषणः ॥ १८ ॥

षड्वक्त्रमुकुटोद्भासि रत्नकुण्डलकाङ्गदैः ॥
रत्नांगुलीयविलसत्तलांगुलिपदाम्बुजः ॥ १९ ॥

मणिमाणिक्यमञ्जीररणन्नूपुरमेखलः ॥
देववल्या सेनया च इन्द्राद्यैरपि सेवितः ॥ २० ॥

षड्भिश्च वदनैर्देवं स्तुवन्द्वादशलोचनैः॥
पश्यन् लिङ्गं हि कैलासे कौमारेश्वरमीश्वरम् ॥२१॥

हीरसारमहाधाराप्राकारे दक्षिणे स्थितः ॥
सन्नीलगोपुरोत्तुङ्गनीलधारातताद्दिशः ॥ २२ ॥

रुद्रावतारक्रीडादितलशोभैकभासुरम् ॥
राजल्ललामवृषभं शम्भोः कैलासगोपुरम् ॥ २३ ॥
पञ्चलक्षप्रमाणेन कल्पितं विस्तरायतम् ॥
दक्षिणे गोपुरप्रान्ते शम्भोः प्राकारमध्यमे ॥ २४ ॥

तत्कौमारम्पुरम्मेघनानासौधविराजितम् ॥
कौमारैर्मद्गणश्रेष्ठैमया च परिपालितम् ॥ २५ ॥

तत्र मत्पुरमध्यस्थं कौमारेशस्य गोपुरम् ॥
नवरत्नप्रभाभास्वत्प्राकाराट्टालसुन्दरम् ॥ २६ ॥
गर्भागारमहाकान्तिधगत्धगितदिङ्मुखम् ॥
मणिकुम्भोग्रतशिखावलीढगगनाङ्गणम् ॥ २७ ॥
ममेष्टलिङ्गन्तत्रैव देवदेवस्य शूलिनः ॥
त्रिकालन्तत्र तल्लिङ्गम्पूजयामि गणैर्वृतः ॥२८॥
धूपैर्दीपैश्च नैवेद्यैः पञ्चामृतनिषेचनैः ॥
वीणावेणुमृदङ्गादिशंखकाहलनिःस्वनैः ॥ २९ ॥
मधुरोद्दामगीतैश्च कौमारीणाञ्च नर्तनैः ॥
हावभावमनोहारितौर्यत्रिकमनोहरैः ॥ ३० ॥
स्फुरत्कपालकलितत्रिपुण्ड्रतिलकोज्वलः ॥
भस्मरुद्राक्षवलयस्वरावलिविभूषितः ॥ ३१ ॥
षड्वक्त्रपङ्कजस्पन्दिसुधासममहारसैः ॥
स्तौमि स्तोत्रवरैःशम्भुं तत्स्तुतिं शृणु सत्तम ॥३२॥

॥ स्कन्दउवाच ॥

देवदेव हर भोगिभूषण
सर्वशर्व शशिचूड शङ्कर ॥
पार्वतीश नयनत्रयशोभ
त्वां नमामि भवमोचकमीशम् ॥ ३३ ॥
पाहि देव शरणागतभक्त-
न्त्वत्पदार्चनरसैकनिमग्नम् ॥
निर्गुणोपि सगुणः खलु लीला
विग्रहोसि भगवंस्त्रिपुरारे ॥ ३४ ॥

भव महेश शिव शर्वसर्वग
विक्रमाक्रमितलोकचक्रग ॥
पादमूलमपि नो त्रिविक्रमः
प्राप कूपसदनः किमु भेकः ॥ ३५ ॥

सागरोत्तरणहेतवे यथा
देवदेव मुनिवृन्दसेवित ॥
भस्मभूषिततनु स्मरहार
स्वर्णवर्णकृतलोचनभास ॥ ३६ ॥

करुणापारमहार्णवसंस्थ
वर्णितागम अपर्णयार्चित ॥
पर्णपत्ररथपूज्यपदाब्ज
कर्णकुण्डलकृताहिवरेश ॥ ३७ ॥

पारयार्णवभवं सुवर्णधारक
गन्धबन्धमधुपावलिभास्वत् ॥
राजराजशशिकलामलमौले
नीलकैरवकुलैकसुपूज्य ॥ ३८ ॥

कौमारशङ्करगिरोमनसोतिदूर
कर्पूरगौरसुशरीरधृतोरगेन्द्र ॥
मारापहारपुरगर्वहराव्ययेश
विश्वेश्वरावदयया तव बालमिष्टम् ॥ ३९ ॥

इत्थं पद्वदनैः स्तौमि कौमारेशम्महेश्वरम् ॥
मद्गणैर्नवलक्षैश्च तत्कौमारपुरं स्थितम् ॥ ४० ॥

गोपुरन्नीलमणिभिः प्राकारन्तच्च कल्पितम् ॥
तत्कैलासम्महेशस्य शक्तिहस्तैरुदायुधैः ॥
रक्षामि सर्वदा विप्र शासनाच्चन्द्रमौलिनः ॥ ४१ ॥

॥ स्कन्दउवाच ॥

तन्नीलसारपरिकल्पितगोपुरोद्य-
त्कुम्भावलीविततहेमपताकजालम् ॥
शक्रोपलाकलितगोवृषभालिराज
त्प्राकारसौधवहितोरुमणीन्द्रलिङ्गम् ॥४२॥
सम्पूजयन्गणवरैर्भगणेशचूडं-
कैलासपर्वतवरे निवसामि विप्र ॥ ४३ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णने स्कन्दकृत-
स्तुतिर्नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

॥ स्कन्दउवाच ॥

पश्चाद्भागे हरिज्योतिर्हरिन्मणिविराजितम् ॥
पञ्चलक्षप्रमाणेन प्राकारम्मणिगोपुरम् ॥१॥
महामरकतैः क्लृप्तगवाक्षावलिभिर्युतम् ॥
अष्टाशीतिसहस्राणि योजनैः परिकल्पितम् ॥२॥
पश्चाद्भागे तु तद्योतहरिन्मणिनिभादिशः ॥
तत्र गारुत्मतमणिक्लृप्तम्मण्डपशोभितम् ॥३॥
उद्यदिन्दुकरस्वच्छनिर्यज्झरिभिरावृतम् ॥
तत्राच्छस्फटिकोद्दामासिंहासनशतैर्वृतम् ॥ ४ ॥

धूपदीपादिवहुलं नानासुमवनावृतम् ॥
माणिमाणिक्यखचितमंडपे स्वास्तृतासने ॥ ५ ॥
तस्मिंस्तिष्ठति विश्वेशः स्वगणैरार्चिताङ्घ्रिक- ॥
सप्तलक्षगणेन्द्रैश्च विघ्नाद्रिकुलिशोमहान् ॥ ६ ॥
नानारत्नचितानेकभूषणैः परिशोभितः ॥
सिन्दूरविलसत्फालोमहासिन्धुरवक्त्रक- ॥ ७ ॥
माणिक्यमुकुटोद्भासि फालचन्द्रविराजितः ॥
शुण्डादण्डमहाचण्डवृंहितानादिताम्वरः ॥ ८ ॥
कुम्भान्तरललन्मुक्तागुच्छसञ्छायितास्यकः ॥
कर्णपत्रमणिव्रातचलत्कर्णोपि सुच्छविः ॥ ९ ॥
दन्तावलिमहारत्नदन्तवेष्टनसुन्दरः ॥
तदधस्ताल्ललन्मुक्तामणिपत्रविराजितः ॥ १० ॥
सितभस्मत्रिपुण्ड्राङ्ककुम्भमध्यविराजितः ॥
सिन्दूरतिलकोत्फुल्लवदनानन्दशोभितः ॥ ११ ॥
मुक्तागुम्फितकर्णाग्रविजितोड्डीनषट्पदः ॥
स्रवत्कटतटोद्भासि मदगन्धितदिक्तटः ॥ १२ ॥
शिवपादाम्वुजध्यानानन्दोन्मीलितलोचनः ॥
गणसन्दर्शनानन्दसन्दोहोन्मीललोचनः ॥ १३ ॥
महानागनिवद्धोरुपिठरोदरसंयुतः ॥
फुल्लपद्मामलपदः सुरासुरगणानतः ॥ १४ ॥
पाशांकुशरदद्योतमोदकामोदसत्करः ॥
रत्नाङ्गदैश्च केयूरैर्भ्राजत्कारिकरप्रभः ॥ १५ ॥
पादाक्तरणत्सिञ्जद्रत्नमञ्जीरशोभितः ॥
दिव्याङ्गरागसुभगोमणिहाराम्वरावृतः ॥ १६ ॥

पार्श्वद्वयविराजच्छ्रीसिद्धिबुद्धिविराजितः ॥
सर्वाभरणभूषाढ्यः सेवितः पार्श्वयोर्द्वयोः ॥ १७ ॥
गणेन्द्रैश्छत्रदण्डाद्यन्मणिचामरसत्करैः ॥
सेवितः श्रीगणेशानस्तस्मिन्कैलासमण्डपे ॥ १८ ॥
चलच्चामरवातैश्च चलत्कर्णाग्रचामरः ॥
तादृशागणपास्तस्य पाशांकुशकरास्तदा ॥ १९ ॥
महाबलामहोत्साहाः कुठारवरपाणयः ॥
सिन्दूरारुणफालाभ्रात्त्रिपुण्ड्रपरिशोभिताः ॥ २० ॥
रक्षन्ति ते गणास्तत्र प्राकारन्तच्च गोपुरम् ॥
सप्तलक्षामितबलागणेशागणपास्तदा ॥ २१ ॥
तत्रैव देवदेवस्य शासनाच्चन्द्रमौलिनः ॥
गणेशोपि सदाध्यायन्गणेशेश्वरपूजकैः ॥ २२ ॥
तत्रेष्टलिङ्गन्तस्यैव वरप्राकारगोपुरम् ॥
नवरत्नचितान्दिव्यम्मणिस्तम्भचितान्तरम् ॥ २३ ॥
गणेश्वराख्यन्तल्लिङ्गम्मणिधामगतन्तदा ॥
प्रोद्यत्कुम्भपताकाग्रपवनाधूतसाश्चलम् ॥ २४ ॥
स्वकरस्थघृतोत्तुङ्गकुम्भैःपञ्चामृतैरपि ॥
सुधाधाराभिरासिच्य चन्दनालेपसुन्दरम् ॥ २५॥
फणामणिमहामौलिरत्नाभरणशोभितम् ॥
सोयसम्पूजयत्येव बिल्वमन्दारचम्पकैः ॥ २६ ॥
दूर्वाभिः केरलैरीशन्धूपैर्दीपैर्मनोहरैः ॥
नैवेद्यैर्विविधैश्चैव ताम्बूलैश्छत्रचामरैः ॥ २७ ॥
नानावाद्यैर्मृदङ्गानकाहलानाञ्च निःस्वनैः ॥
भस्मरुद्राक्षसम्पन्नः स्तौति देवम्महेश्वरम् ॥ २८ ॥

॥ गणेशउवाच. ॥

गणेशत्रिगुणातीत भगणाधीशमस्तक ॥
गर्जन्मेघगणोद्भूततडिद्गणजटामल ॥ २९ ॥

व्योमकेश भगवन् श्रुतिमौले
स्तोमसामविनुताखिलसोम ॥
भूमभौममहिमागमलिङ्ग
धूमराजिवहलद्युतिकण्ठ ॥ ३० ॥

मारनाशक हरेश्वर शम्भो
वीरधीरसुरसेवितपाद ॥
घोरान्धकासुरनिवर्हण कालकाल
क्रूरान्तरत्रिपुरगर्वहराव्ययेश ॥ ३१ ॥
दहरगगनशेखरोसिशम्भो
निरवद्याखिललोकसौख्यभूमन् ॥
त्रिगुणगतिविदूरदर्शितार्थ
प्रकटितवेदवचोभिरीड्यपाद ॥ ३२ ॥
करे कुरङ्गं शिरसे कपर्दे
हारे भुजङ्गं यमिहृत्सुसङ्गम् ॥
बालाकृताङ्गं सितभस्मसङ्ग
मनङ्गमानाङ्गहरम्भजामि ॥ ३३ ॥

॥ स्कन्दउवाच. ॥

इति स्तोति सदा शम्भुङ्कैलासेशङ्गणेश्वरम् ॥
गणनाथोगणवृतः सदाशिवगणाग्रणीः ॥ ३४ ॥

तत्पाति गोपुरं शम्भोर्मणिप्राकारमप्यसौ ॥
स्वकीयैर्गणपैःसार्धं चन्द्रचूडस्य शासनात् ॥ ३५ ॥

हरिन्मणिकृतं वरं हरितगोपुरं पश्चिमे
विराजिततलाङ्गणैर्वृषललामशृङ्गप्रभैः ॥
गरुन्मणिरसप्रभं विततरत्नसौधोत्तमं
वरप्रवरसुन्दरप्रकटसत्प्रमाकारकम् ॥
स्वबाहुबलमाश्रितोद्विरदवक्त्रजैः सद्गणैः
प्रपाति गणनायकःशिवपदाब्जसंसेवकः ॥ ३६ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णने गणेशकृत-
स्तुतिर्नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

॥ स्कन्दउवाच. ॥

कैलासान्तरतः प्राच्यां पुष्परागविनिर्मितम् ॥
पञ्चलक्षप्रमाणेन प्राकारं वरगोपुरम् ॥ १ ॥
उद्यद्भानुशताधिक्यचाकचक्यमनोहरम् ॥
पुष्परागमणिप्रोद्यद्रूपभैः समाधिष्ठितम् ॥ २ ॥
प्राकारं लक्षमानेन मनसा शूलिना कृतम् ॥
रुद्रावतारचरितैर्वेदिकापट्टिकान्वितम् ॥ ३ ॥
राजद्वृषभकुम्भाग्रदोधूयितपताककम् ॥
पुष्परागमणिज्योतिस्तिरस्कृतशशिद्युतिः ॥ ४ ॥

तत्रैवान्तर्महारत्नगर्भमण्डपमुत्तमम् ॥
स्तम्भैश्च दशसाहस्रैः समुन्नतिमनोहरम् ॥ ५ ॥
शिखाभिर्मणिक्लृप्ताभिर्वलिभीचुम्बिताम्बरम् ॥
नानारत्नमहादेवीपीठविद्रुमपुत्रकैः ॥ ६ ॥
शोभितं रत्नगुच्छाच्छमालालम्बितपीठकम् ॥
तत्र सिंहासने दिव्ये नवरत्नगणैश्चिते ॥ ७ ॥
धूपदीपादिबहुले मुक्तामालापरिष्कृते ॥
वितानद्योतदिक्चक्रे नानारुद्रगणैर्युते ॥ ८ ॥
षष्टिसाहस्रसङ्ख्याकैरहिमन्युभिरुद्धतैः ॥
त्रिपुंड्रविलसत्फालैरुद्राक्षवरभूषणैः ॥ ९ ॥
त्रिशूलोद्यत्करैःशुभ्रैर्हतिचापशरापरैः ॥
जटातटनिबद्धेन्दुशेखरैरिन्दुसत्प्रभैः ॥ १० ॥
समन्तात्सेवितोनित्यं वृषोधर्माकृतिर्महान् ॥
धर्माधारमहापादोयुगनामोरुपादकः ॥ ११ ॥
सन्ध्यांशसुखुरोद्दामवर्णाश्रमकृताङ्घ्रिकः ॥
मणिमञ्जीरनिनदनानाधर्मैकशब्दवान् ॥ १२ ॥
चतुर्वेदोपवेदोद्यद्वेदान्तमतदन्तिकः ॥
पुराणन्यायमीमांसाद्वयतन्त्रोरुघण्टकः ॥ १३ ॥
पूर्वसिद्धान्ततत्त्वरत्नशङ्खघणाघणः ॥
ग्रैवेयशोभितोदारघण्टाकलितकन्धरः ॥ १४ ॥
कैलासोजङ्गमइव शृङ्गद्वयविभूषितः ॥
सुधामण्डलजोत्तुङ्गसुपाण्डुरमहाछविः ॥ १५ ॥
संस्थितोदेवदेवस्य सन्निधो नन्दिकेश्वरः ॥
पञ्चलक्षप्रमाणेन गात्रैः कर्पूरसन्निभैः ॥ १६ ॥

उद्यत्सुधांशुपूर्णाङ्गोलक्षयोजनपृष्ठभूः ॥
ककुदादशसाहस्रयोजनोन्नतवृत्तया ॥ १७ ॥
मुखेन त्रिंशत्साहस्रन्नेत्रयोर्द्विसहस्रकम् ॥
कर्णयोः पञ्चसाहस्रं विषाणे च सहस्रकम् ॥ १८ ॥
नासाविवरमुक्ताच्छनासापञ्चसहस्रकम् ॥
सहस्रयोजनायामलेलिहानाग्रजिह्वकम् ॥ १९ ॥
पश्यन्न निमिषेणैव लोचनाभ्याम्महेश्वरम् ॥
स्वपृष्ठामृतरत्नाच्छप्रमाणालम्बिमौक्तिकम् ॥ २० ॥
स्वनासाविवरोत्थानवातोद्भूतमहागिरि ॥
तद्वातोद्भूतवेलाश्च उद्यतोद्यत्तरङ्गकाः ॥ २१ ॥
समुद्राः सरितश्चैव तच्चलत्खुरदारिता ॥
भूर्भाति कम्पिता शैलैः सागरैश्च विलोलिता ॥ २२॥
शृङ्गकोटिमणिभ्राजिमुकुटेन विराजितम् ॥
कर्णालम्बिशशिज्योतिधवलालम्बिचामरम् ॥२३॥
पञ्चाशल्लक्षमानेन पादैः खुरवरैर्युतम् ॥
दशसाहस्रविस्तारैरिन्द्रनीलमणिप्रभैः ॥२४॥
खुराघृष्टगिरिव्रातन्नादमोहितकन्दरम् ॥
पादावलम्बितापुच्छपञ्चसाहस्रयोजनम् ॥ २५ ॥
हुम्भारवमहाभीतत्रैलोक्यतलवासिनम् ॥
कामधेनुगणैश्चैव कोटिभिः परितोवृतम् ॥ २६ ॥
शरच्चन्द्रप्रभाभास्वत्गिरिमौलिविदारणम् ॥
लम्बिनावृषणेनापि शतयोजनकेन च ॥ २७ ॥
वालेन त्रिंशत्साहस्रयोजनेन विलम्बिना ॥
चामराग्रमहाकोशपुच्छभारेण शोभितः ॥ २८ ॥

मुक्तामाणिक्यजालैश्च प्रोथितेन मणिप्रभः ॥
तत्रास्ति गोपुरं शंभोर्धाम तत्र वृषेशितुः ॥ २९ ॥

प्राकारराजदृषभं तस्येष्टं लिङ्गमैश्वरम् ॥
कामधेनुस्तनोद्भूतैः पयोभिरभिषिच्य च ॥ ३० ॥

गन्धैर्विल्वैश्च मन्दारैः पङ्कजैर्धूपदीपकैः ॥
नैवेद्यैः पायसापूपताम्बूलच्छत्रचामरैः ॥ ३१॥

सम्पूज्य स्तौति धर्मेशं भस्मरुद्राक्षशोभितः॥
मुक्तात्रिपुण्ड्रफालाङ्कोशशिपृकूशृङ्गयोर्द्वयोः॥
पश्यन् संस्तौति हृष्टात्मा नादकीलितदिक्तटः
॥ ३२ ॥

॥ धर्मउवाच ॥

दक्षपक्षकृताशिक्षमहोक्षो-
द्वाहितं सुतिलकं सुरविक्ष्यम् ॥
कुक्षिगाखिलजगद्वसुधेशं
गन्धवाहनुतकायमलक्ष्यम् ॥ ३३ ॥

भूमिमण्डलतलालिगमूलं
कोलरूपहरिणा न विलोकि ॥
अब्जजाण्डजगती विवदेते
पादमौलिकलने तव शम्भो ॥ ३४ ॥

सिन्धूनिपङ्क्ंवृषभं तुरङ्गम्
व्योमाम्बरं सुन्दरमुद्यताङ्गम् ॥
धृतोत्तमाङ्गं हरये रथाङ्गं
दत्तम्महोक्षांगगतं हृदब्जगम् ॥ ३५॥

॥ सूतउवाच ॥

इत्थं स्तौति महादेवं धर्मोवृषवपुर्धरः ॥
सएव धर्मोदेवेशं वहत्यत्यंतभासुरम् ॥ ३६॥
प्राच्यां तद्गोपुरवरं प्राकारं गणपैर्वृतम् ॥
पाति तद्देवदेवस्य स्मरहन्तुश्च शासनात् ॥ ३७ ।
श्रीमत्कैलासशृंगे शिववरगणपैः सिन्धुरास्यानुगैश्च
कौमारैर्गणपैर्वृपेन्द्रगणपैरुद्रैःसमन्ताद्वृतम् ॥
निखिलसुरविधीन्द्रैर्विष्णुना देवसंघैः
श्रुतिगणमुनिवर्यैश्चिन्तितुश्चाक्षमन्तत् ॥ ३८ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णने
वृषस्तुतिर्नाम पंचविंशोऽध्यायः ॥ २५ ॥

---

॥ स्कन्दउवाच. ॥

तदुत्तरेस्ति प्राकारोवैडूर्यमणिरञ्जितः ॥
वैडूर्यानन्तसूत्रैश्च पीतास्तत्रत्यदिक्तटाः ॥१॥
तत्र गोपुरमुक्ताङ्गवैडूर्यमणिशोभितम् ॥
आपीठशिखरप्रोतरुद्रचारित्रशोभितम् ॥२॥
पञ्चलक्षप्रमाणेन महावैडूर्यसद्रूपम् ॥
पाङ्किकादेवकोष्टैश्च कापोतैःपालिपालिकैः ॥ ३ ॥

मणिकुम्भोल्लसच्छुभ्रतन्तुपङ्क्तिशताञ्चितम् ॥
नवलक्षारुद्रगणाः शम्भोरुद्यतशस्त्रकाः ॥ ४ ॥
त्रिपुण्ड्रविलसत्फालाः कपर्दधृतचन्द्रकाः ॥
मत्तमातङ्गसङ्काशायुवानोमृष्टकुण्डलाः ॥ ५ ॥
रक्षन्ति परितस्तच्च प्राकारं वरगोपुरम् ॥
तस्यान्तरे हि सुमहन्नानामणिगणाश्रितम् ॥ ६ ॥
देव्यास्तु भवनं श्रीमत्सौधपङ्क्तिविभूषितम् ॥
रम्यमाणिक्यखचितस्तम्भापारसहस्रकैः ॥ ७ ॥
हीरसारमहाधारैः पुष्परागाङ्गनीलकैः ॥
वैदूर्यकैश्च गोमेदैर्मुक्ताविद्रुमकल्पितैः ॥ ८ ॥
पुष्परागमणिक्लृप्तैर्गोमेदवलभीयुतैः ॥
हरिन्मणिवरोद्भूतैर्मुक्तामणिगणोज्वलैः ॥ ९ ॥
सुप्रवाललतास्तम्भैः कुरुविन्दोरुवेदिकैः ॥
तत्र प्राकारमस्त्येकश्चन्द्रकान्तशिलान्वितम् ॥ १० ॥
विंशत्सहस्रमानेन योजनेन प्रकल्पितम् ॥
चतुर्द्वारपरिक्लृप्तम्महागोपुरवेदिकैः ॥ ११ ॥
रत्नहीरकगोमेदपुष्परागविनिर्जितैः ॥
बालप्रभाकराकारैर्मणिशृङ्गविराजितैः ॥ १२ ॥
देवीक्रीडारसैः सिंहैः पर्यन्तावलिशोभितैः ॥
शरच्चन्द्रसमाकारैः स्फाटिकोत्तमरञ्जितैः ॥ १३ ॥
विकृतास्यलल्जिह्वैः सटाशोभितकन्धरैः ॥
तत्रान्तर्भवनन्देव्यादशसाहस्रकल्पितम् ॥ १४ ॥
योजनानाश्च परितोनवरत्नविचित्रितम् ॥
उद्यदिन्दुकरप्रख्यन्नानाशिल्पकसुन्दरम् ॥ १५ ॥

तत्र देव्यामहापीठं कोटिभास्करसन्निभम् ॥
हीरतारगणाकारप्रभावलिविराजितम् ॥ १६ ॥
नवरत्नमहासौधमध्यगा श्रीमहेश्वरी ॥
कमलामोदबहुलपर्यन्तसरसोत्तरा ॥ १७ ॥
सौधमध्यमणिक्लृप्तसिंहासनवराश्रया ॥
हरिन्मणिमहामञ्चदोलान्दोलितविग्रहा ॥ १८ ॥
सद्भावलास्यललितयोगिनीगणसेविता ॥
कदाचित्सा महादेवी प्रवालवरपीठगा ॥ १९ ॥
प्रवालरत्नपीठस्थरत्नपीठवराश्रया ॥
माणिक्यसौधमध्यस्था भूषिता चारुभूषणैः ॥२०॥
कदाचित्पुष्परागोत्थसौधमध्यैकवासिनी ॥
लीलाखेलनभूताच्छरविसोमाभकन्दुका ॥ ॥ २१ ॥
हननाच्च तयोर्वेगादूर्ध्वाधोगतिसञ्चरैः ॥
उदेति सूर्यश्चन्द्रश्च अस्तमेति उदेत्यपि ॥ २२ ॥
करतालेन देव्यास्तु तस्मिन् सौधवराग्रतः ॥
रत्नसौधलोहामजालकान्तिरसञ्चरा ॥ २३ ॥
सुधाकरकराकारप्रासादद२कौतुका ॥
पुष्पवाटीपरिवृतरत्नसौधवराश्रया ॥ २४ ॥
मुकुदागारमध्यस्था कदाचिद्वरदा शिवा ॥
पुष्पमञ्चकमध्यस्था पुष्परागगृहान्तरे ॥
रत्नवाटीकराभास्वद्रत्नकङ्कणभूषिता ॥ २५ ॥
कदम्बवनमध्यस्था हीरसौधवराश्रया ॥ २६ ॥

लीलालालितरत्नाच्छकीरवीरकरा शिवा ॥
शारिकाव्यक्तकगिरातुष्टानीलजसौधगा ॥ २७ ॥
सुदीपितमहानीलकवरभ्राजिमस्तका ॥
वरभूषणभूपाल्या रणात्सिञ्जानपादुका ॥ २८ ॥
रत्नपात्रस्थितानेकफलालोकनतत्परा ॥
पुष्पगुच्छमहाहारा आपीडामोदहस्तका ॥ २९ ॥
सुधासुखरितामोदरत्नपात्रकराक्वचित् ॥
मुकुटोद्दामचन्द्रांशुरश्मिसारात्मिका शिवा ॥ ३० ॥
रत्नकङ्कतिकामृष्ट केशपाशमनोहरा ॥
योगिनीदर्शितानेकरत्नादर्शविलोकिनी ॥ ३१ ॥
चन्द्रकान्तशिलाजालसौधमध्यनिवासिनी ॥
नयनाञ्जनकाक्षसारत्नभ्राजच्छलाकिका ॥ ३२ ॥
कटमुद्राविनिर्यच्छ्रीर्नखकाञ्चितमुद्रिका ॥
हीरभ्राजितलारक्ताच्छविकापदभासुरा ॥ ३३ ॥
नीलवेणिचितानेकरत्नशोभितमस्तका ॥
महार्हहेमखचितवसनाञ्चलमौक्तिका ॥ ३४ ॥
परिधत्तेंशुकन्देवी मणिभ्राजिगृहान्तरम् ॥
धूपधूमपरिष्कारगन्धवन्धकसुन्दरम् ॥ ३५ ॥
मणिहर्म्यान्तरे पीठे सुमनोगुच्छभासुरे ॥
रत्नांशुदीपकोद्दामप्रभाभासितदिक्तटे ॥ ३६ ॥
संस्थितादर्शितानेकरुद्राणीवदनाम्बुजे ॥
सुचन्दनद्रवासाररागरागितनुच्छविः ॥ ३७ ॥

सुरमन्दारपुन्नागकेतकोद्भासिशेखरा ॥
चम्पकाशोकदमनोशीरकिंशुकपाटलैः ॥ ३८ ॥
मल्लिकामालतीजातिधम्मिल्लभरशोभिता ॥
कस्तूरीचन्द्रगन्धाक्तपटवासैकसुन्दरी ॥ ३९ ॥
मृगनाभिसुगन्धोद्यत्कुचान्तरितभासुरा ॥ ४० ॥
निचोलग्रन्थितोदामभुजावलिविराजिता ॥
रुद्राणिकरसिन्दूरकृतसीमन्तरेखिका ॥ ४१ ॥
सुरत्नतिलकभ्राजि सोमधामसमानना ॥
हस्ताङ्गुलीयविलसत्प्रभाभूषितदिक्ततिः ॥ ४२ ॥
वैडूर्यसौधमध्यस्थारुद्राणीनृत्तदर्शिनी ॥
नीलरत्नकृतालावुमणिसारजहीरकैः ॥ ४३ ॥
ऊर्ध्वबद्धमहातन्त्रीवीणावाद्यादराक्वचित् ॥
गायन्ती मधुरोदारं शिवनामैव सुन्दरम् ॥४४॥
शरच्चन्द्राच्छनिकरचामरैर्वीजिताक्वचित् ॥
मायूरैर्मणिदण्डैश्च व्यजनैर्वीजिता शिवा ॥ ४५ ॥
पर्वोत्थशर्वरीनाथतिरस्कारिमणिव्रजैः ॥
भ्राजच्छत्रावृतमुखा ताम्बूलरसमोदिता ॥ ४६ ॥
वीटिकालग्नसुकरा पश्यंश्चित्रपटे स्थिता ॥
सदाशिवस्य तद्रूपं लिखितं लेखकेशितुः ॥ ४७ ॥
विद्रुमच्छविविच्छेदिबिम्बोष्ठकरशोभिता ॥
रत्नग्रैवेयकलिता मौक्तिकांशुसमप्रभा ॥ ४८ ॥
क्वणत्कङ्कणिकाभास्वद्रत्नहस्तसरैर्युता ॥
तपनोडुपविभ्राजिताटंकायुगलधृतिः ॥ ४९ ॥

ॐ नमः शिवाय.

# शिवरहस्य.

प्रथमांश.

उद्यच्चन्द्रनिभात्यच्छमुक्तानासावृतास्यका ॥
रत्नगङ्गामहासारधारागृहवराश्रया ॥ ५० ॥
कटीतटनिबद्धाच्छरत्नकाञ्चीविराजिता ॥
प्रपादपङ्कजोद्दाममणिमञ्जीरभासुरा ॥ ५१ ॥
रणात्सिञ्जानमधुरहंसारावैकसुन्दरा ॥
मरालराजगमनादिव्यहारावृताङ्गका ॥ ५२ ॥
वङ्किकानागवन्धोद्यद्बाहुवल्लीविराजिता ॥
कूर्पराग्रललन्मुक्तागुच्छसञ्छादितच्छविः । ५३ ॥
आलम्बितरत्नासौ सौधे प्रमुदिता स्थिता ॥
दिव्योपधानसंक्लृप्ते मणिमञ्चे कुथास्तृते ॥ ५४॥
धूपामोदितदिक्चक्रे मणिदीपमनोहरे ॥
वितानालम्बिमुक्तौघगुच्छसञ्छादिताम्बरे ॥
पादबाहूपधानेषु स्वास्तृते विहरञ्छिवा ॥
रुद्राणीगानधाराभिर्वीणानादानुगैः शिवा ॥ ५५ ॥
शृण्वती शिवनामानि संस्थिता वैद्रुमे गृहे ॥
सुवर्णकदलीगुच्छैर्हरिन्मणिनिभैर्द्रुमैः ॥ ५६ ॥
तन्मध्ये स्फाटिकमणिकृतसौधवराश्रया ॥
तमालसालनीपादिवृतसौधे गरुत्मतः ॥ ५७ ॥
मणिक्लृप्तमठे देवी संस्थिता युद्धदर्शिनी ॥
लावकानाम्मयूराणां कुक्कुटानाम्मनोहरम् ॥ ५८ ॥
मेरसारङ्गशृङ्गोद्यत्स्फारनाराविदिकूतटे ॥
रम्ये रत्नाब्जिनीतीरे बद्धे दिक्षु मणीन्द्रकैः ॥ ५९ ॥

सोपानतीरसंक्लृप्तमणिसुन्दरमण्डपे ॥
रत्नपञ्जरमध्यस्थान् रत्नशारीशुकान् शिवा॥ ६०॥
पश्यन्ती दाडिमीबीजन्ददाति शुकवक्त्रके ॥
पूगद्रुवेष्टितापारद्राक्षावल्लीसुगुच्छके ॥ ६१ ॥
सन्ध्यावल्लीसुमस्तोमचन्द्रिकापुष्पशोभिते ॥
पर्यन्तकुल्यातीराच्छमणिबन्धसुधाश्रये ॥ ६२ ॥
पाथोजविकसत्फुल्लहल्लकामोदमोदिते ॥
धारासारमहायन्त्रशोभिते गन्धमोदिते ॥ ६३ ॥
पूगद्रुमालिसञ्छादिमणिहर्म्योरुमञ्चगा ॥
क्रीडाशिखण्डिविहितन्ताण्डवम्पश्यती शिवा ॥६४॥
महामणीन्द्रसंक्लृप्तसौधोरुपरिकल्पिते ॥
नानाचित्रपटीक्लृप्तपटाम्बरगृहोदरे ॥ ६५ ॥
तिरस्करिणिकाक्लृप्ते चतुर्दिक्षु मनोहरे ॥
मणिकुम्भोद्यते देवी मणिस्तम्भाविभूषिते ॥ ६६ ॥
सखीभिःसह संल्लापं कुर्वती संस्थिता क्वचित् ॥
रथैर्युक्ते महासौधे मणिचक्रैर्हयैस्तथा ॥ ६७ ॥
पर्यन्तएव तत्सौधे सिंहहंसविराजिते ॥
तत्रैवान्तर्गृहे देव्या ः क्रीडाभवनमीशितुः ॥ ६८ ॥
श्रीचक्राकारमतुलन्तन्मणीन्द्रमनोहरम् ॥
सहस्रयोजनायामम्मणिचित्रगवाक्षकैः ॥ ६९ ॥
हंसपद्ममहाव्यालीव्यालीचित्रैर्विचित्रितैः ॥
मणिस्तम्भमहासारधाराराजितभूतलैः ॥ ७० ॥

उद्यच्चन्द्रनिभात्यच्छमुक्तानासावृतास्यका ॥
रत्नगङ्गामहासारधारागृहवराश्रया ॥ ५० ॥
कटीतटनिबद्धाच्छरत्नकाञ्चीविराजिता ॥
प्रपादपङ्कजोद्दाममणिमञ्जीरभासुरा ॥ ५१ ॥
रणत्सिञ्जानमधुरहंसारावैकसुन्दरा ॥
मरालराजगमनादिव्यहारावृताङ्गका ॥ ५२ ॥
बड्किकानागबन्धोद्यद्बाहुवल्लीविराजिता ॥
कूर्पराग्रलसन्मुक्तागुच्छसञ्छादितच्छविः ॥ ५३ ॥
भाललम्बितरत्नासौ सौधे प्रमुदिता स्थिता ॥
दिव्योपधानसंक्लृप्ते मणिमञ्चे कुथास्तृते ॥ ५४॥
धूपामोदितदिक्चक्रे मणिदीपमनोहरे ॥
वितानालम्बिमुक्तौघगुच्छसञ्छादिताम्बरे ॥
पादबाहूपधानेषु स्वास्तृते विहरच्छिवा ॥
रुद्राणीगानधाराभिर्वीणानादानुगैः शिवा ॥ ५५ ॥
शृण्वती शिवनामानि संस्थिता वैद्रुमे गृहे ॥
सुवर्णकदलीगुच्छैर्हरिन्मणिनिभैर्द्रुमैः ॥ ५६ ॥
तन्मध्ये स्फाटिकमणिकृतसौधवराश्रया ॥
तमालसालनीपादिवृतसौधे गरुत्मतः ॥ ५७ ॥
मणिकृतमठे देवी संस्थिता पुष्कदर्शिनी ॥
लावकानाम्मयूराणां कुक्कुटानाम्मनोहरम् ॥ ५८ ॥
मेरुसारङ्गशृङ्गोद्यत्स्फारनारावितिकृतटे ॥
रम्ये रत्नाब्धिजनीतीरे वद्धे दिक्षु मणीन्द्रकैः ॥ ५९ ॥

सोपानतीरसंक्लृप्तमणिसुन्दरमण्डपे ॥
रत्नपञ्जरमध्यस्थान् रत्नशारीशुकान् शिवा॥ ६० ॥
पश्यन्ती दाडिमीवीजन्ददाति शुकवक्त्रके ॥
पूगद्रुवेष्टितापारद्राक्षावल्लीसुगुच्छके ॥ ६१ ॥
सन्ध्यावल्लीसुमस्तोमचन्द्रिकापुष्पशोभिते ॥
पर्यन्तकुल्यातीराच्छमणिवन्धसुधाश्रये ॥ ६२ ॥
पाथोजविकसत्फुल्लहल्लकामोदमोदिते ॥
धारासारमहायन्त्रशोभिते गन्धमोदिते ॥ ६३ ॥
पूगद्रुमालिसञ्छादिमणिहर्म्योरुमञ्चगा ॥
क्रीडाशिखण्डिविहितन्ताण्डवम्पश्यती शिवा ॥६४॥
महामणीन्द्रसंक्लृप्तसौधोरुपरिकल्पिते ॥
नानाचित्रपटीक्लृप्तपटाम्वरगृहोदरे ॥ ६५ ॥
तिरस्करिणिकाक्लृते चतुर्दिक्षु मनोहरे ॥
मणिकुम्भायते देवी मणिस्तम्भाविभूषिते ॥ ६६ ॥
सखीभिःसह संल्लापं कुर्वती संस्थिता क्वचित् ॥
रथैर्युक्ते महासौधे मणिचक्रैर्हयैस्तथा ॥ ६७ ॥
पर्यन्तएव तत्सौधे सिंहहंसाविराजिते ॥
तत्रैवान्तर्गृहे देव्याः क्रीडाभवनमीशितुः ॥ ६८ ॥
श्रीचक्राकारमतुलन्तन्मणीन्द्रमनोहरम् ॥
सहस्रयोजनायामम्मणिचित्रगवाक्षकैः ॥ ६९ ॥
हंसपद्ममहाव्यालीव्यालीचित्रैर्विचित्रितैः ॥
मणिस्तम्भमहासारधाराराजितभूतलैः ॥ ७० ॥

उद्यच्चन्द्रनिभात्यच्छमुक्तानासावृतास्यका ॥
रत्नगङ्गमहासारधारागृहवराश्रया ॥ ५० ॥
कटीतटनिबद्धाच्छरत्नकाञ्चीविराजिता ॥
प्रपादपङ्कजोद्दाममणिमञ्जीरभासुरा ॥ ५१ ॥
रणत्सिञ्जानमधुरहंसारावैकसुन्दरा ॥
मरालराजगमनादिव्यहारावृताङ्कका ॥ ५२ ॥
वङ्किकानागवन्धोद्यद्बाहुवल्लीविराजिता ॥
कूर्पराग्रलसन्मुक्तागुच्छसञ्छादितच्छविः ॥ ५३ ॥
भालम्बितरत्नासौ सौधे प्रमुदिता स्थिता ॥
दिव्योपधानसंक्लृप्ते मणिमञ्चे कुथास्तृते ॥ ५४॥
धूपामोदितदिक्चक्रे मणिदीपमनोहरे ॥
वितानालम्बिमुक्तौघगुच्छसञ्छादिताम्बरे ॥
पादबाहूपधानेषु स्वास्तृते विहरच्छिवा ॥
रुद्राणीगानधाराभिर्वीणानादानुगैः शिवा ॥ ५५ ॥
शृण्वती शिवनामानि संस्थिता वैद्रुमे गृहे ॥
सुवर्णकदलीगुच्छैर्हरिन्मणिनिभैर्द्रुमैः ॥ ५६ ॥
तन्मध्ये स्फाटिकमणिकृतसौधवराश्रया ॥
तमालसालनीपादिवृतसौधे गरुत्मतः ॥ ५७ ॥
मणिकूटमठे देवी संस्थिता युद्धदर्शिनी ॥
लावकानाम्मयूराणां कुक्कुटानाम्मनोहरम् ॥ ५८ ॥
मेरुसारङ्गशृङ्गोद्यत्स्फारनाराविदिक्तटे ॥
रम्ये रत्नाब्जिनीतीरे बद्धे दिक्षु मणीन्द्रकैः ॥ ५९ ॥

सोपानतीरसंक्लृप्तमणिसुन्दरमण्डपे ॥
रत्नपञ्जरमध्यस्थान् रत्नशारीशुकान् शिवा ॥ ६० ॥
पश्यन्ती दाडिमीबीजन्ददाति शुकचञ्चवे ॥
पूगद्रुवेष्टितापारद्राक्षावल्लीसुगुच्छके ॥ ६१ ॥
सन्ध्यावल्लीसुमस्तोमचन्द्रिकापुष्पशोभिते ॥
पर्यन्तकुल्यातीरास्थमणिवन्धतुवाश्रये ॥ ६२ ॥
पाथोजाविकसत्फुल्लहल्लकामोदमोदिते ॥
धारासारमहायन्त्रशोभिते गन्धमोदिते ॥ ६३ ॥
पूगद्रुमालिसञ्छादिमणिहर्म्यान्तरमञ्चगा ॥
क्रीडाशिखण्डिविहितन्ताण्डवम्पश्यती शिवा ॥ ६४ ॥
महामणीन्द्ररत्नौघैर्वारपरिकल्पिते ॥
नानाचित्रपर्यङ्कपटाम्बरगृहोदरे ॥ ६५ ॥
तिरस्करिणिकाक्लृप्ते चतुर्दिक्षु मनोहरे ॥
मणिकुम्भे देवी मणिस्तम्भाविभूषिते ॥ ६६ ॥
सखीभिः सह संलापं कुर्वती संस्थिता क्वचित् ॥
रथैर्दुकूलैर्हासौघैः मणिचक्रैर्हयैस्तथा ॥ ६७ ॥
पर्यन्तेष्व तल्पौघे सिंहहंसविराजिते ॥
तत्रैवान्तर्गृहे देव्याः क्रीडाभवनमीशितुः ॥ ६८ ॥
श्रीचक्राकारमतुलन्तन्मणीन्द्रमनोहरम् ॥
सहस्रयोजनायामम्मणिचित्रगवाक्षकैः ॥ ६९ ॥
हंसपक्षमहाव्यालीव्यालीचित्रैर्विचित्रितैः ॥
मणिस्तम्भमहासारधाराराजितभूतलैः ॥ ७० ॥

वितानमालाकलितमुक्तागुच्छालिलम्बितैः ॥
मणिमञ्चैर्महापादलम्बिताधःस्थितैरपि ॥ ७१ ॥
तत्रोद्यतामहाशय्याः सोपधानामनोहराः ॥
चन्द्रमण्डलसङ्काशाः फेनगोक्षीरसत्प्रभाः ॥ ७२ ॥
सुमामोदितगन्धाढ्यामल्लिकापुष्पसंस्तृताः ॥
भ्रमद्दीपगृहभ्राजन्मणिचित्रविभूषिताः ॥ ७३ ॥
देवस्य देव्याः क्रिडादिरसचित्रोरुकुट्टिमाः ॥
धूपवृक्षैर्दीपवृक्षैर्मणिक्लृप्तैः सहस्रशः ॥ ७४ ॥
ताम्बूलक्लृप्तपात्रैश्च मणिभृङ्गारकैः शुभैः ॥
धूपपात्रैर्दीपपात्रैः पुष्पताम्बूलपात्रकैः ॥ ७५ ॥
फलपूर्णैरत्नपात्रैर्मणिकुम्भैः सुधायुतैः ॥
धूपामोदमणिद्योतविराजितमनुत्तमम् ॥ ७६ ॥
मणिपुत्तलिकाक्लृप्तचारुचामरवीजनैः ॥
व्यजनादर्शताम्बूलधृतपुत्तलिकायुतम् ॥ ७७ ॥
गणैश्च रहितोदेवः सखीविरहिता शिवा ॥
तस्मिन् श्रीचक्रसौधेतु क्रीडतस्तौ शिवौ मुने ॥७८॥

॥ स्कन्दउवाच ॥

कैलासे नवशक्तिरत्नविलसत्पीठे महातत्त्ववाग्
जातैनेकगकादिविस्तरयुते श्रीचक्रमध्यङ्गते ॥
बिन्दौ चन्द्रदिनेशकोटियुगुले मञ्चे च तत्पीठके
पञ्चब्रह्ममये वयं गिरिजया सार्धं हृदा दध्महे ॥७९॥

कैलासे नवरत्नहर्म्यविलसन्मञ्चे सुधांभोनिधौ
रत्नैःकल्पितवाटिकापरिवृते चिन्तामणीभायुते ॥
सार्धं योजगदम्बया रविमयश्चैकं सुधावर्ष्मणो
रूपं कौतुकमुत्क्षिपत्यनुदिनरेमे च रात्रिर्दिवा ॥८०॥

* मूर्तिं योविधिविष्णुरुद्रसुरराड्रूपां पुमर्थानपि
चत्वार्येव युगानि वेदनिवहन्दीर्घं फलानां गणम् ॥
कुर्वन्नेव चतुर्दशात्मकमदोवैचित्र्यचित्रे पटे
दीव्यन्नसार्धमशेषभाग्यनिवहोदेव्या भवान्येशया
॥ ८१ ॥

देवः सद्गुणसागरोपि सततं निर्मायिकोनिर्गुणो
भस्मोद्धूलितविग्रहः स्मरहरः श्रीचन्द्रचूडोविभुः ॥
धत्ते देवगणांस्तु भूतिनिचयं धर्मं तथा वाहनं
कालं कर्म च पाशकौ सहि शिवो दीव्यन्सहास्तेम्बया
॥ ८२ ॥

इति श्रीशिवरहस्ये प्रथमांशे देवीवर्णनं नाम
षड्विंशोऽध्यायः ॥२६॥

॥ स्कन्दउवाच. ॥

तत्रैव देव्या सदनं पुनरन्यन्मनोहरम् ॥
गारुत्मतमणेर्भास्वच्छतयोजनविस्तृतम् ॥ १ ॥
वलभीरोचितानेकगवाक्षोद्यतकुम्भकम् ॥
मणिपीठोज्वलस्तम्भक्लृप्तविद्रुमपत्रकम् ॥ २ ॥
सुरत्नवनसंघैश्च सुरत्नकदलीफलैः ॥
सुरत्ननारिकेलाच्छपूगसंघमनोहरम् ॥ ३ ॥

सुरत्नकेतकफलालम्बितच्छन्नभूतलम् ॥
पुष्पमालारसस्वादभ्रमद्भ्रमरसंकुलम् ॥ ४ ॥
तस्मिन्दिव्ये महामञ्चे पुष्पशय्याविराजिते ॥
दमनोशीरकायुक्तवितानाच्छादिताम्बरे ॥ ५ ॥
सुरत्नपङ्कजलसन्मालिकासमलंकृते ॥
अम्लाने सर्वदा तस्मिन्मुकुरोरुतुङ्गकुट्टिमे ॥ ६ ॥
रुद्राणीभिः परिवृता नित्यमास्ते महेश्वरी ॥
सपुष्पालकधम्मिल्ला ताराधिपसमानना ॥ ७ ॥
तरुण्यो रूपसम्पन्नाः कुंभिकुम्भलसत्कुचाः ॥
मणिग्रैवेयहाराढ्यामुक्तारत्नाङ्गदैर्युताः ॥ ८ ॥
मुक्तानासावृताः सर्वाश्चन्द्रिकाक्लृप्तशेखराः ॥
दिव्याङ्गरागसुभगारणन्मञ्जीरिकाङ्घ्रयः ॥ ९ ॥
तास्तत्र सौधवर्येषु देव्योविद्युल्लताइव ॥
संचरन्ति सदा देवीं सेवन्ते जघनोन्नताः ॥ १० ॥
महार्हवसनोपेतास्तिलकालंकृताननाः ॥
ताम्बूलरागरक्ताच्छबिम्बाधरमनोहराः ॥ ११ ॥
चामराग्रकराः काश्चित्काश्चिच्चन्दनधारिणीः ॥
काश्चित्कालाञ्जिकापाणीः काश्चिच्छत्रधरास्तथा ॥ १२ ॥
ताम्बूलरत्नपेटींच धृत्वाञ्जनकरास्तथा ॥
काश्चित्कङ्कतिकाहस्ताभूषापेटीधरास्तथा ॥ १३ ॥
हरिद्राकुंकुमकराश्चालक्तरसधारिणीः ॥
सिन्दूरधारिणीः काश्चित्पादुकाभिर्लसत्कराः ॥ १४ ॥

रत्नहेमाम्बरादीनिमाणिप्रोद्यन्निचोलकम् ॥
रत्नवीणाकराः काश्चिल्लीलाशुककरास्तथा ॥ १५॥
हरिन्मणिमहापिच्छमयूरवरधारिणीः ॥
रत्नादर्शकराःकाश्चित्प्रफुल्लसुमधारिणीः ॥१६॥
चंम्पकातिमहाहस्तारत्नभृङ्गारसत्कराः ॥
खड्गखेटकनिस्त्रिंशशरकार्मुकपाणयः ॥ १७ ॥
निषङ्गसन्ततिकरालीलाकन्दुकधारिणीः ॥
हल्लीसलास्यनिरतादण्डमाण्डितसत्कराः १८॥
अक्षपेटीधराः काश्चित्कस्तूरीगन्धसत्कराः ॥
रत्नपात्रस्थितापारगन्धगन्धितदिक्तटाः ॥ १९ ॥
पटवाससुवासेन हारगुच्छकशेखरैः ॥
पात्रैः प्रोद्यत्कराः काश्चिद्रत्नशूलधरास्तथा ॥ २० ॥
शारिकाबोधनोद्युक्तादेवीनामानि सादरम् ॥
सुधूपवृक्षधारिण्योदीपिकाधारिणीः परा ॥ २१ ॥
गन्धतैलावसिक्तोद्यद्रत्नकुम्भीकरास्तथा ॥
ताम्बूलपात्रविततकराः फलकरास्तथा ॥ २२ ॥
पद्मोत्पलकराः काश्चिदङ्गरागकरास्तथा ॥
नानाफलयुतापारस्वर्णपात्रलसत्कराः ॥ २३ ॥
मणिकुम्भसुधापूरकराःकाश्चिन्मनोहराः ॥
एवं सेवन्ति तां देवीं रुद्राण्यः परितोम्बिकाम् ॥२४॥
तत्तत्सेवारसाभिज्ञादेव्याश्चित्तानुवर्तने ॥
प्रासादेषु च मञ्चेषु मणिसिंहासनेषु च ॥ २५ ॥

पुष्पशय्यां तथा काश्चित्कुर्वन्ति सुकुथावृताम् ॥
भक्ष्यभोज्यान्नकुशलाः पेये रसवरे तथा ॥ २६ ॥
देवीं सेवन्ति तास्तत्र रुद्राण्योनवयौवनाः ॥
तत्र देव्यामहासौधे नवरत्नविचित्रितम् ॥ २७ ॥
गर्भागारं महेशस्य रम्यं देवीश्वरस्य च ॥
प्राकारगोपुरोपेतं रत्नतोरणमण्डितम् ॥ २८ ॥
माणिक्यमुखरोद्दामरुद्रक्रीडावृपैर्युतम् ॥
सुरम्यरत्नकलशपताकाभ्राजिशेखरम् ॥ २९ ॥
तत्र लिङ्गं सुधापूरधवलीकृतदिङ्मुखम् ॥
काकोदरफणाभ्राजिबिल्वालंकृतमस्तकम् ॥ ३० ॥
सुधामकरखण्डोद्यद्रत्नगोलकभूषितम् ॥
तद्वै देवीश्वरं लिङ्गं पूजयत्यम्बिका सदा ॥ ३१ ॥
सुधासागरनीरोत्थकलशैर्नवरत्नजैः ॥
पञ्चामृतमहाधारागन्धामोदैश्च नीरकैः ॥ ३२ ॥
गन्धकर्दमजालेपवेष्टनाम्बरसुन्दरम् ॥
बिल्वचम्पकधत्तूररत्नपङ्कजमालिनम् ॥ ३३ ॥
जातीसुमावलीशोभिलिङ्गमौलिमनोहरम् ॥
तत्कालागरुजोद्भूतधूपधूमैः शिवा तदा ॥ ३४ ॥
कुरुविन्दमणिज्योतिर्दीपैरुद्योतितान्तरम् ॥
पुण्डरीकसुमालाभिस्तथा नीलोत्पलस्रजा ॥ ३५ ॥
हरिन्मणिनिभैर्बिल्वैः सहस्रैः पूजयच्छिवा ॥
भक्ष्यभोज्यवरान्नानां राशिभिः शैलकन्यका ॥ ३६ ॥

ताम्बूलैः खादिरासारस्वर्णकर्पूरखण्डजैः ॥
नीराजनैर्मुखरितं शंखकाहलमर्द्दलैः ॥ ३७ ॥
वीणावेणुजनण्डूत्थदुन्दुभ्याघातनिःस्वनैः ॥
रुद्राणीनर्तनैश्चैव योगिनीगणवादनैः ॥ ३८ ॥
त्रिकालं पूजयत्येव त्रिपुण्ड्रललिताल्का ॥
रुद्राक्षकीलितापारमुक्तामणिमहोज्वला ॥ ३९ ॥
लोमशौचे वाससी सा अरजे धारिणि शिवा ॥
संस्तौति तं महालिङ्गं देवीश्वरमतन्द्रिता ॥ ४० ॥
कृताञ्जलिपुटा देवी प्रकटं चाष्टविग्रहम्

॥ देवीउवाच. ॥

हर हर परिपाहि दीनबन्धो पुरहर देव दयानिधानधीर ॥
सुरहरपरिपूजिताङ्घ्रिपद्म प्रकटसुधाकरशेखरोरुवीर ॥४१॥
करिवरमृगचर्मवस्त्र शम्भो उरगवरोत्तमहार मारहारिन् ॥
परिपाहि दयानिधान भर्ग त्रिनयन कालकलाविहीनदेह४२
श्रुतिवरनुतगीतपाद शम्भो गरगलनीलतमालपुष्पमौले ॥
भवभयहरवारणान्तकारे हरिशरगिरिकार्मुकात्तपाणे ॥४३॥
परिपाहि विभो त्रिशूलपाणे नरहरि कृत्तिवसान बालपाल॥
विधिकन्धरशोभिहस्तपद्मानलनयनाग्निविदग्धकामदेह॥४४॥

अनंतवसनजटाप्रकटभासगुंफादरं
सनन्दनसनातनैर्कलितवन्दनं शङ्करम् ॥
अनिन्दितगुणोत्तमं समुनिवृन्दवृन्दारकैः
पिचिंडिलसुतुंदिलैर्गणवरौघनृत्यादरम् ॥ ४५ ॥

॥ स्कन्दउवाच ॥

इति संस्तुवते देवी देवेशं परमेश्वरम् ॥
रुद्राणीगणसंवीता योगिनीगणसेविता ॥ ४६ ॥

महाकैलासमध्यस्था देवदेवाङ्कसंश्रया ॥
सापि देवं जगन्माता पूजयत्यनिशं शिवा ॥ ४७ ॥
देवदेवं महादेवं गोवृषोत्तमगामिनम् ॥
कण्ठेऽसितं सुधाधामशेखरं श्रुतिसंस्तुतम् ॥ ४८ ॥
जटाकुलं निटिलगानलनेत्रं महेश्वरम् ॥
नीलकण्ठं विरूपाक्षं सोमसूर्यानलाक्षिकम् ॥ ४९ ॥
कुरङ्गनयनावामं कालकालं कृपानिधिम् ॥
भस्माभ्यक्तं त्रिपुण्ड्राङ्कं रुद्राक्षवरहारकम् ॥ ५० ॥
महोरगफणारत्नमालाकीलितकन्धरम् ॥
उद्यदिन्दुकरप्रख्यं कर्पूराभकलेवरम् ॥ ५१ ॥
दिव्यसिंहासनासीनं महाकैलाससौधगम् ॥
गणस्कन्दमहानन्दीभृङ्गीचण्डीश सेवितम् ॥ ५२ ॥
मुकुटोद्दामगङ्गोत्थरयशोभितमस्तकम् ॥
अब्जमित्राग्निनयनं सोमखण्डोज्वलालकम् ॥ ५३ ॥
उत्फुल्लपुण्डरीकाच्छमालाललितकन्धरम् ॥
देवनन्दनमन्दारवरमालाविभूषितम् ॥ ५४ ॥
खपटम्परितोदग्धत्रिपुरासुरगोपुरम् ॥
अन्धकान्तकमाशास्यं स्वभक्तजनवत्सलम् ॥ ५५ ॥
नमिताशेषदेवादिमुकुटोज्वलपादुकम् ॥
वामदेवं महासामस्तोमस्तुतमतीन्द्रियम् ॥ ५६ ॥
रथन्तररवप्रीतं राजराजेन तोषितम् ॥
महावैराजराज्यश्रीराजराजकलधारम् ॥५७॥
सर्वोपनिषदां सारमेकीभूतमिवेश्वरम् ॥ ५८ ॥

ध्यायन्ती शशिशेखरं स्तुतपदं चोत्फुल्लपद्मासनं
देवीशं मुनिनन्दनं च गिरिजा सा पारवस्थान्तरा ॥
नान्यात्किञ्चिदमन्यत त्रिभुवने निस्सारमेतज्जग-
त्तुच्छीकृत्य महाच्छमानसपरास्वात्मानमीशं हृदि ॥
॥ ५९ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवर्णने
देवीपूजास्तुतिर्नाम सप्तविंशोध्यायः ॥ २७ ॥

---

॥ स्कन्दउवाच ॥

तस्यान्तरोस्ति प्राकारोनवरत्नशिलाचितः ॥
अष्टाशीतिसहस्राणां योजनैश्च प्रकल्पितः ॥ १ ॥
ब्रह्माण्डगोर्ध्वमौलिः स प्रोद्यद्भानुसहस्रभाः ॥
न देवा न च गन्धर्वा न यक्षोरगराक्षसाः ॥ २ ॥
गणेन्द्रैरपि दुष्प्रेक्ष्यःप्राकारोरत्नकल्पितः ॥
तत्र शैलाः शिवेनैव अष्ट दिक्षु प्रतिष्ठिताः ॥ ३ ॥
निषधोहेमकूटश्च विन्ध्योमलयदर्दुरौ ॥
मन्दरोहिमवांश्चैव नीलोश्चैव प्रकाशितः ॥ ४ ॥
तेषां तपस्यया शम्भुः सन्तुष्टोनितरां तदा ॥
स्वावासेपि महाशैले महाकैलासपर्वते ॥ ५ ॥

तेषाञ्च नित्यं वसतिं ददौ कारुण्यतः शिवः ॥
अन्यत्र ते शिलाशैलाः कैलासे रत्नसन्निभाः ॥ ६ ॥
प्राकारस्याष्टकोणेषु विहिताः शूलपाणिना ॥
पूर्वतोनिषधोभाति चाग्नेय्यां हेमकूटकः ॥ ७ ॥
विन्ध्योसौ दक्षिणे भाति मलयोनैर्ऋते स्थितः ॥
वारुण्यां दर्दुरोभाति वायव्यां भाति मन्दरः ॥ ८ ॥
हिमवानुत्तरे भाति ऐशान्यां नीलपर्वतः ॥
अष्टादिक्षु स्थिताएते महाकैलासपर्वते ॥ ९ ॥
स्वमौलिभिर्भासयन्ति दिशां स्तोमं नगोत्तमाः ॥
तन्मौलिसौधशिखरे सूर्यचन्द्रातिकान्तिकैः ॥ १० ॥
माणिक्यकान्तोनिषधोऐन्द्यामिन्द्रधनुः प्रभः ।
इन्द्रगोपनिभोभाति भाभासितदिगन्तरः ॥ ११ ॥
अभ्रंकषैः स्वशृंगाग्रैर्लेलिहानइवाम्बरम् ॥
तन्मौलिषु स्थितापाररत्नगोपुरभासुरः ॥ १२ ॥
नानारुद्रावतारैश्च वृषभैश्चैव शोभितः ॥
भाति भासितदिक्चक्रोमुष्णन्चक्षूंषि कान्तिभिः ॥
॥ १३ ॥
तच्छैलमौलिजोत्तुङ्गगजरत्नोरुकुम्भगः ॥
सहस्रसिन्धुरोत्कुम्भधरपीठोमितप्रभः ॥ १४ ॥
महातलोमहासौधः सहस्रस्तम्भमण्डितः ॥
दाडिमीबीजसङ्काशः स्वच्छकान्तिततोरुभाः ॥ १५ ॥
गोपानवेदिकोपेतः सहस्रनलमण्डितः ॥
पद्मरागमणिस्तम्भकलशैश्चैव शोभितः ॥ १६ ॥

नानारत्नमहामालापरिष्कृततदन्तरः ॥
तद्रत्नकान्त्यासैन्द्रीदिक्बालार्कसमवर्णका ॥ १७॥
विभाति मण्डलं भानोस्तत्सौधारुणकान्तिभिः ॥
आरक्तभं हि भो विप्राभाति तच्छैलकान्तिभिः ॥१८॥

तत्रागरुमहाधूमैर्बहुलैर्गन्धवत्तरैः ॥
प्रफुल्लवनजापारगन्धबन्धितमारुतैः ॥ १९ ॥
तत्र सिंहासनासीनोदेव्या साकं महेश्वरः ॥
क्रीडत्यत्यन्तमुदितोगणवृन्दनिषेवितः ॥२०॥

तदखण्डमहास्तम्भान् पद्मरागप्रकल्पितान् ॥
तएव द्योतयत्यन्तः कोटिभास्करसत्प्रभाः ॥ २१ ॥
पश्यन्नैन्द्री दिशं शंभुस्तत्रैवाप्यमरावतीम् ॥
तत्रेन्द्रसदनं देवानिन्द्रादीनमरानपि ॥ २२ ॥
देवानां नंदनोत्फुल्लकुसुमामोदिमारुतम् ॥
जिघ्रन्स्वाङ्गमहाहारकाकोदरसुपारणम् ॥ २३ ॥

सप्ताब्धिचलनास्फालतरङ्गावलिमीश्वरः ॥
फेनबुद्बुदजालैश्च शिवनन्दननान्दितः ॥ २४ ॥
तरङ्गहस्तैः स्वपदं नमन्तइव सागरान् ॥
तत्तदब्धिमहाद्वीपमण्डलं सरितोनगाः ॥ २५ ॥

वनानि देवयानं च स्वर्गिणां च गतीस्तथा ॥
भोगं पातं कर्मिणां च पश्यन् हृष्यति चाम्बया ॥२६॥

निषधेशालयं तत्र मणिकुम्भमनोहरम् ॥
निषधोमूर्तिमांस्तत्र तं लिङ्गं पूजयंस्तदा ॥ २७ ॥
भस्मरुद्राक्षसम्पन्नोदिव्यैः पञ्चामृतैस्तदा ॥
गन्धैश्च वरवासोभिर्बिल्वमन्दारचम्पकैः ॥ २८ ॥
धूपैर्दीपैश्च नैवेद्यैस्ताम्बूलैश्च नमंस्तदा ॥
प्रदक्षिणाभिः सततं निषधेशः स्तुवन् स्थितः॥२९॥

॥ निषधउवाच ॥

निषधेशं भवरोगभेषजं
सुनिषण्णं सकलेषु भूतवर्गे ॥
विषमाक्षं कलुषैर्विहीनदेहं
प्रणमामीश्वरमाभिपादनम् ॥ ३० ॥

॥ सूतउवाच ॥

एवं स्तौति सदा देवं निषधः प्राक्दिशि स्थितः ॥
हेमकूटस्तथाग्नेय्यां दिशि मौलौ महाप्रभः ॥ ३१ ॥
गोमेदकमहारत्नभासुरोन्नतमस्तकः ॥
स्वकान्तिभिस्तदाग्नेयीं दिशं संव्राड्यं स्थितः॥३२ ॥
गोपुरापारशिखरैः स्वमौलितटसंस्थितैः ॥
महर्लोकातिगैःशृङ्गैर्महामणिवरांकितैः ॥ ३३ ॥
रुद्रावतारचरितैर्गोवृषोत्तमभस्तकैः ॥
मणिकुम्भैश्च विततैरत्नमालावलम्बितैः ॥ ३४ ॥
तत्रैव सौधसुमहान्गोमेदमणिसुन्दरः ॥
गोमेदमणिजोत्तुङ्गमहापालीसहस्रगः ॥ ३५ ॥

सहस्रपालीपीठस्थस्तम्भविद्रुमपुत्रिकः ॥
सहस्रपालियंत्रस्थहव्यवाहनपीठकः ॥ ३६ ॥
सहस्रतलसंयुक्तोमणिधाराच्छपालिकः ॥
तदग्नेयमहाकोणगोपुरेष्वंतरास्थितः ॥ ३७ ॥
वेदिकावाटिकोपेतोदेवकोष्ठैश्च मण्डितः ॥
ललामराजद्वृषभोवलभीपरिवेष्टितः ॥ ३८ ॥
बालार्कवितत्तच्छायः स्वच्छातःस्तम्भकान्तिकृत् ॥
तस्मिन्मणिमये मञ्चे लम्बमाने च संस्थितः ॥३९॥
मणिशृंखलसंराजद्वितानपरिवेष्टिते ॥
कृतोपधानेस्वास्तीर्णे तिष्टतीशः सहाम्बया ॥४० ॥
आग्नेयबहुलामोदवनगन्धैश्च सुन्दरः ॥
मारुतोवाति धूपानां प्रमोदामोदसुन्दरः ॥ ४१ ॥
तमालसुन्दरवनमग्निलोकविभूषणम् ॥
अग्निभिः सौधगैस्तत्र सेवितं सुमनोहरम् ॥४२॥
अग्नीश्वराभिधं लिङ्गं पूजयन्तोहि वन्हयः ॥
आग्नेयगणपैश्चैव तत्रतल्लोकवासिभिः ॥ ४३ ॥
पुरा समर्च्य तल्लिङ्गं सर्वभक्षकतान्दधत् ॥
विमुक्तः स तदा वन्हिस्तम्पश्यन् शङ्करोम्बया ॥४४॥
तत्रत्यलोकनिचयं सप्ताब्धिपरिवेष्टितम् ॥
* द्वीपान् वनानि सरितः पश्यत्यम्बासमन्वितः ॥४५॥
हेमकूटोमहाशैलोमूर्तिमान् लिङ्गमैश्वरम् ॥
हेमकूटेश्वरं नाम्ना प्रतिष्ठाप्यकृपायनम् ॥ ४६ ॥
स्तौति देवं हेमकूटं भस्मरुद्राक्षधृङ्नगः ॥ ४७ ॥

॥ हेमकूटउवाच ॥

पापाद्रिकूटकुलिशोत्तम हेमकूट
वीथीकृताखिलसुमेरुज हेमकूट ॥
प्रोद्यत्सुधांशुचयमौलितटोरुभास्व
कोटीर घोटककृतागमकूट पाहि ॥ ४८ ॥

॥ स्कन्दउवाच ॥

इत्थं सदा हेमकूटः स्तौति तत्र महेश्वरम् ॥ ४९ ॥
शैलसौधकवरे परभेश्या चारुचन्द्रशकलामलमौलिः॥
नंदिभृङ्गिगणपैश्च सखीभिः क्रीडति श्रुतिशिखामलवाक्यैः
॥ ५० ॥

इति श्रीशिवरहस्ये प्रथमांशे शैलप्रासा-
दवर्णनं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

स्कन्दउवाच.

यः पस्पर्धपुरा मेरुं विन्ध्योयं चारुकन्धरः ॥
यन्मौलिनिलया देवी सोयं पर्वतशेखरः ॥ १ ॥
इन्द्रनीलमयस्तत्र दाक्षिणे भाति भूधरः ॥
लिहन्सजिह्वया लोकानास्ते सोत्यन्तसुन्दरः ॥२॥
महेशाश्रयजोन्मादमुदितोविन्ध्यभूधरः ॥
त्यक्त्वा स्वानतिजान्त्यतदुःखन्तत्रघटोद्भवात् ॥३॥

सूर्यातिगगताभिश्च शृङ्गैरङ्कितदिक्तटः ॥
तन्मौलिगोपुरोत्तुङ्गशिखैर्वृषभैरपि ॥ ४ ॥
महानीलगणोद्यद्भानीलीकृतदिशोदरः ॥
तन्मौलितिलकोद्दामपुण्डरीकसहस्रकैः ॥ ५ ॥
दंष्ट्राकरालैर्विकृतैर्धारितः सौधसत्तमः ॥
वेदिकावाटिकोपेतःसहस्रस्तम्भमण्डितः ॥ ६ ॥
स्फाटिकेन्द्रमहानीलजालकाङ्कितकुट्टिमः ॥
नीलनीलोत्पलकृतमालाधरविभूषितः ॥ ७ ॥
गवाक्षितइवाभाति अम्बरं तलसुन्दरम् ॥
तस्मिन्सौधोत्तमे मञ्चे इन्द्रनीलोरुपादके ॥ ८ ॥
तस्मिन्मञ्चोपरिलसन्नीललोहितईश्वरः ॥
देव्या सदास्ते नितराङ्गणवृन्दनिषेवितः ॥ ९ ॥
पश्यन् यामीन्दिशं शम्भुर्यमं संयमिनीश्वरम् ॥
नारकाणां विचित्राश्च गतयस्तत्र शङ्करः ॥ १० ॥
क्लिश्यमानान्दह्यमानान् पाच्यमानान्महेनसः ॥
अशैवानथ पापिष्ठान् भस्मरुद्राक्षवर्जितान् ॥ ११ ॥
लिङ्गार्चनविहीनांश्च शिवनामोज्झितांस्तथा ॥
रुद्राध्यायजपैर्हीनान् पञ्चाक्षरविवर्जितान् ॥ १२ ॥
शिवनैवेद्यरहितान् मलाशींस्तत्र शङ्करः ॥
सप्ताब्धिवेष्टितापारभूमिभागान्महेश्वरः ॥ १३ ॥
नगांश्च सरितः पुण्यान् वनान्युपवनानि च ॥
क्रीडत्यत्यन्तमुदितोदेव्यासह महेश्वरः ॥ १४ ॥

विन्ध्यमौलिमहासौधे नीलेन्द्रमणिकल्पिते ॥
विन्ध्योविन्ध्येश्वरं लिङ्गं तत्र सम्पूज्य भक्तितः । १५ ॥
पञ्चामृतैः फलरसैश्चन्दनैर्धूपदीपकैः ॥
विल्वचम्पकमन्दारकरवीरसुपङ्कजैः ॥ १६ ॥
प्रदक्षिणानतीभिश्च मणिनीराजनैरपि ॥
सम्पूज्य विन्ध्यस्संस्तौति भक्त्या विन्ध्येश्वरं शिवम्
॥ १७ ॥

॥ विन्ध्यउवाच ॥

विन्ध्येश विघ्नोनभवेत्कदाचित्
त्वत्पादपूजननतिस्तुतिभिर्ममाद्य ॥
विन्ध्योपि त्वत्पदनिवेदितभोज्यभुक्स्यात्
विन्ध्योप्ययं दृढतरं हि सुखं लभेत ॥ १८ ॥

॥ सूतउवाच ॥

इत्थं स्तौति सदा विन्ध्योविन्ध्येशं तत्र शैलराट् ॥
मलयोनैर्ऋते भाति राजत्सुन्दरशेखरः ॥ १९ ॥
पुष्परागमणिप्रख्योनानानिर्झरकन्दरः ॥
रम्यशृङ्गग्रविलसद्गोपुरावलिभासुरः ॥ २० ॥
रुद्रक्रीडादिसहितोललामवृषभान्वितः ॥
स्वप्रभाभासितोल्लासिसर्वलोकातिगोनगः ॥ २१ ॥
भाति भूमिधरस्तत्र सौधोत्तमविभूषितः ॥
सहस्रसारसोत्तुङ्गशिरोभिर्धारितोमहान् ॥ २२ ॥
पुष्परागमाणिक्यसहस्रस्तम्भमण्डितः ॥
सुरत्नकलशोपेतः सहस्रतलमण्डितः ॥ २३ ॥

पराध्यरत्नखचितसिंहासनवराश्रयः ॥
रत्नगुच्छमहापुष्पसरालम्बितपीठभृत् ॥ २४ ॥
तत्राच्छभूपणोपेतोदेव्या क्रीडति शङ्करः ॥
महामलयजोद्भूतचन्दनामोदिमारुतैः ॥ २५ ॥
चन्द्रचन्दनलिप्ताङ्गोमहाकल्पकपुष्पधृक् ॥
गुग्गुलूद्दामसुभगधूपामोदितादिक्तटः ॥ २६ ॥
तां नैर्ऋतीन्दिशं शम्भुः पश्यन्निर्ऋतिजान् गणान् ॥
कृष्णान्करालान्विकटान्निस्त्रिंशवरधारिणः ॥ २७ ॥
सप्ताम्बुधीनांकोणानितदन्तर्गतभूमपि ॥
द्वीपांश्च सरितः शैलान् वनानि च महेश्वरः॥ २८ ॥
मलयेन स्वनाम्ना वै लिङ्गं तन्मलयेश्वरम् ॥
मणिधामगतन्तत्र पूजितं सर्वकामदम् ॥ २९ ॥
पञ्चामृतैश्चन्दनैश्च बिल्वमन्दारचम्पकैः ॥
धूपैर्दीपैश्च नैवेद्यैः प्रणामप्रक्रमादिभिः ॥३०॥
संस्तुवन्परया भक्त्या गिरिणा मलयेन च ॥

॥ मलयउवाच ॥

मलयेश महेश शङ्कर प्रमथाधीश्वर चारुचन्द्रमौले ॥
त्वयिजातं जगदेतदेव शम्भो
प्रलयं याति लये त्वदीयकुक्षौ ॥ ३१ ॥

॥ स्कंदउवाच ॥

इत्थं स्तौति सदा देवं मलयः शैलसत्तमः ॥
दर्दुरः पश्चिमे भाति नानाशृङ्गवराश्रयः ॥ ३२ ॥
वैदूर्यसारसुभगतत्सूत्रच्छविना ततः ॥
तन्मौलिगोपुरापारशिखरैरतिभासुरः ॥ ३३ ॥

रुद्रावतारचरितैर्महोक्षगणसंकुलः ॥
दोधूयमानशृङ्गाग्रपताकावलिशोभितः ॥ ३४ ॥
महाशार्दूलसाहस्रधारितस्तम्भमणिप्रभः ॥
सहस्रस्तम्भसंयुक्तोवेदिकावाटिकान्वितः ॥ ३५ ॥
मुक्ताच्छगुच्छसञ्छादिवितानविततावरः ॥
धूपामोदातिबहुलगन्धनन्दितदिक्तटः ॥ ३६ ॥
वैदूर्यसारगर्भाच्छसुन्दरान्तरकाश्रितः ॥
तत्र सिंहासनं दिव्यं पञ्चयोजनकल्पितम् ॥ ३७ ॥
परार्ध्यास्तरणोपेतं तस्मिन्देव्या महेश्वरः ॥
विहरत्यप्सरगणैर्वरुणोवारुणीं श्रितः ॥ ३८ ॥
दिशापयोधिनाथेन पालितं यादसां तदा ॥
वैदूर्यरत्नमुकुटतटवक्रेन्दुशेखरः ॥ ३९ ॥
मणिकुण्डलगण्डोद्यत्प्रभाधवलिताङ्गकः ॥
वलयाहीश्वरोद्भासिफणाफाणितहस्तकः ॥ ४० ॥
कृष्णागरुसुधूपोत्थधूमधारानुरञ्जितः ॥
महार्हवसनोपेतश्चलच्चामरयोजितः ॥ ४१ ॥
तद्वैदूर्यमहासूत्रधाराविद्योतितान्तरः ॥
पश्यन्पश्चिमदिङ्नाथं वरुणं तद्गणानपि ॥ ४२ ॥
पाशहस्तान्हरिद्वर्णान् करालारुणदंष्ट्रकान् ॥
तत्रसप्ताब्धिवलयनदीनदवनानि च ॥ ४३ ॥
देवभागांश्च तत्रत्यान् क्षेत्राणि च महेश्वरः ॥
विहरत्यम्बया सार्द्धं सौधे तस्मिन् पिनाकधृक्
॥ ४४ ॥

दर्दुरेशाभिधं तेन पूजितन्दिव्यधामगम् ॥
पञ्चामृतासेचनैश्च गन्धैर्बिल्वैश्च पंकजैः ॥ ४५ ॥
धूपैर्दीपैश्च नैवेद्यैर्नमनप्रक्रमैः स्तवैः ॥
तुष्टावदर्दुरं देवं दर्दुरेशम्महेश्वरम् ॥ ४६ ॥

॥ दर्दुरउवाच ॥

पापापारमतङ्गकुम्भहरण त्वं शंकरोदर्दुरो
भीमोहीश्वरकङ्कणोत्तमलसत्पाणिर्नखोद्यप्रभः ॥
सिंहः सर्वसुरेश्वरोहि भगवानिन्दोःकपर्दोज्वलः
सर्वेषां जनितागरंचजयिताकेशोगुणैर्वाचकः ॥ ४७ ॥

इति श्रीशिवरहस्ये प्रथमांशे शैलसाध-
वर्णनन्नाम एकोनविंशोऽध्यायः ॥२९॥

---

॥ स्कन्दउवाच ॥

वायव्यां मन्दरस्तत्र मणिसुन्दरकन्दरः ॥
महेशस्य प्रियोनित्यं सर्वमन्दारनन्दितः ॥ १
मन्दारतरुभिस्तस्य मौलिस्थैर्दारितादिशः ॥
हरिन्मणिप्रभाधारापरिष्कृतदिगन्तरः ॥ २ ॥
सोयुतं योजनायामैर्विस्तारोच्छ्रायविस्तरः ॥
अतुलः सर्वशिखरिशिखात्रातैकसुन्दरः ॥ ३ ॥
चन्दनानन्दितमुखः सुमगन्धोज्वलच्छिखः ॥
रत्नसालतमालालिमौलिपालिविराजितः ॥ ४ ॥

कुटजोद्दाममुकुटो वरासितजटाधरः ॥
त्रिपुण्ड्रककृताकारतत्कोलाकोलसुन्दरः ॥ २७ ॥
महाहिमकराकारमहाहिवरधृङ्नगः ॥
हरमौलिजटोल्लासिहिमधामोज्ज्वलत्प्रभः ॥ २८ ॥
दिव्यगङ्गापयःपूरनिर्झरावृतकन्धरः ॥
स्वकीयमौलिसौधस्थपङ्कजाकारसप्रभे ॥ २९ ॥
गौरीशङ्करपादाब्जध्याननिर्धूतहृत्तमः ॥
जामातृकन्यकानन्दं प्रीत्या शैलेश्वरस्तदा ॥ ३० ॥
नितरां हर्षवर्षाश्रुकणान्मुचन्निव स्थितः ॥
नीलपीतारुणापाररोतोनिर्यत्सुकन्धरः ॥ ३१॥
तत्र तच्छैलशिखरे महाहीरोपलैः कृते ॥
हीरजालकसञ्छन्ने हीरमञ्चाच्छपादके ॥ ३२॥
परार्ध्यास्तरणास्तीर्णे तगरोद्दामधूपिते ॥
हीरकान्तमणिज्योत्स्नानिवारिततमोगणे ॥ ३३ ॥
महाहीरतमोव्राताकल्पभूषितविग्रहः ॥
देव्या हरिन्मणिततशरीरवरकान्तया ॥ ३४ ॥
नितरां मञ्चमध्यस्थोभाति भाभिर्महेश्वरः ॥
स्वपितुः शिखरे देवी नितरां तोषवेषभृत् ॥ ३५ ॥
रमयत्येव देवेशं यथाकन्यापितृक्षये ॥
भर्त्रा नित्यं प्रमोदेत न तथा श्वशुरालये ॥ ३६ ॥
देव्या विहरतीशानः पश्यन् धनपतेर्दिशम् ॥
यक्षोगणोषितां तत्र तथाचैवालकां पुरीम् ॥ ३७ ॥
शातकुम्भमहाभूमिमुत्तरांश्च कुरूंस्तथा ॥
देवोद्यानानि पुण्यानि सप्ताब्धिपरिवेष्टनम् ॥ ३८ ॥

स्वर्णतालवनं तत्र तत्फलामोदिगन्धभुः ॥
ताम्रपृष्ठां तथा भूमिं सहस्रं योजनायताम् ॥ ३९ ॥
सुधासागरमध्यस्थमणिद्वीपं शिवप्रियम् ॥
नीपापारवनं तत्र रत्ननीपैः समावृतम् ॥ ४० ॥
हिमशैलामलाकारधारासौधे महेश्वरः ॥
देव्या विहरतिस्वैरं चलच्चामरवीजनैः ॥ ४१ ॥
रत्नचाम्पेयमालाभिर्भूषितस्तत्र शंकरः ॥
गणेन्द्रैरुद्यतलसत्रिशूलकरभासुरैः ॥ ४२ ॥
हिमाचलेश्वरं लिंगं चन्द्रस्फटिकधामगम् ॥
अपारवरिवस्याभिर्हिमशैलेन चार्चितम् ॥ ४३ ॥
पञ्चामृतैःफलरसैःरागन्धैर्यक्षकर्दमैः ॥
बिल्वारविन्दकल्हारैश्चम्पकैर्वकसंभवैः ॥ ४४ ॥
धूपदीपोपहारैश्च प्रगामप्रक्रमादिभिः ॥
अस्तोषीन्विमशैलेशं हिमवांश्च कृताञ्जलिः ॥ ४५ ॥

॥ हिमावानुवाच ॥

परिणतहिमधामकान्तिराज-
ज्जटयालम्बितगगयोरुहासम् ॥
भवदाननपङ्कजोत्पलाभे
रविसोमानललोचनैर्विलोकयाशु माम्॥४६ ॥

॥ सूतउवाच ॥

इत्थं हिमाचलः स्तौति हिममौलिमहेश्वरम् ॥
नीलोविभाति चैशान्या कैलासामलपर्वते ॥ ४७ ॥
रम्यसानुशतोपेत. सहस्रशिखरैर्युतः ॥
नीलोपिताभ्रभः शैलः प्रवालमणिभासुरः ॥ ४८ ॥
उदारतरगम्भीरशेखरालेढिताम्बरः ॥
ऐशान्या गोपुरैर्भाति रुद्रक्रीडापरीवृत. ॥ ४९ ॥

उद्यत्द्युमणिसंकाशः कलशैरतिभासुरः ॥
भूसुराणां च शरणःसुरासुरगणावृतः ॥ ५० ॥

महागोपतिभिर्युक्तोविद्रुमाभोरुणोरुभाः ॥
तन्मौलिरत्नकलशैः प्रवालपरिकल्पितैः ॥ ५१ ॥
महाशरभसाहस्रैर्धारितः सौधसत्तमः ॥
हृत्तमोनाशकश्चात्र रम्योभूसुरभासुरः ॥ ५२ ॥
तत्रराजन्ति विविधवेदिसोपानवाटिकाः ॥
सहस्रस्तम्भसय्युक्तः प्रवालमणिकल्पितः ॥ ५३ ॥

सौरेन्दुगणमौलिस्थोभात्युद्यत्तरणिप्रभः ॥
सहस्रतलमौलिस्थप्रवालमणिकुम्भवान् ॥ ॥५४
प्रवालवर्तुलात्यच्छमालागुच्छैकशोभितः ॥
तत्रैव सुमनामोदमाद्यत्पूकृतषट्पदः ॥ ५५ ॥

तत्प्रवालमणिज्योत्स्नानिवारितमस्तटी ॥
तस्मिन्प्रवालपादाच्छमञ्चकेस्तरणास्तृते ॥ ५६ ॥
देव्या विहरति प्रीत्या चन्द्रचूडोमहेश्वरः ॥
सप्ताब्धिवेष्टितापारभूमयोद्वीपकानपि ॥ ५७ ॥
वनानि सरितः शैलान् क्षेत्राण्यपि महेश्वरः ॥
ईशानलोकं तत्रैव नानारुद्रगणैर्वृतम् ॥५८॥
दिव्यन्तरिक्षभूमिस्थैर्हेतिपाशधरैर्युतः ॥
वृक्षौपधीष्वथान्नेच पथिशैलेषु ये चराः ॥ ५९ ॥
ललामराजचन्द्रार्कैर्जटामकुटशोभितैः ॥
गणेन्द्रैरुरगेन्द्रोत्थक्रोधारुणितलोचनैः ॥ ६० ॥

ब्रह्माण्डदलनैश्चैव आपीतार्णवघोपकैः ॥
युतमीशानमाशास्यं पश्यत्यम्वासमन्वितः ॥ ६१ ॥

॥ सूतउवाच ॥

तत्तन्नगवरोद्दाभशिखरेषु शिवालयाः ॥
परितः सन्ति तेषान्तु नाम्ना लिङ्गोत्तमानपि ॥ ६२ ॥
शृणुष्व जैगीषव्य त्वं पापभङ्गाय केवलम् ॥
निषधेशोहेमकेशोविन्ध्येशोमलयेश्वरः ॥ ६३ ॥
दर्दुरेशोमन्दरेशोहिमशैलेश्वरोहरः ॥
नीलेश्वरोहि परितोमहासौधवराश्रयाः ॥ ६४ ॥
रम्यगोपुरकोपेतानागास्तत्र वपुर्धराः ॥
पूजयन्त्यत्र लिङ्गानि विल्वपत्रैर्मनोहरैः ॥ ६५ ॥
नीलोपि तत्र नीलेशं पूज्यसेकैःसुमैरपि ॥
धूपदीपैश्च नैवेद्यैस्तौति नीलेश्वरं शिवं ॥
स्वमौलिमणिजापारधामगं प्राञ्जलिस्तदा ॥ ६६ ॥

॥ नीलउवाच ॥

नीललोहित महागरनीलकन्धरामलकपालभूषण ॥
कालकाल भगवन् कृपाम्वुधे तारयाशु भवसंसृतिजालम् ॥६७॥

इत्थं स्तुवन्ति ते शैलागिरीशागिरिशं तदा ॥६८॥

॥ गिरयऊचुः ॥

हर हर परमेश देवदेव त्रिपुरयमान्धकजातभीतीनाश ॥
अगपतितनयाधव प्रभो नः परिपाहीश्वर देव सार्वभौम॥६९॥

भवताभवतापहारिणावसतानाकाशिरोत्थसौधमौलौ ॥
वयमप्यमलानगाः शिलाभिर्नगवल्लीतृणपक्षिवीरुधैः ॥
॥ ७० ॥
सुमृगैरपि चन्द्रचूड शंभो गतिभाजः सुतरां च धन्यधन्याः ॥
॥ ७१ ॥
वेदेनु प्रथितोसि रुद्रभगवन्मीढुष्टमःशंकरः
बभ्रुः शंभुरखण्डयोपकरणोउग्रोसि भीमोसि च ॥
अस्माकं त्वधियोसि पाहि दययाख्यातोगिरीशोपि च ॥७२॥

इति श्रीशिवरहस्ये प्रथमांशे शैलकृतस्तु-
तिवर्णन्नाम त्रिंशोऽध्यायः ॥ ३० ॥

---

॥ स्कन्दउवाच ॥

तस्मादत्युत्तमोविप्रागणाविष्णुादयःसुराः ॥
कैलासमौलौ तच्छम्भोर्नवरत्नपरिष्कृतः ॥१॥
प्राकारोलक्षमानेन आयामोच्छ्रायसम्मतः ॥
इन्द्रगोपकसंकाशः सुधामणिमहोपलः ॥ २ ॥
कल्पितोस्ति महेशेन मनसैव द्विजोत्तमाः ॥
न मयोविश्वकर्मापि तत्कैलासवरालयम् ॥ ३ ॥
मनसा कल्पितुं शक्यः किं शिल्पैरखिलैरपि ॥
नानारत्नमणिव्रातभासुरश्चन्द्रसुन्दरः ॥ ४ ॥

शाणोल्लीढामलमणिकान्तिसारोयमुत्तम. ॥
रम्योगन्धर्वनगराकाराकारोयमुन्नत. ॥ ५ ॥
तत्प्राकारवरोत्तुङ्गमणीन्द्रवृषभाञ्चित. ॥
आन्तरीक्षे रुद्रगणास्तच्छ्रीप्राकाररक्षकाः ॥ ६ ॥
एकादशसहस्रं वै बाणकार्मुकपाणयः ॥
महानिषङ्गपृष्ठास्ते कपर्दधृतचन्द्रकाः ॥ ७ ॥

सिंहसंहननाः सर्वे युवानोमृष्टकुण्डलाः ॥
करिशुण्डाभवृत्तोरुभुजदण्डवरायुधाः ॥ ८ ॥
चिन्तामणिगणाकारं गोपुरं कुम्भरञ्जितम् ॥
रुद्रावतारचरितैः शोभितं सुमनोहरम् ॥ ९ ॥

मौलिसंस्थमहानन्दीनादिताखिलदिक्तटम् ॥
प्राच्या तद्गोपुरं शम्भोरक्षन्ति गणपाः सदा ॥ १०
प्राकारं चापि ते सर्वे त्रिशूलोद्यतपाणयः ॥
तत्र शम्भोर्गणैर्लिङ्गं पूजितं सर्वकामदम् ॥ ११ ॥
मणिभद्रेश्वरं नाम चिन्तामणिगणक्षये ॥
प्रोद्यत्कुम्भिकवसनैः पूजितं तं गणेश्वरैः ॥ १२ ॥
संस्तुतं परया भक्त्या आन्तरीक्षैर्गणैस्तदा ॥

॥ गणाऊचुः ॥

संसारतापजमहारुजमाशु हीश
सद्योविनाशय महेश्वर चारुदृष्ट्या ॥
रुद्रोभवान् श्रुतिशिखामलगीतकीर्ति.
पाहीश नोधिवचनैर्मिषजांस्त्वमीश ॥ १३ ॥

॥ स्कन्दउवाच ॥

एवं स्तुवन्ति तं देवं मणिभद्रेश्वरं गणाः ॥
तद्दक्षिणेपि प्राकारमुच्चरत्नविनिर्मितम् ॥ १४ ॥
तन्मध्ये गोपुरवरं मणिमाणिक्य निर्मितम् ॥
महामणिशिखाकीलकलितं शेखरान्वितम् ॥ १५ ॥
रुद्रावतारचरितैर्वृषभैश्च समन्वितम् ॥
एकादशसहस्रं वै तोमरासिवरायुधाः ॥ १६ ॥
महाबलामहोत्साहादिव्यास्तत्र गणाः शुभाः ॥
जटामुकुटशोभाढ्यास्ताराानाथकलाधराः ॥ १७ ॥
शिवाज्ञाकारिणः सर्वे यौवनोन्मत्तविग्रहाः ॥
तत्र सम्पूजयन्त्येव दिव्यरुद्रेश्वरं हि ते ॥ १८ ॥
मणिधाम्नि महालिङ्गं पूजास्तुतिभिरीश्वरम् ॥ १९ ॥

॥ रुद्रगणाऊचुः ॥

दिव्येश्वर त्रिदशवर्गजजातदुःखं
सन्तापवृन्दपुरनाशनते विनष्टम् ॥
देवेश ते वरदयारसपात्रमीश
दुःखात्सदाशिव सदैव सुरक्षतां नः ॥ २० ॥

॥ स्कन्दउवाच ॥

एवं स्तुवन्ति ते रुद्रादिव्यरुद्रेश्वरं तदा ॥
गोपुरं तच्च प्राकारं रक्षन्ति सततं सदा ॥ २१ ॥
तत्पश्चान्मणिसंक्लृप्तं प्राकारमणिगोपुरम् ॥
रुद्रावतारचरितैर्ललामवृषशेखरैः ॥ २२ ॥

प्रोल्लसत्ककुदैश्चैव मणीन्द्रमुकुटैरपि ॥
तत्र रक्षन्ति गणपाहेतिशूलवरायुधाः ॥ २३ ॥
त्रिपुण्ड्रावलिफालोरु कपर्दकृतमौलयः ॥
बालारुणपतिप्रख्याश्चश्चन्द्रकलाधराः ॥ २४ ॥
एकादशसहस्रं वै रक्षन्ति गणपास्तदा ॥
दक्षाध्वरविनाशाय महेशाङ्गाद्विनिःसृताः ॥ २५ ॥
रौम्यानाम गणश्रेष्ठामत्तमातंगविक्रमाः ॥
तत्र ते पूजयन्त्येव रौम्येशं मणिधामगम् ॥ २६ ॥
पजयन्ति स्तुवन्त्येव रौम्यानाम गणाः शिवम् ॥

॥ रौम्याऊचुः ॥

त्वद्रोमजातविधिशंकरविष्णुसङ्घा
रक्षन्ति देव जगतां स्थितिनाशकेपि ॥
त्वत्पादपङ्कजरजः शिरसा वहन्तः
पाहिश नोयदयया सरसार्द्रहष्टया ॥ २७ ॥

॥ स्कन्दउवाच ॥

एवं स्तुवान्ति ते रौम्यामहेशं भक्तिभाविताः ॥
उत्तर भौमकानाम गणाःशंभोर्महात्मनः ॥ २८ ॥
एकादशसहस्रं वै विकोशीकृतखड्गकाः ॥
सजलोद्दामजलददेहास्तेचाऽतुलप्रभाः ॥२९॥
भस्मादिग्धास्त्रिपुण्ड्राङ्कारुद्राक्षावलिभासुराः ॥
खेटाढक्काध्वनिकृतोनदत्कुक्कुटकारवाः ॥ ३० ॥
उरगेन्द्राधिकक्रोधाउरगार्यधिकाजवे ॥
शिवाज्ञाकारिणोभौमावहुवीर्यपराक्रमाः ॥ ३१ ॥

तदुत्तरे च प्राकारे मणिसारोज्ज्वलत्प्रभे ॥
तन्मध्यगोपुरे चापि रुद्रक्रीडावृषैर्युते ॥ ३२ ॥
मणिरत्नमहाकुम्भरञ्जिते भानुसप्रभे ॥
तिष्ठन्ति ते च रक्षन्ति प्राकारं तच्च गोपुरम् ॥ ३३ ॥
तैश्च भौमेश्वरोनाम मणिधामगतोऽर्चितः ॥
संस्तुतः परया भक्त्या लिङ्गसंस्थोमहेश्वरः ॥३४ ॥

॥ भौमाऊचुः ॥

भौमेश भूरिरथ तुंगरथांगदाने
संमोदितोहरिशराम्बुजलोचनेन ॥
भूमातिगाखिलगते परिपाहि सोम-
धामोत्तमांग ललनाञ्चितचारुदेह ॥ ३५ ॥

॥ स्कन्दउवाच ॥

इति स्तुवन्ति ते भौमामहादेवं घृणानिधिम् ॥
विंशत्सहस्रं परितः प्राकारमणिगोपुरम् ॥ ३६ ॥
शोभितं वृषभैश्चित्रैर्नानाशिल्पैः सुन्दरम् ॥
मनसाप्यनुमानेन नोपमेयं मनोहरम् ॥ ३७ ॥
चतुर्दिक्ष्वपि ते रुद्राब्रह्मविष्ण्विन्द्रहन्तृकाः ॥
हेतिशूलकराः सर्वे भस्मपाण्डुरविग्रहाः ॥ ३८ ॥
रम्भोपमसुवृत्तोरुद्वयसम्यग्विराजिताः ॥
वक्षःकपाटपट्टाभाहिरण्यकवचैर्वृताः ॥
उष्णीषिणोमुकुटिनउरगेन्द्रोरुमौलयः ॥ ३९ ॥
धावन्तः संस्थिताः केचिन् निषण्णाश्च तथापरे ॥
निषङ्गिणः कवचिनः शरकार्मुकपाणयः ॥ ४० ॥

अस्यन्तःशरवर्षाणि त्वशैवान्प्रति ने सदा ॥ ४१ ॥
पथि वृक्षे जले चैव सागरे भुवि संस्थिताः ॥
विपिने च तथा ग्रामे पुरे खर्वटके तथा ॥ ४२ ॥
शिवाज्ञाकारिणः सर्वे अग्निदीप्तमहौजसः ॥ ४३ ॥

॥ सूतउवाच. ॥

एवं तैर्वरगोपुरैश्च सहितं रुद्राश्चतुर्दिक्ष्वपि
प्राकारं मणिसारसुन्दरतमं राजद्रूपैर्धिष्ठितम् ॥
सर्वेषां पतिना शिवेन जगतां मात्रा सहाधिष्ठितम्
रक्षन्ति किल भक्तियुक्तमनसा विप्राःशिवप्रीतये॥४४॥

इति श्रीशिवरहस्ये प्रथमांशे प्राकारवर्णने
रुद्रगणार्चनं नाम एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

॥ स्कन्दउवाच ॥

तस्यान्तरे शिवेनैव मनसा परिनिर्मिताः ॥
विंशत्सहस्रमानेन आयामोच्छ्रायतस्तदा ॥ १ ॥
प्राक् दक्षिणे प्रतीच्यां वै चोत्तरे शूलपाणिना ॥
मणिप्रभाधिकज्योतिः कैलासनगमौलिगाः ॥ २ ॥
कलधौतनगोद्दामशिखरे तिलकायिताः ॥
पुमर्थाइव राजन्त्यश्चतुर्वेदशिखोपमाः ॥ ३ ॥

रंगस्थानं महेशस्य शंभोः सन्ध्यानृतस्य च ॥
शातकुम्भमहाकुम्भसहस्रेणैव शोभिताः ॥ ४ ॥
निष्टप्तहेमक्लृप्ताभमहामेरुगुहोपमाः ॥
शातकुम्भमहास्तम्भसहस्रपरिशोभिताः ॥ ५ ॥
सुवद्धमणिसोपानावेदिकावाटिकोज्ज्वलाः ॥
मरालराजयोयत्र मुक्तामण्डितचञ्चुकाः ॥ ६ ॥
उत्कृष्टनीलपीताच्छैरत्नजालैश्च चित्रिताः ॥
मुक्तागुच्छावृतापारमालाजालकितान्तराः ॥ ७ ॥
प्रवाललतिकाक्लृप्तस्तम्भविद्रुमपुत्रिकाः ॥
हरिन्मणिकृतापारपालीवन्धुरहस्तकाः ॥ ८ ॥
पुष्परागमहासिंहसटामण्डलकीलिताः ॥
गजशुण्डोरुधाराच्छनीलकुम्भसुमौलिकाः ॥ ९ ॥
वैडूर्यधारासूत्रोद्यन्नागवन्धविराजिताः ॥
मौलिपालीस्थहंसालिकपोतकुलसुन्दराः ॥ १० ॥
रत्नोत्कीर्णाच्छवलभीवृतोरुमणिमौलयः ॥
कुरुविन्दमहोत्फुल्लमालाजालवृतान्तराः ॥ ११ ॥
स्फाटिकोत्तमगर्भाच्छधारासोपानकीलिताः ॥
विचित्रजालिकापालीचित्रनीलमहोपलाः ॥ १२ ॥
विम्बाभपद्मरागोत्थकेतनालिविराजिताः ॥
सुवर्णपरिसंक्लृप्तरम्भैस्तम्भैश्च भासुराः ॥१३॥
हरिन्मरकतोद्दामगर्भसप्तच्छदावृताः ॥
दन्तिदन्तावलीलग्नहंसालिवृषकीलिताः ॥१४॥
कपोतपालिपीठस्थमणिशार्दूलमण्डिताः ॥
सुवर्णकेतकीगुच्छकदम्बावलिभासुराः ॥ १५ ॥

मणिफानसजाम्रादिफलालिपरिलम्बिताः ॥
मातुलुङ्गैश्च लकुचैः प्रोत्तमालैर्वृतान्तराः ॥ १६ ॥
मणिधारावृषैःकुम्भैः सपल्लवमुखैर्युताः ॥
दमनोरुवितानाच्छसञ्छादिततलाम्बराः ॥ १७ ॥
उशीरपद्मगुच्छैश्च लम्बमानैः सुभासुराः ॥
गन्धवद्वनुबन्धोद्यन्मन्दमारुतसुन्दराः ॥ १८ ॥
महागरुमहोद्दामधूपधूमशिखावृताः ॥
मणिदीपावलीवृत्तभ्रमद्गह्वराश्रिताः ॥ १९ ॥
सहस्रदीपमात्रैश्च धूपवृक्षैश्च लम्बिताः॥
मणिसारैश्च विविधवर्णक्लृप्तोरुकुट्टिमाः ॥ २० ॥
स्फाटिकान्तर्विभागाश्च रम्यादर्शकलाम्बिताः ॥
स्वर्णरेखाकृतैश्चित्रैः सर्वस्थानेषु चित्रिताः ॥ २१ ॥
नानारुद्रावतारादिदेवीसिंहवृषादिभिः ॥
शंभोर्गणेन्द्रलीलाभिः सम्यक्चित्रितभित्तिकाः ॥
॥ २२ ॥
सुरम्यमणिवेदीभिः सम्युताधूपमोदिताः ॥
विस्तारायामबहुलाः सहस्रस्तम्भमण्डिताः ॥ २३ ॥
मणिरत्नमहासारजालापारावृतान्तराः ॥
राजल्ललामवृषभारत्नकुम्भपरिष्कृताः ॥ २४ ॥
रत्नदण्डयुतापारछत्रचामरशोभिताः ॥
धूयमानपताकाग्रामणिघण्टावृतान्तराः ॥ २५ ॥
कस्तूरीचन्द्रपाटीरकर्पूरसुमवासिताः ॥
मणिदर्पणजोत्तुङ्गबिम्बितामलजातिकाः ॥ २६ ॥

मर्दलोद्दामगम्भीरनादापूरितदिङ्मुखाः ॥
शंखदुन्दुभिनिर्घोषपणवानकगोमुखैः ॥ २७ ॥
काहलापारनिनदद्वेणुवीणारवाकुलाः ॥
मणिमन्दारवकुलपाटलाशोकचम्पकैः ॥ २८ ॥

बिल्वात्यच्छतमालैश्च वृक्षकैः सुमसुन्दरैः ॥
कृतमाला महामाला गुच्छसञ्छादिताम्बराः ॥२९॥
मल्लिकाकुन्दकुमुदजातीमालावृतान्तराः ॥
गलन्मधुझरीभारगुच्छगुञ्जदलिव्रजाः ॥ ३० ॥
कदम्बदामसुभगा दमनोद्दामगन्धिताः ॥
कुरवामोदितोशीरमरुदामोदमोदिताः ॥ ३१ ॥

उशीरककृतापारमालान्दोलनसुन्दराः ॥
तारातर्कितभूभागमुक्ताजालवृताभुवः ॥ ३२ ॥
गणहस्तमहातालझल्लरीनादझंकृताः ॥
रणन्मड्डुजझंकारगर्जितान्तरसुन्दराः ॥ ३३ ॥
काहलापारगम्भीरनादापूरितदिङ्मुखाः ॥
नटझ्झणझणारावसिञ्जानकृतनिःस्वनाः ॥ ३४ ॥

गोमुखानकजोद्दामगणवक्त्राजकारवाः ॥
शङ्खावलिवृतापारघूत्काररवगर्जिताः ॥ ३५ ॥
चतुर्वेदशिखोद्दामब्रह्मवक्त्रकृतस्तवाः ॥
वामदेवमहासामरथन्तररवाकुलाः ॥ ३६ ॥
रथन्तरोत्थभूत्कारभांकृताखिलदिक्तटाः ॥
राजद्धिकारवैदूर्यविभूतिवरभूपिताः ॥ ३७ ॥

षडाननकृतोद्दामकाहलारवसुन्दराः ॥
नन्दिभृंगिकृतानेकतलाघातोरुमर्दलाः ॥ ३८ ॥
धिक्तान् धिक्तानितिरवैरशैवान्प्रतिवारकैः ॥
तुण्डचण्डीशनादोत्थैरवैः सुन्दरदिङ्मुखाः ॥ ३९ ॥

वीणापाणिमहावाणिशिवनामालिमूर्छिताः ॥
तन्त्रीयन्त्रितगन्धर्वगीतनादैकवन्धुराः ॥ ४० ॥
नारदादिमुनिश्रेष्ठतुम्बुरूद्दामगायनाः ॥
हाहाहूहूकृतानेकभारतीरीति शिक्षिताः ॥४१॥
यक्षशिक्षाकलालापरिंगत्तुंगतरंगिकाः ॥
रागरागिणिकाक्लृप्तरम्यात्रिस्थानमूर्छनाः ॥ ४२ ॥

तलमर्दलजोद्दामताधिगित्युत्थितस्वनाः
बर्हिपिच्छावलीरम्यस्फटिकोत्तमभित्तिकाः ॥ ४३ ॥
मणिनिःसाणनादेन प्रबुद्धवरकोकिलाः ॥
कोकिलाकाकलीरम्यध्वनिध्वननरञ्जिताः ॥ ४४ ॥

रत्नपञ्जरमध्यस्थशुकशारिकजारवाः ॥
मृदंगनादघोषेण शिखण्डिकृतताण्डवाः ॥ ४५ ॥

गायद्गन्धर्वनिकरमुखवीक्षणकृन्मृगाः ॥
रत्नाधारगजासारपुष्करोद्दामबृंहिताः ॥ ४६ ॥

पुण्ड्रेक्षुवरधसुभगरम्भास्तम्भवृताः सभाः ॥
मणिवल्लीतोरणालिविलम्बितशुभाननाः ॥ ४७ ॥
मन्दमारुतसञ्चारवितानचलितांचलाः ॥
शातकुम्भमहाकुम्भपूरितामृतधारिकाः ॥ ४८ ॥

सुपल्लवमुखापारराजद्भृङ्गारीसुन्दराः ॥
पूगापारमहासाराः शम्भोस्तत्र महासभाः ॥ ४९ ॥
क्लृप्तास्तत्र शिवेनैव मनसा नान्यथा हि ताः ॥
शातकुम्भमयी तत्र सभा प्राच्यां दिशि स्थिता ॥५०॥
महारत्नसभा शम्भोर्दक्षिणे च प्रकल्पिता ॥
राजती चोत्तरे शम्भोः कालधौता च पश्चिमे ॥ ५१ ॥
एवं चतुर्दिक्ष्वपि ताः सन्नद्धाः सुन्दराः सभाः ॥
तत्सभावर्णनं देवैर्ब्रह्मविष्णुमहेश्वरैः ॥ ५२ ॥
मूर्तिमद्भिस्तथा सर्वैर्वेदैश्च क्रियते सदा ॥
ऋग्वेदस्तु तथा प्राच्यामेकविंशतिशाखकः ॥ ५३ ॥
स्तौति तत्र सभायां तु देवदेवं महेश्वरम् ॥
यजुर्वेदस्तथा रत्नसभायां शतशाखकः ॥ ५४ ॥
स्तौति देवं विरूपाक्षं बद्धाञ्जलिपुटोमुदा ॥
कलधौतसभायां तु सहस्रवरशाखकः ॥ ५५ ॥
स्तौति तत्र महादेवं सामवेदोथ सामभिः ॥
चित्सभायां तथाथर्ववेदोविंशत्स्वशाखकैः ॥ ५६ ॥
स्तौति देवं शिरोभिः स्वैरथर्वैरीशतुष्टिदैः ॥ ५७ ॥

॥ सूतउवाच ॥

सभासु च दिवस्पतिप्रकटभासुशीतांशुक
स्फुरत्सु च शिखिद्युतिप्रथितरत्नगर्भासु च ॥
प्रकाशकलितास्वहो नटति नृत्यपारंगतः ॥
सभापतिरतिंद्रियः प्रमथभूतसंघैर्वृतः ॥ ५८ ॥

अनंतमहिमारसः श्रुतिशिखास्थपालीगतः
सुरेन्द्रमुकुटच्छटाविघटितांघ्रिरत्नच्छविः ॥
सुरासुरमुनिद्विजैर्विधिहरीन्द्रवेद्रैस्ततः ॥ ५१ ॥

इति श्रीशिवरहस्ये प्रथमांशे सभावर्ण-
नोनाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

॥ स्कन्दउवाच ॥

सनातनसनन्देन सानन्देन महेश्वरः ॥
पार्वतीहृदयानन्दोदेवोयत्र च ताः सभाः ॥ १ ॥

सदसस्पतिरीशानोगणवृन्दनिषेवितः ॥
मया द्विरदवक्त्रेण नन्दिभृंगिरिटीश्वरैः ॥ २ ॥

तण्डुढुण्टतुहुंडाद्यैर्वाणरावणचाण्डिकैः ॥
देव्यास्तदग्रे नटनं साटोपं कर्तुमुद्यतः ॥ ३ ॥

सभासु तासु सर्वासु सभापतिरुमापतिः ॥
सायं सायं प्रदोषेषु महाताण्डवपण्डितः ॥४ ॥

अप्सरोदोः परिलसत्पादपङ्कजभासुरः ॥
गजेन्द्रकृत्तिवसनोजटाजूटतडिद्द्युतिः ॥ ५ ॥
जटाकुहरगर्भस्थगंगातुंगतरंगकः ॥
तत्रैवोत्फुल्लकल्हारपत्राच्छादितमस्तकः ॥ ६ ॥

गरनीलमहाकण्ठः सर्पाधीश्वरकुण्डलः ॥
सोमधामसमानास्यश्चाम्पेयवरनासिकः ॥ ७ ॥
नयनत्रितयोत्फुल्लपङ्कजोत्फुल्लसुन्दरः ॥
त्रिपुण्ड्रेरेखासत्फालोभस्माच्छादितविग्रहः ॥ ८ ॥

वामपाणिसमालम्बिनखालक्तकरक्तकः ॥
धगद्धगितरत्नाच्छपदकालम्बिमालिकः ॥ ९ ॥
महार्हीरमणिव्रातमुक्तारुद्राक्षमालिकः
काकोदरफणारत्नमालाकीलितकन्धरः ॥ १० ॥

रत्नग्रैवेयसुभगोरत्नकङ्कणसत्करः ॥
क्वणत्किंकिणिकाजालक्षुद्रघंटालिकाञ्चिकः ॥११॥
पाणिनान्येन डमरुमन्येनोज्वलशूलकम् ॥
सप्तजिव्हकृतोर्ध्वांगशिखाकाशितसत्करम् ॥ १२ ॥

भक्ताऽभयंकरः साक्षाद्रत्नोर्मिकवरांगुलिः ॥
कटीतटवरोद्भासिपुण्डरिकाजिनोज्ज्वलः ॥ १३ ॥
अत्युच्चगुच्छसुभगोलसमानाचलद्युतिः ॥
ब्रह्ममुण्डमहार्पंडमालाललितकन्धरः ॥ १४ ॥

नृत्यज्झणझणारावमणिमञ्जिररत्नयुक् ॥
साकुञ्चितेन नृत्येन प्रोषयंतं जगत्त्रयम् ॥ १५ ॥

महारत्नपरिष्कारपीठसंस्थां महेश्वरीम् ॥
पश्यन्दरदलाम्भोजसन्निभैर्लोचनत्रयैः ॥ १६ ॥

सुधाधामातिरस्कारिदेव्यावदनपङ्कजम् ॥
नीलालकोद्यन्निटिलं रत्नताटंकमण्डितम् ॥ १७ ॥
उद्यत्कविनिभात्यच्छमुक्तानासामनोरमम् ॥
कण्ठत्रिवलिगम्भीररत्नग्रैवेयभासुरम् ॥ १८ ॥

ललन्तिकैकसुभगकण्ठमण्डलशोभितम् ॥
उत्तुङ्गकरिकुम्भाभस्वर्णकुम्भकुचां शिवाम् ॥ १९ ॥

त्रिवलीललितोदारात्रिजगत्सम्पुटोदराम् ॥
मृगेन्द्रसङ्काशकटिरत्नकाञ्चितकाञ्चिकाम् ॥२०॥

कनकाम्बरजापारधारासाराजिताम्बराम् ॥
चम्पकाशोकपुन्नागसौगन्धिकलसत्कचाम् ॥ २१ ॥

वेणीमण्डलमध्यस्थरत्नसीमन्तसुन्दराम् ।
अलकालम्बिललितसिन्दूराशोभिरेखिकाम् ॥ २२ ॥

क्वणन्मणिगणापारकङ्कणैर्नागबन्धकैः ॥
रत्नहस्तसरापारचलद्वलयसत्कराम् ॥ २३ ॥

रत्नाङ्गुलीयविलसद्वलयाङ्गुष्ठवेष्टिनाम् ॥
महार्हैरैकफलककल्पिताङ्गुष्ठवेष्टनीम् ॥ २४ ॥

आलक्तारक्तपादाब्जरङ्गरञ्जितपादुकाम् ॥
पादाङ्गुलीकृताराबझणझणमधुस्वनाम् ॥ २५ ॥
मणिमञ्जिरजारावरणझणितभूतलाम् ॥
पाटीरागरुकस्तूरीकर्पूरागन्धमेदुराम् ॥ २६ ॥
पटवासमहागन्धनन्दिताखिलदिक्तटाम् ॥
सौन्दर्याधारसर्वस्वाकारां ताराधिपाननाम् ॥ २७ ॥
हल्लकाक्रान्तसुकरां युतां हारेण लम्बिना ॥
तिर्यक्कटाक्षां पुरतः पश्यन्तीमाननं विभोः ॥ २८
पश्यन् सभासु तां देवीं मुदा नृत्यति शंकरः ॥
नन्दिभृंगिमहाकालस्कन्दहेरम्बसंवृतः ॥ २९ ॥
रम्यवाद्यरवः सार्यं वेदघोषैश्च शंकर ः ॥
सभास्थानेषु तत्रैव नृत्यत्यम्बासमन्वितः ॥ ३० ॥
तच्छृणुष्व मुनिश्रेष्ठ गणेन्द्राः सुरसत्तमाः ॥

॥ स्कन्दउवाच ॥

राजद्राजकलाविराजितजटाराजिं रजोघ्नं सताम्
रामालंकृतवामभागमनिशं श्रीराजराजार्चितम् ॥
नृत्यन्तं शिरसांकपालकलिकामालास्फुरद्वक्षसं
नृत्यन्तं रजताद्रिहेमसदसि श्रीधूर्जटिं भावये ॥३१॥
नृत्यद्ब्रह्मकपालघट्टनपतद्ब्रह्माण्डकोटिस्रवद्
वार्याधारसुपूरपुरितजटागंगातरंगोद्भटम् ॥
सेवार्थागतविष्णुमुख्यसुरताबद्धाञ्जलिप्रार्थनं
नृत्यन्तं रजताद्रिहेमसदसि श्रीधूर्जटिं भावये ॥ ३२॥

तण्डौ वादितडिण्डिमे डमरुकामाखंडले वाद्यति
ब्रह्मण्यम्बुजलोचने च नमति श्रीचण्डिकेशादिभि ॥
घण्टादोलनतत्परे सुरगणे श्रीताण्डवे पण्डितं
नृत्यन्तं रजताद्रिहेमसदसि श्रीधूर्जटिं भावये ॥३३॥

शीर्षाबद्धकपालमालममलं नृत्यज्जटामण्डलं
भूषावेषविशालमिश्रितसुधाधोरशशुभ्रार्चिषम् ॥
नृत्यन्तं रमणीमुदे निगमवाङ्मूर्धाधिरूढं शिवं
नृत्यन्तं रजताद्रिहेमसदसि श्रीधूर्जटिं भावये ॥३४॥

पादाबद्धसुरत्नकङ्कणरणत्कारौघनिष्पंदित-
ब्रह्माद्याखिलजंगमं बहुभुजालंकारदेव्याः पुरः ॥
मन्दस्मेरविराजमानवदनाम्भोजं नटंतं शिवं
कैलासाचलशातकुम्भसदसि श्रीशंभुमालोकये ॥३५॥

इत्थं नृत्यति देवेशः सार्यं देव्या सदाशिवः ॥
कैलासहेमसदसि प्राच्यां गणवरैर्वृतः ॥ ३६ ॥

तद्दक्षिणे रत्नक्लृप्ते सदोमध्ये महेश्वरम् ॥
नृत्यन्तं वासुदेवं च तच्छृणुष्व महामुने ॥३७॥

गण्डान्दोलितकुण्डलीश्वरमहाश्रीकुण्डलं ताण्डवे
पाण्डित्यं घटयन्तमण्डजमुखैश्चण्डीश्वराद्यैर्गणैः ॥
तुष्यन्तं निगमान्तसामवचनैर्मन्त्रैरमोघैःशिवं
नृत्यन्तं रजताद्रिरत्नसदसि पश्यामि शंभुं सदा
॥ ३८

तत्रोद्दामगिरोजयन्ति सविधं श्रीकैटभारे त्यज
ब्रह्मन् ब्रह्मरवांश्च संहर हरे दूरं परंसारय ॥
इत्थं वै खलु चक्रवर्तिनिशिवेनृत्योन्मुखे तादृशं
नृत्यन्तं रजताद्रिहेमसदसि पश्यामि शंभुं सदा ॥३९

नृत्तान्दोलितजूटबद्धविलसत् खण्डेन्दुसान्द्रोच्चय
भ्राजत्पाण्डुरमण्डलारुणलसद् वृन्दारकाणां गणे ॥
मग्नोन्मग्नजटाकलापनिभृतं जूटाहिबन्धोच्छ्वसत्
नृत्यन्तं रजताद्रिहेमसदसि पश्यामि शंभुं सदा ॥४०॥

नर्तायस्य पदद्वयप्लुतिचलद्हेमाद्रिसोमार्यमा
क्ष्माशेषादिककंपनं विदधते नृत्यन्तमीक्षामि तम् ॥
देवी पश्यति शंकरं च सुमहत्सानन्दनन्दोन्मुखं
नृत्यन्तं रजताद्रिहेमसदसि पश्यामि शंभुं सदा ॥४१॥
यस्मिन्नृत्यंगिरीशे विदधति भरितानन्दसन्दोहधाम्नि
भूपास्पन्दनहानिशंकिहृदयोमन्दं विधत्ते पदं
यावासः शिथिलीभवेदिति करौनैवातनोति प्रभुः ॥
केशाकुञ्चनतः करोति भगवान् केतूच चक्रोत्तमौ
नानर्तिप्रसभंप्रसन्नहृदयं आस्ते सभायां शिवः॥४२॥

इत्थं रजतशैले च देवोरत्नसभान्तरे ॥
नृत्यं वितनुते देव्याः पुरतः सायमीश्वरः ॥ ४३ ॥

पश्चात्सभायां रजतकल्पितायां महेश्वरः ॥
नृत्यं वितनुते नित्यं गणवृन्दसमन्वितः ॥ ४३ ॥

## ॥ स्कन्दउवाच ॥

नृत्यन्तं हरिभूषणं विधिशिरोमन्दारमालं लसत्
वामाङ्गीकृतिसुंदरीयुतपदं केयूरसिंजत्स्वनम्॥
यस्रामं गजचर्मवस्त्रकलितं नृत्यन्तमाशावसं
वत्धार्ध्वाकलमंवरं सुलालितोत्तंसान्वितं चाम्बया॥४४॥

नृत्यन्तं कलधौतसारसदसि ध्यायामि नृत्योन्मुखं
वागुंभान्विविधान्सुकृत्रिमभयानंभोजजातंवदं ॥
इत्यानन्दनिमग्नचेतसि परे गोविन्दपूज्ये हरौ
मन्दं मन्दमरन्दवायुरखिले वृन्दारकाणां गणे ॥४५॥
नृत्यन्तं कलधौतसारसदसि शंभोः पदाम्भोरुहं
यस्मिन्नस्ति च जंगमाचरमिदं विश्वं नरीनृत्यति ॥
यस्माद्भिन्नतथा न किञ्चिदपि दक्तुं न शक्यं बुधै-
स्तादृक् तं नटनार्भटीकृतरुचि भूषाहिशेपोज्ज्वलम् ॥
॥ ४६ ॥
नृत्यन्तं कलधौतसारसदसि ध्यायामि शंभोः पदं
चेतस्त्वं भज यद्गतोन पुनरावृत्तिं भजेन्मानवः ॥
यस्माच्चित्रतरं न किञ्चिदधिकं श्रीकालकूटोज्ज्वलम् ॥
॥ ४७
नृत्यन्तं कलधौतसारसदसि ध्यायामि शंभोः पदं
यस्मिन् भ्राम्यति वंभ्रमीति सकलं विश्वं च रागात्मकम्॥
यस्मिन्नुत्प्लुतिमाचरत्यविकलं ब्रह्माण्डमेतत्पतेत्
यस्मिन्नापतिते समस्तजगति कूर्मोपि भग्नास्थिकः॥
॥ ४८ ॥

नृत्तायासविनिर्गतोरुनयनश्रोत्रोत्थफूत्कारकं
अंगान्निःसृतस्वेदजं जलमहा सिन्धोर्मणीनां गणः ॥
रौप्याद्रौकलधौतसारसदसि श्रीकण्ठमाद्यं भजे ॥४९॥

एवं नृत्यति कैलासे कलधौतसभान्तरे ॥
सरसं स्वैरमम्बायाः पुरतः शशिशेखरः ॥ ५० ॥

उत्तरे चित्सभाया तु नृत्यत्यंबा विलोकयन् ॥
गणेन्द्रैः सेवितपदोमहादेवोमहेश्वरः ॥ ५१ ॥

ह्रींमत्या शिवया विराण्मयमिदं हृत्पंकजस्थं सदा
ह्रीणानां शिवकीर्तने हितकरं लेखैर्हृदामानितम् ॥
ह्रीवेरादिसुगन्धवस्त्ररुचिरं हेमाद्रिबाणासनं
ह्रींकारादिकपादपीठममलं हृद्यं नटेशं भजे ॥ ५२ ॥

श्रीमज्ज्ञानसभान्तरे प्रविलसच्छ्रीपञ्चवर्णाकृति
श्रीवाणीनुततापदोपनिचयं श्रीवल्लभेनार्चितम् ॥
श्रीविद्यामनुमोदनाश्रितजनश्रीदायकं श्रीधरं
श्रीचक्रान्तरवासग शिवमहं श्रीमन्नटेशं भजे ॥५३॥

नव्याम्भोजमुखं निमज्जनविधौ नारायणेनार्चितं
नाकौकोनगरीनटीलसितकं नागाजिनालंकृतम् ॥
नानारूपकनर्तनादिचतुरं नालीकजान्वेष्टितं
नादात्मानमहं नगेन्द्रतनयानाथं नटेशं भजे ॥ ५४॥

मध्यस्थं मधुवैरिमार्गितपदं मद्वंशनाथं प्रभुं
मारातीतमतीव मञ्जुवपुषं मन्दारगौरप्रभम् ॥
मायातीतमशेषमंगलनिधिं मद्भावनाभावितं
मध्ये व्योमसभागुहान्तमखिलं कर्पूरकाशं भजे॥५५॥

शिष्टैः पूजितपादुकं शिवकरं शीतांशुरेखाधरं
शिष्टान् भक्तजनान् सदा सुखकरं नाथंशिवायाःप्रियं ।
क्षोणीरक्षणमम्बुजासनशिरःसंहारशीलं प्रभुं
सीतासारविलोचनं शिवमहं श्रीमन्नटेशं भजे ॥ ५६ ॥
वाणीवल्लभवन्द्यवैभवयुतं वन्दारुचिन्तामणिं
वाताशाधिपभूषणं वरकृपावारांनिधिं योगिनाम् ॥
वाञ्छापूर्तिकरं वलारिविनुतं वाहीकृताम्नायकं
वामांगात्तवराननं ममहृदावासं नटेशं भजे ॥ ५७ ॥

यक्षाधीशसखं यमप्रमथनं यामिन्यधीशाननं
यज्ञध्वंसकरं यतीन्द्रविनुतं यज्ञक्रियाधीश्वरम् ॥
याज्यं याजकरूपिणं यमधनैर्यत्नोपलभ्यांघ्रिकं
यानीभूतवृषं सदाशिवमुमायुक्तं नटेशं भजे ॥ ५८ ॥

मायाश्रीविलसच्चिदम्बरमहापञ्चाक्षरैरन्वितान्
श्लोकान् सप्तपठन्ति येनुदिवसं चिन्तामणीनामकान् ॥
तेषां भाग्यमनेकमायुरधिकं विद्यां वरान्सत्सुतान्
सर्वाभीष्टमसौ ददाति सहसा श्रीचित्प्रभाधीश्वरः ॥
॥ ५९ ॥

तडिन्निभजटाभटीपटुरिटीड्य संनर्तने
कपालकृतपीडकं भज भजामहे धूर्जटिम् ॥
शिवं करतटारटद्घुमकठोरतुङ्गाभटी
चपेटिवरशूलकं करटिचर्मशोभ्यत्पदम् ॥ ६० ॥
हठात्कृतगजासुरप्रमथनं जगत्तारकम्
मुकुंदशरधारिणं कमठपृष्ठपादं शिवम् ॥
भजामि पिठरीधृतत्त्रिगुणमूलपीठस्थितम्
जनार्दनकृतस्तवं हृदिसुधिष्ठितं योगिनाम् ॥ ६१ ॥
कुठारवरधारिणं भजत नीलकण्ठं सदा
विकाशितमहासिनं करधृताच्छसत्खेटकम् ॥
सुनीलकमलाच्छभासमशिरोधरं शङ्कर
त्वमेव सकलं जगत् भवभयेषु संरक्षय ॥ ६२ ॥

॥ सूतउवाच ॥

त्वत्संस्मृतिः प्रजानितापगताधियज्ञ
संसारमौलिपदपंकजभग्नलील ॥६३॥
उत्फुल्लपंकजवराननमीशितार-
मारात्प्रणेमुरमराजताचलस्थम् ॥
केक्याखुवाहगणपाः परमेशमेव
वन्दारुभृंगिरिटिनन्दिगणेशमुख्याः ॥
चंडीशतंडुवरहुंडतुहुंडभद्राः
श्रीवाणरावणगजाननकोटिचंड
ब्रह्मेन्द्रविष्णुप्रमुखाअमरेन्द्रमुख्याः ॥६४॥
स्तंभैर्विद्रुमपुत्रिकौघघटितैस्तंभैर्महामात्रकै-
र्भास्वत्यावरणैश्च शक्तिभिरपि प्रोद्दंडमायामयैः ॥
रंगे सर्वजगत्करंडमखिलं यस्येक्षणाज्जृंभते
यस्यैवेक्षणतश्च रक्षितमिदं तत्रैव लीनं क्षणात् ॥६५॥

सोप्येतादृशरंगमंडपगतः सर्वैश्च भूतैर्युतो
रुद्राणीसहितोगणेशगुहयुक् पार्श्वे सुरेन्द्रैरपि ॥
पाथोजातभवेन श्रीधरभवैरन्वास्यमानः सदा
श्रीरुद्रोगणपैश्च सेवितपदोमोदान्वितोरंगगः ॥ ६६ ॥
ईषत्पादतलाहतित्रुटितभूभागासहिष्णुः सदा
त्रुट्यत्पृष्टकपालसंविधिमहाकूर्मस्तवाम्रेडितम् ॥
अंगुल्यग्रपतत्प्रभंजनजवोत्क्षिप्तं भवत्यस्थिरम्
ब्रह्मांडपरमेशितुर्विजयते नृत्यं समस्ताद्भुतम् ॥ ६७ ॥
नम्रान् पाणिगणान् दिशावधिकृतान् स्वीयान्कपर्दानपि
व्योमान्तेनातिकुञ्चितानपि पुनःपातालमुख्यानधः॥
लोकान्वै समतीत्यस्वीय चरणान् कुर्वन्निरालम्बना
नृत्तं केवलमीश्वरोवितनुते देव्यग्रतः केवलम् ॥ ६८ ॥
सभासु सदसस्पतिर्हरिहिरण्यगर्भादिभिः
सनन्दनसनातनैर्हरसुनंदिकेशादिभिः ॥
कराहतिमहामणिप्रवरमर्दलौघस्थितैः
सुतालवरवल्गनैर्नटति नृत्तरंगस्थितः ॥ ६९॥
वेदएव भक्त्याल्वदिया:सभाः ॥
नौति स्तौति भवंतमेव हि ततोदेवं सभाधीश्वरं
वेदोवेद न देवरूपमपि ते नीरूपमेतत्कथम् ॥
तस्माद्देवमहामहेश्वरसदावाचोनिवृत्तास्त्वयि
प्रोवाचाति यतोहि रूपमपि ते ज्ञातुं न शक्यं परैः॥७०॥
इति श्रीशिवरहस्ये प्रथमांशे सभासु नृ-
त्तवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## ॥ स्कन्दउवाच ॥

तच्छैलमौलिप्राकारोनानासौधान्तरास्थितः ॥
चंद्रोपलशिलासारैः कल्पितोऽस्ति शिवेन हि ॥ १ ॥

खंडस्फुटितसंधानरहितोऽखंडएव हि ॥
पर्वोद्यच्छर्वरीनाथकलानिष्यंदसारकः ॥ २ ॥
विंशत्सहस्रमानेन आयामोर्ध्वविराजितैः ॥
शुद्धस्फटिकसंक्लृप्तवृषभैः परिशोभितः ॥ ३ ॥

इन्द्रनीलामलाक्षैश्च विषाणैश्चैव शोभितैः ॥
तत्प्राकाराखंडभित्तौ संस्थितैर्गोपुरेषु च ॥ ४॥
प्राकारगोपुरं तत्र दशसाहस्रमुच्छ्रितम् ॥
रुद्रावतारचरितं मणिकुंभवराञ्चितम् ॥ ५ ॥
शोभितं पूर्वभागस्थं तत्प्राकारवरस्य च ॥
दक्षिणे तादृशं चापि महास्फटिककल्पितम् ॥ ६ ॥

रुद्रावतारचरितं मणिकुंभवराञ्चितम्॥
उत्तरे शोभितं चापि क्रीडावृषभसंयुतम् ॥ ७ ॥
पश्चिमे चापि तेजिष्ठं स्फटिकोपलगोपुरम् ॥
रुद्रावतारकलशैः शोभितं वृषभैरपि ॥ ८ ॥
सहस्रतलभागैश्च शिखरोद्यत्पताककैः ॥
मुक्तागुच्छैः प्रवालालिमालाजालिकशोभितैः ॥ ९ ॥

देवकोष्ठैः कोणकोष्ठैः कपोतैः पालिपालिभिः ॥
महावलभिकोद्दामस्तंभविद्रुमपुत्रकैः १० ॥
प्राक्संस्थोमंडपस्तत्र आयामोच्छ्रायसुंदरः ॥
सिंहशार्दूलशरभमातंगतुरगाकृतिः ॥ ११ ॥

शुकभेरुंडहंसैश्च स्तंभैर्मणिकृतैर्युतः ॥
सौधमौलिमहापालिकन्यकालिविराजितः ॥ १२ ॥
रत्नयुक्तस्तंभयुतआगर्भगृहगोपुरम् ॥
विस्तृतोवेदिकाभिश्च रत्नपश्चच्छाविर्महान् ॥ १३ ॥
स्वच्छादर्शतलाकारमणिसुंदरभित्तिकः ॥
धूपैश्च मणिदीपैश्च विद्योतितदिगन्तरः ॥ १४ ॥

पाटीरसारकर्पूरगंधासारादिसिक्तभूः ॥
सुमनामोदमंदाररत्नमालापरिष्कृतः ॥ १५ ॥
तत्रस्थ हरिदुद्दाममणिसत्तच्छदावृतः ॥
तत्रत्यविद्रुमापारमुक्तासरविलंबितः ॥ १६ ॥

अम्लानकुसुमामोदरक्तवर्णकृतांवरः ॥
तत्र ताड्रित्तिगानेकनवरत्नकसंयुत ः ॥ १७ ॥
रुद्रावतारक्रीडादिनानामणिसुविग्रहः ॥
मोक्षलक्ष्मीविलासाख्योमंडपोभाति पूर्वतः ॥ १८॥
दक्षिणेप्ययुतस्तंभोनानामणिगणैः श्रितः ॥
आगर्भगृहमुत्सेधविस्तृतोगोपुरावधिः ॥ १९ ॥

सारूप्यमोक्षदानाख्योभाति रत्नपरिष्कृतः ॥
गोमेदकान्तिविलसत् वीरधीरावृतान्तरः ॥ २० ॥

सुरत्नमुकुराकारभित्तिरंगैकसुन्दरः ॥
तत्रत्यमणिमाणिक्यगणकान्तिततान्तरः ॥ २१ ॥

कस्तूरीतगरामोदगन्धपाटीरपंकिलः ॥
नन्दनापारकुसुममालाजालवृतान्तरः ॥ २२ ॥

सुरत्नमुकुराकारभित्तिरंगैकसुन्दरः ॥
रम्भापूगीफलालम्बिगुच्छपालीविराजितः ॥ २३ ॥

रत्नोत्कीर्णमहास्तम्भैर्मरालावलिशोभितैः ॥
तद्भित्तिनिचितापाररुद्रक्रीडादिविग्रहैः ॥ २४ ॥

नृतद्भूपसुसेव्यश्च योगगश्च तथा तथा ॥
नानामणिकृतानेकसुन्दरैः शिवविग्रहैः ॥ २५ ॥

गुग्गुलूद्दामसुभगगन्धधूपेन धूपितः ॥
पाश्चिमे गर्भगृहतआगोपुरतलावधि ॥ २६ ॥

विस्तृतःसुभगोभाति अयुतस्तम्भमण्डितः ॥
सालोक्यमोक्षदानाख्योमण्डपोयुतपादभाक् ॥ २७॥

तत्र वैडूर्यरचितस्तम्भाखण्डैकसुन्दरः ॥
तत्सूत्रापारधाराभिः सुपीततरकान्तिमान् ॥ २८ ॥

सौधमौलिमहापीठकपोतावलिसुन्दरः ॥
मणिरत्नचितानेककूपावलिवराश्रयः ॥ २९ ॥
केसराम्बुयुतैः सारमृगमोदयुतैर्घटैः ॥
गन्धाम्बुसिक्ततलकोमणिमालाविभूषितः ॥ ३० ॥
हीरसारमहामुक्तामणिहारावलम्बितः ॥
तत्र वैडूर्यफलकचितोर्ध्वतलकान्तिभिः ॥३१॥
निर्यत्कान्त्या कान्ततरोविचित्राखिलचित्रकः ॥
कृष्णागरुमहासारधूपधूमसमाकुलः ॥३२॥
मणिक्लृप्तास्छभित्तिस्थदेवीरुद्रचरित्रकैः
शोभितोनितराम्भाति मणिरत्नैकसुन्दरः ॥३३॥
सुरत्नकेतकीतालीफलालम्बितपद्मकैः ॥
महासिंहासनैः पीठैः पादपालिविराजितः ॥ ३४ ॥
प्रवालमुक्तापादैश्च सुरौप्यमणिपादकैः ॥
मञ्चोर्ध्वमण्डपालम्बिमुक्ताजालवितानकैः ॥ ३५ ॥

पुष्पशय्यापरिकरैः सोपधानैर्मनोहरैः ॥
वासितैर्गन्धबहुलशुभास्तीर्णपटावृतैः ॥ ३६ ॥
सुरुद्रवीणानादैश्च नादितोदुन्दुभीरवैः ॥
तत्र मण्डपवर्येषु एकाकारतयास्थितम् ॥ ३७ ॥
पश्चादागोपुरतलं यद्गर्भगृहसन्निधम् ॥
तदुत्तरे चकास्तीपन्मण्डपोरत्नसुन्दरः ॥ ३८ ॥
आगोपुरगृहं शंभोरयुतोच्छ्रितपादुकः ॥
पुष्परागमणिक्लृप्तऊर्ध्वाधस्तलमण्डितः ॥ ३९ ॥

तत्कान्तिकान्तितोद्दामविद्रुमामलपुत्रिकः ॥
सारंगशुकमातंगकुरंगविहगाकृतिः ॥ ४० ॥
स्तम्भैः शोभितभूभागोमणिसारालिकीलितः ॥
रत्नजालकनिर्यद्भाततिरञ्जितदिङ्मुखः ॥ ४१॥
सुरत्नवलभीकीर्णस्वच्छभित्तिवराश्रितः ॥
तत्र रुद्रावतारादिमणिकल्पितविग्रहः ॥४२॥

शरच्चन्द्रप्रभाजालतिरस्कारितलाश्रयः ॥
सुरत्नकेतकोद्दामललन्नारेलगुच्छकः ॥ ४३ ॥
गन्धकर्पूरपाटीरद्रवसारैकगन्धभूः ॥
वितानोल्लानितलोरत्नरम्भापरिष्कृतः ॥ ४४ ॥

साम्राज्यागुरुधूपैश्च नित्यं घुमघुमान्तरः ॥
प्रफुल्लरत्नचाम्पेयरत्नराजीवराजितः ॥ ४५ ॥
नीलरत्नोत्पलोत्फुल्लपीठालम्बिसरैर्वृतः ॥
सहस्रस्तम्भविततपुष्परागमणिप्रभः ॥ ४६ ॥
तत्रान्तर्मण्डपवरोरञ्जितोमणिकान्तिभिः ॥
सुगन्धगन्धजामोदपटवाससुमोदितः ॥ ४७ ॥
वातपोतसमानीतैरम्यशीततरावृतैः ॥
तन्मण्डपवरे देव्या सिंहासनवराश्रयः ॥ ४८ ॥

आस्ते गणैःपरिवृतः पश्यन्तत्दृष्टिकौतुकम् ॥
तत्रत्यमण्डपस्याख्या श्रीमहेशेन कल्पिता ॥ ४९ ॥
सायुज्यलक्ष्मीदानाख्योरत्नसुन्दरकल्पितः ॥

॥ सूतउवाच ॥

तत्रत्यामलमण्डपेषु भगवानास्ते सहाम्बोमुदा
भक्तानां निहवेषु तत्र सुकृतापरैश्च भूषादिभिः ॥
क्रीडावद्धरसैस्तथा सुमधुरोदारैर्गणेन्द्रैर्वृत-
स्तत्तत्स्थानवरार्हभूषणवरं भक्तेषु धत्ते शिवः ॥५०॥

इति श्रीशिवरहस्ये प्रथमांशे चतुर्विधपुरुषार्थमण्डप-
वर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥ ॥ ३४ ॥

---

तत्राच्छमण्डपान्तःस्थं गोपुरान्तरसुन्दरम् ॥
इन्द्रचापनिभं दिव्यं नानामणिविराजितम् ॥१॥
प्राकारं दशसाहस्रयोजनायामविस्तृतम् ॥
क्वचित्पूर्वेषु हरितं क्वचिज्जलदसन्निभम् ॥ २ ॥
कुरुविन्दामलमणिभास्वत्कान्ततराकृति ॥
धूमकूटनिभं चापि नीलाम्बुदनिभं क्वचित् ॥ ३ ॥
वालसूर्यकराभासमुद्यादिन्दुनिभं क्वचित् ॥
पलाशशल्लकीपुष्पसंकाशं क्वचिदेव हि ॥ ४ ॥

इन्द्रनीलामलमणिप्रभासन्निभकान्तिकम् ॥
इन्द्रगोपकसङ्काशं मयूरगलसन्निभम् ॥ ५ ॥
पारावतगलाभासं कर्णिकारच्छवीयुतम् ॥
चन्द्रभ्राजत्कराकारं ज्वलद्धीरनिभं क्वचित् ॥६॥
गोमेदपुष्परागोद्यद्वैडूर्यरसराजितम् ॥
प्रवालमणिमाणिक्यरत्नच्छविनिभं क्वचित् ॥ ७ ॥
तत्प्राकारप्रभाजालैर्नभोविविधभायुतम् ॥
मणिमाणिक्यखचितगोपुरालिविराजितम् ॥ ८ ॥
रुद्रावतारचरितैर्मणिराजद्रुमैर्युतम् ॥
ललामशोभिकलशैश्चतुर्दिक्षु विराजितम् ॥ ९ ॥
तत्रान्तर्गृहमीशस्य गर्भागारं मनोरमम् ॥
नवरत्नाखण्डक्लृप्तस्तम्भपीठविराजितम् ॥ १० ॥
तच्चिन्तामणिभाजालभासितं गर्भधामकम् ॥
तदग्रतोभाति शंभोः सहस्रस्तम्भमण्डितः ॥ ११ ॥

सुमुक्तिमण्डपोनाम सर्ववेदशिखास्तुतः ॥
तत्प्रभाभासितालोकाब्रह्मविष्ण्वादयोहराः ॥ १२ ॥
दिक्पालरक्षोयक्षौघनागाप्सरसकिन्नराः ॥
उरगास्तुरगाश्चैव सारङ्गाश्चमरीमृगाः ॥ १३ ॥
मद्गवः सुमरालाबाहरयः शरभास्तथा ॥
भल्लुकाश्चैव खड्गाश्च हरिणामहिषास्तथा ॥ १४ ॥
कल्पितामणिजोत्तुंगस्तम्भधारासुकोटिशः ॥
मणिजालकसञ्छन्नोरत्नसोपानवेदिकः ॥ १५ ॥

पट्टिकातोरणोपेतः पीठगोपानसंयुतः ॥
तदग्ररत्नकलशरत्नजालकशोभितः ॥ १६ ॥
रत्नगुच्छमहामालाजालकीलितसुन्दरः ॥
प्रभाकरसहस्राभइन्दुकोटिशतप्रभः ॥ १७ ॥
धूपामोदैकबहुलोमणिदीपप्रभाततः ॥
वितानसानसुभगोहरिन्मणिमयः सदा ॥ १८ ॥
नन्दनानन्दितसुममालागुच्छौघलम्बितः ॥
अम्लानरक्तकमलोत्पलमालाललच्छविः ॥ १९ ॥
प्रत्यग्रकेतकोद्दामगन्धोद्यद्रक्तपिञ्जरः ॥
उत्फुल्लचम्पकोद्दाममालागन्धितदिक्तटः ॥ २० ॥
कदम्बबन्धुरामोदसुन्दरोमणिभासुरः ॥
तत्र सिंहासनैश्चित्रैः कल्पितोमणिभिस्ततैः ॥ २१ ॥
पद्मरागामलमणिकाश्रितादर्शभित्तिकः ॥
पताकाकुम्भकोटीभिर्मणिकोटिवृषैर्युतः ॥ २२ ॥
लिंगाग्रे मण्डपोभाति कैलासेश्वरसन्निधौ ॥
तदुत्तरे गर्भगृहं कैलासेशस्य सत्तमम् ॥२३॥
नवरत्नमहापीठं वेदिकातलसुन्दरम् ॥
गर्भकोष्ठैः पाट्टिकाभिर्देवकोष्ठैर्विराजितम् ॥ २४ ॥
वलभीतलसञ्चारिमरालकुलसुन्दरम् ॥
कपोतपालिस्थगितं मणिसिंहवृषैर्युतम् ॥ २५ ॥
दिक्पालैर्ब्रह्मविष्ण्वाद्यैर्दक्षिणामूर्तिविस्तृतम् ॥
दक्षिणे पश्चिमे चापि प्रागुत्तरदिशि प्रभम् ॥ २६ ॥

लिंगोद्भवोन्धकारातिस्त्रिपुरासुरसूदनः ।
ब्रह्माविष्णुर्भवश्चापि ताण्डवेशश्च सुन्दरः ॥ २७ ॥
करिचर्मपरीधानोहेरम्बस्कन्दसंयुतः ॥
भिक्षाटणश्च कंकालशूलासक्तकरोहरः ॥ २८ ॥
मेखलावृतकट्युयत् पादाम्भोजात्तपादुकः ॥
जटाजालितसन्मौलिरिन्दुकुन्दशताच्छभः ॥ २९ ॥
सोमावतंसोऽक्षवाहोगणवृन्दयुतः क्वचित् ॥
उमया संस्थितः पीठे पश्यन्गौरीं मनोहराम् ॥ ३० ॥
गौरीमहादराज्जातपुलकाङ्कितविग्रहः ॥
अर्धेन नारीवपुषा शोभितोहरिहीरभः ॥ ३१ ॥
रत्नाहिकुण्डलद्योतिः सोमधामसमाननः ॥
व्याघ्रचर्माम्बरधरस्त्रिपुण्ड्रतिलकोज्वलः ॥ ३२ ॥
मणिरिखिलभूपाढ्योनागभूतिजगन्धधृक् ॥
कणन्मञ्जीरपादार्धपदपङ्कजशोभितः ॥ ३३ ॥
गरकम्बूपमगलोमणियुक्तसुकण्ठधृक् ॥
नवचन्द्रोत्तमांगोऽसौ गंगारववराश्रयः ॥ ३४ ॥
वामदक्षिणभागस्थलोकेशहरिसेवितः ॥
चण्डांशुतनयोद्गीतलिंगालिङ्गद्विजावनः ॥ ३५ ॥
गंगातरंगकलितकपर्दाणांकशोभितः ॥
सुरवैरिमहानेत्रपूजितांघ्रिसरोरुहः ३६ ॥
ब्रह्ममुण्डलसत्खण्डकण्ठमण्डलशोभितः ॥
एवं रुद्रावतारैश्च अखण्डमणिकल्पितैः ॥ ३७ ॥
चन्द्रस्फटिकहारैश्च पुष्पगोमेदनीलजैः ॥
श्रीमहेशमहादिव्यविग्रहैः परितोवृतः ॥ ३८ ॥

अक्षताभिस्तथा रत्नगोलकैर्भूषयेच्छिवम् ॥
बिल्वपत्रैश्च कल्हारैश्चम्पकैः करवीरकैः ॥ ३१ ॥
पुष्पैरारण्यकैश्चैव तथान्यैश्च सुगन्धिभिः ॥
धूपदीपैश्च नैवेद्यैस्ताम्बूलैर्मणिदीपकैः ॥ ३२ ॥
नीराजनैश्छत्रमुख्यैश्चामरैर्व्यजनैरपि ॥
प्रणामस्तोत्रपठनैः प्रदक्षिणपरिक्रमैः ॥ ३३ ॥
पञ्चाक्षरजपैः सम्यक् पूजयेच्छंकरं मुदा ॥
हृत्पद्मेसन्निवेश्येशं पूजोद्वासनमाचरेत् ॥ ३४ ॥
एवं पूजाविधानेन पूजयेत्परमेश्वरम् ॥
एककालं द्विकालं वा त्रिकालं योऽर्चयेन्नरः ॥ ३५ ॥
सएव लभते ज्ञानमाभ्यन्तरवरार्चने ॥
कैलासेश्वरलिंगमेतदमलं स्वर्गापवर्गप्रदम्
केनैवाखिलवेदजालतिलकं ज्ञातुं हि तत्पार्यते ॥
ईशेनापि गजाननेन च मया देव्या गणेन्द्रैरपि
विष्णुब्रह्मसुरासुरैर्मुनिगणैः स्तोत्रैस्तथैवागमैः
॥ ३६ ॥
तत्कैलासमहेशलिंगमहिमा कोट्यंशकोट्यंशकं
वक्तुं श्रोतुमथेक्षितुं त्रिभुवने नास्तीति मन्ये द्विजाः ॥

इति श्रीशिवरहस्ये प्रथमांशे महाकैलासवर्णने
कैलासेश्वरपूजाविधानकथनं नाम षट्त्रिं-
शोऽध्यायः ॥ ३६ ॥

॥ स्कन्दउवाच ॥

एवं कैलासशैलोयं विहितः शूलपाणिना ॥
मणिप्राकारं सौधाश्च गोपुराण्यपि भूसुर ॥ १ ॥
रत्नानां गिरयस्तत्र गणावसथकल्पनाः ॥
नानारुद्रावताराणां सभामण्डपनिर्मितिः ॥ २॥
तथा नान्यत्र रमते सर्ववासोपि शंकरः ॥
देव्यापि स्कन्दहेरम्बनन्दिकेशादपि प्रियः ॥ ३ ॥
महेशस्य निवासोयं गिरीशोगिरीशस्य हि ॥
नाविमुक्तेपि रमते न तथा हिमभूधरे ॥ ४ ॥

मन्दरे निषधेपीशस्तथाद्रौ गन्धमादने ॥
तथान्येषु नगेन्द्रेषु प्रीतिर्नैव पिनाकिनः ॥ ५ ॥
लिंगालयोयं कैलासोरम्यसानुत्तरूज्ज्वलः ॥
सुरम्यमणिशृंगाभ्रश्चारुसुन्दरकन्दरः ॥ ६ ॥
कलधौतप्रभाधूतदिकूतमस्तोमसन्ततिः ॥
सर्वतीर्थमयः शैलः सर्वलिंगमयोनगः ॥ ७ ॥
गणेश्वरोयं कैलासः सर्वदा शिववासभूः ॥
सर्वक्षेत्रमयः शैलः क्षेत्रेशाश्रयतः सदा ॥ ८ ॥
सर्वौषधिमयश्चायमोषधीशपदाश्रयात् ॥
वनाश्रयोयं कैलासोवनाधिपतिसंश्रयात् ॥ ९ ॥
मृगवासोहि सततं सदा पशुपतिप्रियः ॥
नास्य मूलमहो वेदैर्ज्ञातुमेव न शक्यते ॥ १०॥

कैलासापार शिखरैः सर्वलोकाः सुपावनाः ॥
तन्मौलितलसंस्पृष्टावाताः पावनपावनाः ॥११॥
ब्रह्मादयः स्वलोकस्थाः प्रार्थयन्त्यनिलं ततः ॥
विष्णुब्रह्मादयोदेवामुनयोपि मुनीश्वर ॥ १२ ॥
कदास्मान्पावयेद्वायुः कैलासशिखरागतः ॥
अस्माभिर्न तपस्तप्तं कैलासालोकनाय तु ॥ १३ ॥
अण्डजानामपि गतिर्निषिद्धा शशिमौलिना ॥
सूर्यचन्द्रानलानां तु प्रभाविद्योतनं न हि ॥ १४ ॥
तस्यैव शिखरोद्दामप्रभाभिर्भासितादिशः ॥
कैलासमौलिसंस्थाय यत्सुखं क्षणमात्रतः ॥ १५ ॥
नहि तद्वैष्णवे ब्राह्मे कल्पावधि सुखोत्तरम् ॥
नचैन्द्रे मेरुमौलौ वा नन्दने स्वर्गमण्डले ॥ १६ ॥
दिक्पालानां पुरौघेषु सौर्ये चान्द्रमसेपि वा ॥
न चतुर्दशलोकेषु तत्सुखांशांशकोटिकम् ॥ १७ ॥
प्रसादेन विना शंभोर्गमनं तत्र दुर्लभम् ॥
न कर्मणा न तपसा धर्मैश्च विविधैरपि ॥ १८ ॥
कैलासाचलवार्तापि न शक्यागमनं कथम् ॥
सुराविष्ण्वादयः पूर्वं ब्रह्मापि भगवद्गणाः ॥ १९ ॥
मुनयस्तपसाद्यापि कैलासनगवीक्षणे ॥
कैलासगमने लिप्सां धृत्वा ते सुरसत्तमाः ॥ २० ॥
शिवप्रसादसिध्यर्थं तप्यन्ति परमं तपः ॥
केचित्पञ्चाग्निनिरताः समीरणसुपारणाः ॥ २१ ॥

वृन्तश्लथच्छदाशाश्च केचिद्वारिषु संस्थिताः ॥
कटधूमशिखापानाः केचिच्चैवोर्ध्ववाहवः ॥ २२ ॥
भस्मच्छन्नाभस्मसंस्थाः केचिच्छ्रीरुद्रजापकाः ॥
भस्मांगाबिल्वमूलेषु केचित्पञ्चाक्षरादराः ॥ २३ ॥

वररुद्राक्षमुकुटाः शिवनामपरायणाः ॥
केचिल्लिंगार्चनपरास्त्रिकालं बिल्वपत्रकैः ॥ २४ ॥
एवं तपोभिरत्युग्रैस्तप्यन्ति मुनयः सुराः ॥
सदाशिवप्रसादोहि तेषां भावी मुनीश्वराः ॥ २५ ॥

सर्वे लोकेषु गन्तारः सर्वधर्मपरायणाः ॥
पुनरावृत्तिनः सर्वे न कैलासगतामुने ॥ २६ ॥
यतयोपि निवर्तन्ते ज्ञाननिर्धूतकल्मषाः ॥
शिवप्रसादलभ्योयं कैलासोप्यतिदुर्लभः ॥ २७ ॥
मेरुशृंगात्तु कैलासशिखरे वरशाम्भवाः ॥
पूजया श्रद्धया शंभोरीशानस्य पदं गताः ॥ २८ ॥

सुखिनः संप्रमोदन्ते स्वर्गकोटिगुणाधिके ॥
महाकैलासगमनमस्माकं किं पुनर्नृणाम् ॥ २९ ॥
शिवप्रसादहीनानां तपोभिर्विविधैरपि ॥
इष्टापूर्तादिधर्मैर्वा कैलासः प्राप्यएव न ॥ ३० ॥
शिवप्रसादाल्लभ्योयं प्रसादोदुर्लभोनृणाम् ॥
देव्या मया गणेशेन नन्दिनासौ न लभ्यते ॥ ३१ ॥

नैककल्पोत्थतपसा प्राप्यएव कदा न हि ॥
मेरुमन्दरसंकाशरत्नस्वर्णादिदानतः ॥ ३२॥
स त्राति रात्रकलनैर्वेदाध्ययनकोटिभिः ॥
गवा कोटिप्रदानैर्वा विद्यादिगणकैरपि ॥ ३३ ॥
कैलासबाह्यप्राकारे तपश्चर्यान्विताः स्थिताः ॥
अनेक युगसन्ततपसा तोषितः शिवः ॥ ३४ ॥
शिवप्रसादेन वयं तद्वाह्यशिखराश्रयाः ॥
गण्यन्ते सिकताभूमौ गण्यन्ते सर्वतारकाः ॥ ३५ ॥
कैलासापरशृंगस्थलिंगानां गणना न हि ॥
तत्रैव कोटिलिंगानामुत्तमानां श्रुता मया ॥ ३६ ॥
ततोपि लक्षं लिंगानां ततोयुतसहस्रकम् ॥
उत्तमानां च देव्यै तद्वदता श्रीशिवेन हि ॥ ३७ ॥
गणना गण्यते केन कल्पकोटिशतैरपि ॥
अनिर्वचनमायस्य मायिनः श्रीत्रिशूलिनः ॥ ३८ ॥
कोवेत्ति महिमानं नुस्तत्र तन्मौलिलिंगगं ॥
सवेद वेद निश्वासः सर्वज्ञः शशिशेखरः ॥ ३९ ॥

॥ सूतउवाच ॥

शिवसान्निधिरेव सन्निधि-
र्विबुधाधीशपदाब्जरत्नवार्धिः ॥
जनिनाशप्रभवापराधसन्धिः
पुरतापारविशोषतोपगाधीः ॥ ४०

निधिरेवाखिलसम्पदां युगादि-
र्भवभक्ताखिलचित्तदूरिताधिः॥

एवं कैलासशैलामलशिखरवरोन्मौलिकुम्भकजालै
स्तत्रापारशिवालयास्थितमहालिंगौघलिंगाश्रयैः ॥
ईशापारमनोविश्वासजनितैर्दृष्ट्वा महेशः स्वयं
वालार्धाहृतिरिन्दुमौलिरनलालंकारफालाक्षकः ॥४१॥
कालारिः कलधौतशैलशिखरं लिंगालिपूर्णं करोत्

इति श्रीशिवरहस्ये प्रथमांशे कैलासवासमहिमा नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

॥ जैगीषव्यउवाच. ॥

भगवंस्तारकाराते शिवभक्तवरामल ॥
नमामि त्वत्पदाम्भोजं किं तद्देव्यै शिवोदितम् ॥१॥
रहस्यं वा प्रकाशं वा तन्मे व्याख्यातुमर्हसि ॥
तदुक्तं संप्रधार्यैव स्कन्दोमन्दस्मिताधरः॥२॥
भवभक्तं महाप्राज्ञं सुराणां शृण्वतां तदा ॥
मुनीनां च सुराणां च गणेशानां च सन्निधौ ॥ ३ ॥
प्रोक्तवान् श्रीमहादेवं ध्यात्वा हृत्पंकजेमले ॥

॥ स्कन्दउवाच ॥

देव्या कैलासजोत्तुगं शिखरे वरगोपुरे ॥४॥
एकाकिना सञ्चरता विस्मिताक्षेण पश्यता ॥
शिवेन नन्दिता देवी प्राह प्राञ्जलिरीश्वरम् ॥५॥

॥ देव्युवाच ॥

देवदेव महादेव करुणालय शंकर ॥
एणाकमौले सर्वज्ञ गंगाजलजटाधर ॥ ६ ॥
भव भर्गामरेन्द्रेश फणामणिविभूषित ॥
वृषध्वजेश कामारे पुरान्तक यमान्तक ॥ ७ ॥
खट्वांगडमरूद्दामघोषपोषित विष्टप ॥
त्रिशूलपाणे भूतेश व्योमकेश दिगम्बर ॥ ८ ॥
त्रिजगज्जालनिर्माणस्थितिनाशकर प्रभो ॥
विस्मयस्तव नास्त्येव लीलेयं तव शंकर ॥ ९ ॥
लोकालोक्याब्रह्मविष्णुहरामरवरासुराः ॥
तेषामुत्थानसंस्थानविनाशनमपीश्वर ॥ १० ॥
त्वदपांगैकसंगेन सर्वेषां प्रलयोदयौ ॥
तव कोविस्मये हेतुस्तद्ब्रूहि परमेश्वर ॥ ११ ॥

॥ ईश्वरउवाच ॥

शृणु देवि प्रवक्ष्यामि गिरीन्द्रवरनन्दिनि ॥
त्वयि गोप्य न मे किञ्चित्त्रिषु लोकेषु विद्यते ॥१२॥
तथापि त्वयि वक्ष्यामि लिंगाध्यायमिदं शिवे ॥
कैलासाचलमौलिस्थं लिंगं मम महाम्बिके ॥ १३ ॥
तद्ज्ञातुं नैव शक्यं हि मयैव मनसा ततम् ॥
कोटिलिंगाकृतिहरं तत्पूजाकल्पकोप्यहम् ॥ १४ ॥

न तानि देवमुनिभिर्गंधर्वैः पूजितान्युमे ॥
न मद्गणवरैर्देवि श्रुतानि किमु दर्शनम् ॥ १५ ॥
पूजने का कथा देवि अगम्योमम भूधरः ॥
तत्पश्यामि प्रसंगन मनसा विस्मयेन च ॥ १६ ॥
मदीक्षणेन सर्वेषां लिङ्गाना पूजनं भवेत् ॥
शिवे पश्य महादेवि यावत्ते दृष्टिसन्ततिः ॥ १७ ॥
लिङ्गमण्डलमिदं नगात्मजे चन्द्रखण्डललितोत्तमागकम् ॥
कुण्डलीशसुफणाविभूपितं पापजालसुसमूहखण्डकम् ॥१८॥
पुण्ड्रशोभितकपालमालकं बिल्वचन्दनसुपंकजार्चितम् ॥
पश्य पश्य गिरिजे नगमौलौ तोपदायकमतीव ममेष्टम्॥१९॥
कैलासोयमतीव सुन्दरमहालिङ्गालयाना शिवे
कोटीभिः परितोवृतोमणिगृहेस्तादृक् सुलिङ्गैरपि ॥
मालूरोत्तमशाखिशेखरशिखस्तस्याच्छपुष्पैफलै-
रानम्रश्च्छवभारपल्लवयुतस्तद्गन्धवन्धानिलः ॥२०॥
शिखरिशिखिकुलाग्रपिच्छभारैर्मम लिङ्गालयमार्जनं सदैव ॥
वनवेणूद्भवदावमध्यलग्नैस्तगरामोदसुधूपितं सदैव ॥ २१ ॥
मणिगर्भगृहोत्थसुन्दरोरुदीपैः सततं दीपितमेव लिङ्गमेतत् ॥
वनबिल्वच्छदपुष्पगन्धवाहैरभिनीतैश्च सुपूजितानि पश्य
॥ २२॥

शुभपाटलकर्णिकारपुष्पैः
सरसोत्फुल्लसमुल्लसत्परागैः ॥
अरविन्दैः कुरुविन्दवृन्दवर्णै-
र्नवनीलामलहल्लकैः सुफुल्लैः ॥ २३ ॥

सितरक्तामलवर्णशीर्णवृन्तै-
रतिगन्धैर्मकरन्दवृन्दलीनैः ॥

मन्दारैरतिसुन्दरैर्मम शिवे लिङ्गाङ्गमौलिः सदा
मल्लीफुल्लसुपुण्डरीककुमुदैः सत्कर्णिकारैः शिवे ॥
सञ्छन्नो नितरां सदा वनफलैः प्रोद्यत्सुधासारकै-
र्नैवेद्येषु शिवे सदा प्रकलितं लिङ्गालयेषूद्यतम् ॥२४॥

करिकरपुष्करशीकरोत्थसारै
रभिषिक्तानि सुमौलिचन्द्रसारैः ॥
कस्तूरिकामृगमदांगजघर्षणेन
गन्धायितानि नगमौलिषु पश्य देवि ॥ २५॥

उत्फुल्लचामरकुलैरभिवीज्यमानं
नृत्तं शिखण्डिविहितं पिकहंसरागम् ॥
सम्पूज्य पूजितमिदं मम लिङ्गसंघं
पापापहारिसुगतिप्रदमुत्तमं च ॥ २६ ॥

इत्थं कैलासशैलेऽनवरतकथया स्वर्धुनीतुल्ययासौ
देवीं पश्यन्नघौघं दलति शिववरोद्दामलिङ्गानि पश्यन् ॥
कालारिर्नियतेन्दुशेखरमहामौलिं स्वयं धूनयन्
देवानामधिदेवएष करुणादृष्ट्या प्रपश्यन्नगम् ॥ २७ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासलिंगवर्णनं
नामाष्टात्रिंशोऽध्यायः ॥३८॥

## ॥ ईश्वरउवाच ॥

पश्य लिङ्गानि मे देवि मणिधामगतान्युमे ॥
धाममौलिमहाकुम्भधाराव्योमानि शांकरि ॥१॥
चन्द्रचन्दनलिप्तानि त्रिपुण्ड्रोज्वलितानि च
मणिसुन्दरमन्दारपुष्पमौलीनि शांकरि ॥२॥
बिल्वोत्तमाङ्गसौन्दर्यरसगर्भाणि पार्वति ॥
वरकाकोदरानद्धफणाभूषणकान्यपि ॥३॥
नन्दनानन्दमालाभिश्चन्दनालंकृतान्यपि ॥
दावदग्धागरुरसैर्धूपितानि सदाम्बिके ॥४
दीपितानि मणिज्वालाजालाकान्तीनि पश्य मे ॥
यथा मे देवदेवेशि मनोलिङ्गप्रपूजने ॥५॥

न तथा जगतोजालनिर्माणे मे मनोम्बिके ॥
तत्पालने तद्दहने नान्यधर्मेषु मे मनः ॥६॥
नगोयं मम कैलासः सर्वानन्दपयोनिधिः ॥
एतस्य तपसा तुष्टः प्रायच्छंवरमुत्तमम् ॥७॥
तव मौलौ निवत्स्यामि नानालिङ्गसमाश्रयः ॥
प्रलये नैव नाशस्ते मत्सानिध्यबलात्तव ॥८॥
इत्युक्तोगिरिराजोयं ममानन्दप्रदः सदा ॥
प्रलये सागराः सर्वे कैलासस्य शतोत्तरे ॥ ९ ॥
पादमूले स्थितिं देवि यास्यन्ति च नगाअपि ॥
महर्लोकावधिमहावीचिकल्लोलसंकुलाः ॥१०॥

सप्तभिः पवनैर्वापि चालितस्ते तदाद्रिजे ॥
हिमाचले मन्दरेपि केदारेश्वरसंज्ञके ॥११॥

निवस्यम्मि शुभापांगिसदालिङ्गाश्रयोहि सः ॥
मेरावपि महादेवि शिखरं मम सुन्दरम् ॥
तदुत्तरेपि कैलासे नानालिङ्गैकभासुरम् ॥१२॥

शिखरे तत्र देवैश्च पूजितोनिवसाम्यहम् ॥
एक एवाहमद्वैतो नीरूपोहमिहाद्रिजे ॥१३॥

त्वया कैलासशिखरे तुष्टोवासमरोचयम् ॥
सर्ववासोप्यहं देवि कैलासे निवसाम्यहम् ॥१४॥

अनन्तार्बुदलिङ्गानि मम कैलासपर्वते ॥
तत्प्रासादमणिव्रातशिखाद्योतिततत्प्रभाः ॥१५॥
तिरस्कृतार्कचन्द्रेन्द्रान तच्छक्यं हि वर्णितुम् ॥
तत्रापि कोटिलिंगानां गणना किल सुन्दरि ॥१६॥

उत्तमेषु महादेवि तत्रापारेषु पार्वति ॥
तत्रापि लिङ्गसाहस्रं ममैव प्रीतिदायकम् ॥१७॥
दर्शनात्स्पर्शनाच्चापि पूजनान्मोक्षदायकम् ॥
विना ज्ञानेन तपसा कर्मणा श्रद्धया शिवे ॥१८॥

न यज्ञैर्न व्रताचारैर्योगसांख्यैर्महेश्वरि ॥
सद्गतिर्नैव लभ्येत यथा तल्लिङ्गपूजया ॥१९॥

कैलासाचलमौलिस्थलिङ्गानां दर्शनं शिवे ॥
दुर्लभं सर्वदेवानां नृणां किमुत शंकरि ॥२०॥
कैलासेश्वरमुख्यानि लिङ्गान्यत्युत्तमानि च ॥
मणिगर्भगृहाधारसंस्थितान्यगजे सदा ॥२१॥

प्रोद्यत्कुम्भपताकानि मया सम्पूजितान्यपि ॥
प्रातःसंगवसायान्हे प्रदोषेषु महेश्वरि ॥२२॥
तेषु लिंगावलिं भद्रे शृणु वक्ष्यामि सादरम् ॥
कीर्तनश्रवणेनापि पापभेदीनि शंकरि ॥२३॥

स्वर्गापवर्गदान्याशु नृणां सङ्कीर्तनादपि ॥
पूर्वतोमम कैलासे नानालिङ्गकुलान्यपि ॥२४॥

तद्दिरौ दक्षिणे चापि पश्चादपि शुभानने ॥
तदुत्तरेपि देवेशि नानाज्योतिर्मयानि च ॥२५॥
न शक्यं वर्णितुं देवि देवैः शेषेण भामिनि ॥
कल्पायुतैरपि शिवे तल्लिंग महिमा मम ॥२६॥

न शक्यं विस्तराद्वक्तुं तन्नामानि शृणु प्रिये ॥
पञ्चाशदुत्तरं देवि शतद्वयमितं दिशि ॥२७॥

प्रथितानि महादेवि अपारेष्वपि सादरम् ॥
कैलासापारशिखरगर्भधामोरुमौलिगम् ॥२८॥

कुम्भमण्डलेन नाकं लिहन्निव च संस्थितम् ॥
शुद्धाच्छस्फाटिकवरकल्पितं योजनोन्नतम् ॥२९॥

शरच्चन्द्राच्छधवलं प्रभामण्डलमण्डितम् ॥
रत्नगर्भगृहान्तस्थं सुरम्यमणिवेदिकम् ॥३०॥
मणिप्रभाततं रम्यं नीलपीतारुणप्रभम् ॥
प्रवालपुष्परागादिगोमेदकाविदूरकैः ॥३१॥
पीठोज्ज्वलत्प्रभाकान्तं शुद्धस्फटिकमप्युमे ॥
चर्चितं चन्दनाद्यैस्तु अर्चितं बिल्वपल्लवैः ॥३२॥
मन्दारपुष्पमालाभिरिन्दुखण्डैश्च भूषितम् ॥
भुजंगफणिसञ्छन्नं मणिदीपप्रभोज्ज्वलम् ॥३३॥
दिव्यागरुमहाधूपैर्धूपितं गन्धमोदितम् ॥
हीरसारात्रिपुण्ड्रांकं पद्मरागाच्छतीलकम् ॥३४॥
महाकैलासशृङ्गाग्रसौधशेखरशोभितम् ॥
मणिकुम्भोद्यतापारलसत्कान्तिततास्वरम् ॥३५॥
पश्य लिङ्गकुलं भद्रे भद्रदं दर्शनेन च ॥
तत्सौधकुम्भधाराग्रदर्शनेनापि मुक्तयः ॥३६॥
प्राप्नुवन्ति सुरादेवि नराः श्रवणमात्रतः ॥
प्रणामं कुरु देवेशि शृणुष्ववहिताभव ॥३७॥
लिङ्गानां नामधेयानि वेदान्तोत्थानि शैलजे ॥
भाति लिङ्गकुलम्भद्रे मुक्त्यंकुरमिवोद्यतम् ॥३८॥
पुण्यमर्द श्रवणतोदर्शनान्मुक्तएव सः ॥
भूलोके चैव पाताले स्वर्गे वै सत्यलोकके ॥ ३९ ॥
नैतादृशानि लिंगानि किंपुनर्भारते भुवि ॥
भूलोकलिंगादुत्कृष्टं लिंगं पाताललोकगम् ॥ ४० ॥

पातालात्स्वर्गलोकस्थं ततोविष्णुविधीन्द्रगम् ॥
आद्यं मंगलदं देवि कैलासेश्वरसंज्ञितम् ॥ ४१ ॥
यन्न वेदैरपि ज्ञातं वेदान्तैरखिलैरपि ॥
यत्रैवान्ते लयं यान्ति ब्रह्मविष्णुमहेश्वराः ॥ ४२ ॥

लयनात्सर्वजगतां लिङ्गमित्युच्यते शिवे ॥
ममैव निर्गुणं साक्षाद्रूपमेतन्महेश्वरि ॥ ४३ ॥

अस्यैव भासा सर्वेपि भान्ति लोकाश्चतुर्दश ॥४४॥

अस्यैव चेतनात्सर्वं जगच्चेतयतेखिलम् ॥
लिङ्गं खलु ममैतद्धो भूमधामप्रभाधिकम् ॥४५॥
एतद्ब्रह्मैव देवेशि ममैव परमं प्रियम् ॥
यतोवाचोनिवर्त्तन्तअप्राप्य मनसा सह ॥ ४६ ॥

स्वच्छस्फटिकसंशुद्धमाकाशात्मकमुत्तमम् ॥
यतोभूतानि जातानि यत्र संस्थानि सर्वदा ॥ ४७ ॥

यत्रैवान्ते लयं यान्ति तल्लिंगमिदमद्रिजे ।
यतोब्रह्मेशविष्णिन्द्राः सम्प्रजातानगात्मजे ४८

यत्सत्यं ज्ञानमानन्दं ब्रह्मैवेदं सनातनम् ॥
सूक्ष्मात्सूक्ष्मतरं साक्षान्नैव स्थूलं नचाणुकम् ॥४९॥

सर्वेन्द्रियविनिर्मुक्तं सर्वधर्मविवर्जितम् ॥
अगन्धमरसस्पर्शं तच्चगन्धरसाश्रयम् ॥५०॥

तदेव चक्षुषां चक्षुः सर्वप्राणमयं सदा ॥
सर्वेन्द्रियगुणातीतं भूतेषु विततं सदा ॥५१॥

सदात्वशीर्णं शीर्णेषु नात्र नानास्ति किञ्चन ॥
यस्मिन् सम्पूजिते ज्ञाते ध्याते स्वात्मनि शैलजे ॥५२॥

लिङ्गी लिङ्गातिगोभाति तदिदं लिङ्गमुत्तमम् ॥
नामरूपातिगं भाति कैलासेश्वरसंज्ञितम् ॥५३॥

तन्नामानि शृणुष्वार्ये सादरं कमलानने ॥
बिल्वोरुसुन्दरवनच्छादिताच्छशाखा
सञ्छन्नभूतलमुमे मम शैलपालौ ॥
सत्फुल्लपुष्पजपचेलिमगन्धवन्व-
सन्दोहगन्धवहजातफलं ममेष्टम् ॥ ५४ ॥

उत्फुल्लपङ्कजपरागजधूलिपालि-
रुद्दामकेलिरभिवासितशीतवातः ॥
पुष्णाति गात्रवरमम्बिकया समेतम्
कैलासशैलसरसीरुहपालिलग्नः ॥५५॥

रत्नसालकुलमूलगसौध
पूगजालपरिसार्पिसुधाब्धौ ॥
अण्डजाविव शिवौ रमणीयौ
क्रीडतोदिवससनाथसरोजैः ॥५६॥

त्वमेकाकिनी सौधजाले मदीये
विशिष्टासि कान्त्या तवाद्याननेन्दोः ॥
सचैवोपमीतोमनाक् शैलकन्ये
सदोपाकरोनैव ते सोमधाम ॥ ५७ ॥
कैलासाचलमौलिपालिविलसल्लिंगानि तुंगानि मे
व्यालीमौलिजपालिकालिविलसद्गुच्छोत्थधूलीभरैः ॥
केलीभिर्नगकुञ्जरोत्थमदजैर्धाराम्बुधाराभरैः
श्राम्यद्गन्धफलीकदम्बजरजः पुष्पालिकीलानि च
॥ ५८ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासशैललिंग-
महिमा नाम एकोनचत्वारिंशोऽध्यायः॥३९॥

॥ ईश्वरउवाच ॥

श्रीकैलासेश्वरोदेवि भूतेशश्चाम्बिकेश्वरः ॥
सूतेश्वरोगणेशश्च स्कन्देशस्तारकेश्वरः ॥ १ ॥
गंगेश्वरोनन्दिकेशोभृङ्गीशोवाणकेश्वरः ॥
चण्डीश्वरोमुंजकेशोरत्नेशोगन्धकेश्वरः ॥ २ ॥
सुधेश्वरोगभस्तीशोरुद्रेशोभैरवेश्वरः ॥
कच्छपेशः काश्यपेशआयुर्देशोघृणीश्वरः ॥ ३ ॥
कलशेशोदेविकेशः पद्मेशोमगधेश्वरः ॥
तुण्डेशश्च तुहुण्डेशः सौरेशोवरुणेश्वरः ॥ ४ ॥

वारुणीशोवैद्युतीशोमोक्षेशोदण्डकेश्वरः ॥
मण्डलीशः कुण्डलीशः खण्डेशोभाण्डलीश्वरः ॥५॥
गण्डेशोगरुडेशश्च चन्द्रेशोमारुतेश्वरः ॥
विधीश्वरः सुधीशश्च तण्डुकेशोमुनीश्वरः ॥ ६ ॥
उमेश्वरः कपर्दीशोभद्रकर्णेश्वरस्तथा ॥
वेगश्वरोथ विष्णवीशोवैराजेशोमरेश्वरः ॥ ७ ॥
अहिर्बुध्न्येश्वरश्चैव जमदग्नीश्वरस्तथा ॥
विश्वामित्रेश्वरश्चैव रावणेशोवलीश्वरः ॥ ८ ॥
मनोन्मनीश्वरश्चैव सुधाधामेश्वरोद्रिजे ॥
मार्तण्डेशोललन्तीशः स्वर्लीनेशोध्रुवेश्वरः ॥ ९ ॥
गन्धर्वेशोतिविश्वेशः पारिभद्रेश्वरस्तथा ॥
गर्भेशोमरुधन्वीशस्तोरणेशोधृतीश्वरः ॥ १० ॥
उत्पलेशोमहेन्द्रेशः स्थाण्वीशोभरितेश्वरः ॥
अनन्तेशः कर्दमेशोमृडेशोवभ्रुकेश्वरः ॥ ११ ॥
वागुरीशोवर्मकेशः पटभद्रेश्वरस्तथा ॥
श्रीगिरीशोमृगेन्द्रेशोहिरण्येशः पवीश्वरः ॥ १२ ॥

आग्नीध्रेशः सन्नतीशोबृहतीशोरणेश्वरः ॥
किरातीशोगर्जकेशोवेणुदारेश्वरस्तथा ॥ १३ ॥
जयन्तेशोमध्यमेशः संगमेशोगतीश्वरः ॥
विद्युद्गर्भेश्वरोदेवि त्रिपुरेशोहरीश्वरः ॥ १४ ॥
वलप्रमथनेशश्च सर्वभूतदमेश्वरः ॥
उशीनरेश्वरश्चैव गर्भेशोमन्त्रकेश्वरः ॥ १५ ॥

तन्त्रेश्वरः सामकेशोव्योमकेशोदिगीश्वरः ॥
कपालमोचनेशानोमणिगर्भेश्वरस्तथा ॥ १६ ॥
जातूकर्णेश्वरश्चैव नगेशः पाटलेश्वरः ॥
कर्णिकेशश्छत्रकेशः पिंगलेशः शिलेश्वरः ॥ १७ ॥
मध्वीश्वरोवामकेशोयौवनेशः स्थिरेश्वरः ॥
भ्रान्तीश्वरोजन्हुकेशोगोमेदेशोखिलेश्वरः ॥१८॥
सिंहकेशोम्बिकेशश्च घण्टाकर्णेश्वरोद्विजे ॥
व्याघ्रेशोजम्बुकेशश्च ललितेशोद्रुतीश्वरः ॥ १९ ॥

वेदेश्वरोडिण्डिमेशः काहलेशोध्वनीश्वरः ॥
बिन्दुकेशोगण्डकीशोनर्मदेशोनिर्धीश्वरः ॥ २० ॥
पिचण्डलीशोत्रीशश्च कनकेशोध्वरेश्वरः ॥
सद्योजातेश्वरश्चैव कुलिशेशः प्लवेश्वरः ॥ २१ ॥
सोमेश्वरोवारुणेशः शरभेशोजटेश्वरः ॥
भागकारेश्वरोमुग्धकेशोरागेश्वरस्तथा ॥ २२ ॥
भल्लकेशोविरागेशः क्रथनेशोघनीश्वरः ॥
उरगेशः कठोरेशोदर्दुरः शर्वरीश्वरः ॥ २३ ॥

क्षिप्रेश्वरः प्रगल्भेशोविनतेशः शशीश्वरः ॥
काकुदेशोमृकुण्डेशोभवानीशोऽशनीश्वरः ॥ २४ ॥
वृषभेशोधेनुकेशः संवर्तेशः कणेश्वरः ॥
ऋक्षेश्वरश्च चन्द्रेशोमत्स्येशोभावनेश्वरः ॥ २५ ॥
तुरंगेशोमतंगेशः कणादेशोऽमरीश्वरः ॥
जलंधरेश्वरश्चैव श्वेताश्वेशः चिकेश्वरः॥ २६ ॥

रन्पेशोमुचुकुन्देशः कंकणेशः प्रभीश्वर॰ ॥
विद्याधरेशोनीलेशः कक्षिकेशोमहेश्वरः ॥ २७ ॥
मरुतेशः शकुन्तेशः स्वर्गेशो मलयेश्वरः ॥
मंकणेशोजागतीशोविबुधेशोगिरीश्वरः ॥ २८ ॥
चर्व्हणेशोनिधूर्णेशोगोरक्षोगजकेश्वरः ॥
कन्दर्पेशः सूर्यकेशः पुष्टेशस्तुष्टकेश्वरः ॥ २९ ॥
विनायकेश्वरश्चैव मणिकण्ठेश्वरस्तथा ॥
रन्ध्रेशः पार्वतीशश्च विद्रुमेशोहुतेश्वरः ॥ ३० ॥
विरिञ्चीशोभर्गकेशः सत्रेशोविश्वकेश्वरः ॥
भारभूतेश्वरश्चैव मणिकण्ठेश्वरस्तथा ॥३१॥
लोकेशः प्राणकेशश्च पंचप्राणेश्वरस्तथा
अन्धकेशोमुक्तिकेशोहरिकेशाऋषीश्वरः ॥
गारुडेश॰ पतङ्गेश कन्येशोधवलेश्वरः ॥ ३२ ॥
जातुकर्णेश्वरश्चैव गन्धभद्रेश्वरस्तथा ॥
चक्रेश्वरोऽरुणेशश्च औदाल्क्येशोवृकेश्वरः ॥ ३३ ॥
त्रियम्बकेश्वरश्चैव गौतमेशउमेश्वरः ॥
वितण्डेशश्च कण्ठेशोवराहेशः कुलेश्वरः ॥ ३४ ॥
केदारेशः फलेशश्च किन्नरेशोमृतेश्वरः ॥
कैलासशैलामलमौलिवर्यं
प्रकामलिङ्गालयकल्पनं शिवे ॥
ईशानकोणानलकोणसंस्थितं
कैलासईशादिमतः परंतपे ॥ ३५ ॥

उद्यत्पताकावलिमौलिकुम्भं
मणीन्द्रधामस्थसुलिंगमण्डलम् ॥
विश्वोत्तमांगं फणिभूषणाश्रितम्
त्रिपुण्ड्रसंशोभितफालदेशम् ॥ ३६ ॥
पश्याद्रिजे लिंगकुलं ममेदं
सन्दर्शनात्पापहरं सदैव ॥
इति श्रीशिवरहस्ये प्रथमांशे कैलासप्राग्द्वार-
लिंगवर्णनं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

---

॥ ईश्वरउवाच ॥

एवं लिंगकुलं भद्रे प्राक्कैलासशिखाश्रयम् ॥
तथैव दक्षिणे चापि प्रवक्ष्ये शृणु शैलजे ॥१॥
अघोरेशोगरलेशः कुक्कुरेशोऽनलेश्वरः ॥
इन्द्रेश्वरोयमेशश्च नैर्ऋतीशोनटेश्वरः ॥ २ ॥
उदावर्तीश्वरश्चैव दक्षिणावर्तकेश्वरः ॥
वैकुण्ठेशः कुठारेशः कुमारेशः कुलेश्वरः ॥ ३ ॥
जायकेशोमौलिकेशअर्जुनेशः कवीश्वरः ॥
भगदत्तेश्वरश्चैव नहुषेशोमृतीश्वरः ॥ ४ ॥
तगणेशश्च सन्धीशोमहीशेशोगलेश्वरः ॥
शंखपालेश्वरश्चैव चित्रगुप्तेश्वरस्तथा ॥ ५ ॥

दण्डपाणीश्वरश्चैव दुर्गेशः सारसेश्वरः ॥
हंसेश्वरोमयूरेशश्चक्रवाकेश्वरस्तथा ॥ ६ ॥
मन्थनेशोमन्मथेशोरतीशोगन्धकेश्वरः ॥
भाण्डीरेशोवनेशश्च पुरन्ध्रीशः फलेश्वरः ॥ ७ ॥
कारणेशस्तारणेशः कृत्तिवासेश्वरस्तथा ॥
जनार्दनेशोविश्वेशोमहाकालेश्वरस्तथा ॥ ८ ॥
सरस्वतीशोलक्ष्मीशः शचीशः शक्रकेश्वरः ॥
पुलिन्देशः पुलस्त्येशोवृद्धकालेश्वरस्तथा ॥ ९ ॥
विलेखनेश्वरश्चैव चित्रेशः पादकेश्वरः ॥
पिण्डारेशोवशीशश्च तिलकेशोध्रुवेश्वरः ॥ १० ॥
अभ्रेश्वरोऽर्णवेशश्च क्षुरेशोदलेश्वरः ॥
करन्धमेशः कृष्णेशोरमेशः कर्णकेश्वरः ॥ ११ ॥

गंगाधरेशोमीनेशः कुरुभद्रेश्वरस्तथा ॥
कन्देशश्च सलिलेशस्तालेशोबिल्वकेश्वरः ॥ १२ ॥
अप्सरेशोमोक्षकेशोभूधरेशः पथीश्वरः ॥
विराधेशः किन्नरेशोरभसेशः स्थलेश्वरः ॥ १३ ॥
हरिद्रेशः कुंकुमेशोनरकोत्तारणेश्वरः ॥
सुखेश्वरोज्ञानकेशोभक्तीशोमुक्तिकेश्वरः ॥ १४ ॥
ऋणमोचनः कान्तीशोधर्मेशोपावनेश्वरः ॥
पवीशश्च कुरंगेशोगोकर्णेशोवटेश्वरः ॥ १५ ॥
शालिकेशोवामकेशोवीतिहोत्रेश्वरस्तथा ॥
विश्वेश्वरश्च भीमेशः शंकरेशोऽमितेश्वरः ॥ १६ ॥

पारिजातेश्वरश्चैव मन्दारेशोजटेश्वरः ॥
त्रिजटेशः शिखण्डीशोवर्हीशः कलशेश्वरः ॥ १७ ॥
फणामणीश्वरोदेवि रामेशोलक्ष्मणेश्वरः ॥
अरुन्धतीशोवागीशः पद्मगर्भेश्वरस्तथा ॥ १८ ॥
हरिन्मणीशोभक्ष्येशः कुशलेशस्तरीश्वरः ॥
उद्दालकेश्वरोनक्तंचरेशः पर्णकेश्वरः ॥ १९
शांडिल्येशश्छगलेशोनिरिञ्छेशः कुशेश्वरः ॥
दूर्वेश्वरोनमित्रेशः कर्कन्ध्वीशोहुणेश्वरः ॥ २० ॥
कुरुविन्देश्वरश्चैव पद्मेशः कुटजेश्वरः ॥
श्रीशैलेशोगयेशश्च हरिहरेश्वरस्तथा ॥ २१ ॥
गंगाद्वारेश्वरश्चैव कुरुक्षेत्रेश्वरस्तथा ॥
सुराभाण्डीश्वरश्चैव ययातीशः कुथेश्वरः ॥२२॥
वाराणसीश्वरश्चैव अविमुक्तेश्वरस्तथा॥
कालहस्तीश्वरश्चैव विष्णुचक्रप्रदेश्वरः ॥ २३ ॥
रोमन्थेशअगस्त्येशोमालवेशोभगेश्वरः ॥
अंकोलेशः प्रधानेशोमारुतेशोभयेश्वरः ॥ २४ ॥
नक्षत्रेशस्तालकेशोमल्लिकेशः कुहेश्वरः ॥
रोगहारीशश्चैव त्रिजटेशोघनेश्वरः ॥ २५ ॥
सुपर्णेशस्ताण्डवेशोमण्डलेशोमतीश्वरः ॥
तक्षकेशः प्रवालेशोहरिभद्रेश्वरस्तथा ॥ २६ ॥
विराधेशस्तुम्बुरेशोनारदेशोगरेश्वरः॥
रम्येश्वरोविद्रुमेशस्तृणेशश्च महेश्वरः ॥२७॥

शूलटङ्केश्वरश्चैव वप्रकेशोभलीश्वरः ॥
मरुधामेश्वरश्चैव सिन्दुरेशोघृणीश्वरः ॥२८॥
प्रतीश्वरः प्रयागेशः प्रतिष्ठानपुरेश्वरः ॥
गोदावरीश्वरश्चैव ताम्रपर्णीश्वरस्तथा ॥ २९ ॥
मरुद्वृधेश्वरश्चैव पम्पेशः पङ्किलेश्वरः ॥
फेनेशोवुद्बुदेशश्च स्वावर्तेशः सुमेश्वरः ॥३०॥
कुलेश्वरोवराटेशः पलाशेशः स्थितीश्वरः ॥
प्रलयेशोजगतीशस्त्रिलोकेशः क्षितीश्वरः ॥३१॥
चम्पकेशोव्रतीशश्च यशेशोदर्दुरेश्वरः ॥
वालीशश्चैव पालीशः पलीशोवभ्रुकेश्वरः ॥३२॥
गन्धद्वारेश्वरश्चैव घंटेशोवरुणेश्वरः ॥
प्रभावेशः पुष्करेशोरुद्रकोटीश्वरस्तथा ॥३३॥
वल्मिकेशः सूदरेशस्तृणज्योतीश्वरस्तथा ॥
गायत्रीशः सवित्रीशः कालद्वारेश्वरस्तथा ॥३४॥
तुङ्गेशोभीमचण्डेशोरत्नगर्भेश्वरस्तथा ॥
देवेश्वरोहीरकेशोरन्तिदेवेश्वरस्तथा ॥३५॥
कालंजरेश्वरोब्धीशः पैप्पलादेश्वरस्तथा ॥
गन्धर्वेशस्त्रिशूलेशोरजनीशोदिवेश्वरः ॥३६॥
चित्रघण्टेश्वरश्चैव द्वीप्रपीठेश्वरस्तथा ॥
त्रिकुटेशोसङ्गलेशस्तथैवामलकेश्वरः ॥३७॥
मुद्रेशस्तंडुकेशश्च त्रिदण्डिशोगजेश्वरः ॥
कात्यायनीश्वरश्चैव याज्ञवल्क्येश्वरस्तथा ॥ ३८॥

त्वष्ट्रीशोविश्वकर्मेशोयमेशोरथकेश्वरः ॥
वसुन्धरेश्वरश्चैव क्षौमेशो नालकेश्वरः॥३९॥
मित्रेश्वरश्च कर्त्रीगः काव्येशोविवुधेश्वर ॥
भोमेश्वरोभर्तृकेशः करहाटेश्वरस्तथा ॥४०॥
गृध्रेशः कंकतीशश्च काव्येशः स्वर्णकेश्वर. ॥
एतानि दिव्यमणिधामगतानि देवि
लिंगानि तानि सुभगे नगसोधमौलि ॥
चंद्रोपलाकलितलिंगततीनि पश्य
आग्नेयनैर्ऋततततानि शिवेधहंतृ ॥ ४१ ॥

## इति श्रीशिवरहस्ये प्रथमांशे कैलासदक्षिणद्वार-लिंगवर्णनं नाम एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

### ॥ ईश्वरउवाच ॥

कैलासदक्षिणेपारशृंगेष्वेते शिवालयाः ॥
अनंतान्यपि लिंगानि तपूत्कष्टामयोदिताः ॥ १ ॥
पाश्चात्यापरशृंगेषु शृणु लिंगकुलं शिवे ॥
प्रसिद्धान्यपि लिंगानि ममेष्टानि शृणु प्रिये ॥ २ ॥
तत्पुरुषेशः स्थाण्वीशः पिंगेशउटजेश्वरः ॥
सालेश्वरः स्थानकेशश्चैनंतेशः शिलेश्वरः ॥ ३ ॥
मुसलेशोहौडकेशोरुद्रधन्वीश्वरस्तथा ॥
ज्वरापहारकेशश्च तथा क्षयहरेश्वरः ॥ ४ ॥

शूलटङ्केश्वरश्चैव वप्रकेशोभल्लीश्वरः ॥
मरुधामेश्वरश्चैव सिन्दुरेशोघृणीश्वरः ॥२८॥
प्रतीश्वरः प्रयागेशः प्रतिष्ठानपुरेश्वरः ॥
गोदावरीश्वरश्चैव ताम्रपर्णीश्वरस्तथा ॥ २९ ॥
मरुद्वृधेश्वरश्चैव पम्पेशः पङ्किलेश्वरः ॥
फेनेशोबुद्बुदेशश्च स्वावर्तेशः सुमेश्वरः ॥३०॥
कुलेश्वरोवराटेशः पलाशेशः स्थितीश्वरः ॥
प्रलयेशोजगतीशस्त्रिलोकेशः क्षितीश्वरः ॥३१॥
चम्पकेशोव्रतीशश्च यशेशोदर्दुरेश्वरः ॥
वालीशश्चैव पालीशः पलीशोवभ्रुकेश्वरः ॥३२॥
गन्धद्वारेश्वरश्चैव घंटेशोवरुणेश्वरः ॥
प्रभासेशः पुष्करेशोरुद्रकोटीश्वरस्तथा ॥३३॥
वल्मिकेशः सूदरेशस्तृणज्योतीश्वरस्तथा ॥
गायत्रीशः सवित्रीशः कालद्वारेश्वरस्तथा ॥३४॥
तुङ्गेशोभीमचण्डेशोरत्नगर्भेश्वरस्तथा ॥
देवेश्वरोहीरकेशोरन्तिदेवेश्वरस्तथा ॥३५॥
कालंजरेश्वरोब्धीशः पैप्पलादेश्वरस्तथा ॥
गन्धर्वेशस्त्रिशूलेशोरजनीशोदिवेश्वरः ॥३६॥
चित्रघण्टेश्वरश्चैव द्वीपपीठेश्वरस्तथा ॥
त्रिकुटेशोमङ्गलेशस्तथैवामलकेश्वरः ॥३७॥
मुद्रेशस्तंडुकेशश्च त्रिदण्डेशोगजेश्वरः ॥
कात्यायनीश्वरश्चैव याज्ञवल्क्येश्वरस्तथा ॥ ३८॥

त्वष्ट्रीशोविश्वकर्मेशोपमेशोरथकेश्वरः ॥
वसुन्धरेश्वरश्चैव क्षौमेशो नालकेश्वर॥३९॥
मित्रेश्वरश्च कर्त्रीगः काव्येशोविबुधेश्वर ॥
भौमेश्वरोभर्तृकेशः करहाटेश्वरस्तथा ॥४०॥
गृध्रेशः कंकलीशश्च काव्येशः स्वर्णकेश्वर. ॥
एतानि दिव्यमणिधामगतानि देवि
लिंगानि तानि सुभगे नगसीवमौलि ॥
चंद्रोपलाकलितलिंगततीनि पश्य
आग्नेयनैर्ऋततलानि शिवेषहंतृ ॥ ४१ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासदक्षिणद्वार-
लिंगवर्णनं नाम एकचत्वारिंशोध्यायः ॥४१॥

॥ ईश्वरउवाच ॥

कैलासदक्षिणेपारशृंगेष्वेते शिवालयाः ॥
अनंतान्यपि लिंगानि तपूत्कष्टामयोदिताः ॥ १ ॥
पाश्चात्यापरशृंगेषु शृणु लिंगकुलं शिवे ॥
प्रसिद्धान्यपि लिंगानि ममेष्टानि शृणु प्रिये ॥ २ ॥
तत्पुरुषेश. स्थाण्वीशः पिंगेशाउटजेश्वरः ॥
सालेश्वरः स्थानकेशवैनतेशः शिलश्वरः ॥ ३ ॥
मुसलेशोहौडकेशोरुद्रधन्वीश्वरस्तथा ॥
ज्वरापहारकेशश्च तथा क्षयहरेश्वरः ॥ ४ ॥

प्राणेशश्च विदर्भेगोदेवेशस्त्वचलेश्वरः ॥
अनंगेशः शर्वरीशउग्रेशोबान्यकेश्वरः ॥ ५ ॥
ईशोघान्येश्वरश्चैव धनघोपेश्वरस्तथा ॥
वेदगर्भेश्वरश्चैव ॐकारेशः शिखीश्वरः ॥ ६ ॥
गदाधरेश्वरश्चैव बिल्वमूलेश्वरस्तथा ॥
सत्रेश्वरोभारतीशस्तुंगभद्रेश्वरस्तथा ॥ ७ ॥
सनातनेशोविघ्नेशः कुलिंगेशः प्रजेश्वरः ॥
माण्डव्येशस्त्र्यम्बकेशोवंधेशोविघ्नसेश्वरः ॥ ८ ॥
प्रद्यसेशोथ कुम्भीशोगणगीतेश्वरस्तथा ॥
शुक्लेश्वरः प्रसिद्धेशश्चन्द्रेशश्च शनीश्वरः ॥९॥
यक्षीशोयात्रिकेश्च कुलेशश्चावनीश्वरः ॥
पर्वेश्वरः पर्वतेशः सर्वेशः कार्तिकेश्वरः ॥ १० ॥
वर्हिध्वजेश्वरश्चैव कपोतेशः फणीश्वरः ॥
शतेश्वरोरोमकेशः शल्येशोवर्पकेश्वरः ॥११॥
सोमनन्दीश्वरश्चैव त्रिफलीशः करेश्वरः ॥
हनेहनीश्वरश्चैव शतचैशोभवेश्वरः ॥ १२ ॥
विदुरथेश्वरश्चैव करंभीशः स्रवेश्वरः ॥
गणेश्वरोविधिकेशः सधीशः क्रिकेश्वरः ॥ १३ ॥
चित्रव्याघेश्वरश्चैव रौप्येशोवन्धकेश्वरः ॥
तथा पशुपतीशश्च भयहारीश्वरस्तथा ॥ १४ ॥
जन्महारीश्वरश्चैव दुःखहारीश्वरस्तथा ॥
ब्रह्मयोनीश्वरश्चैव विष्णुगर्भेश्वरस्तथा ॥ १५ ॥

रुद्रलोमेश्वरश्चैव इन्द्रग्रामेश्वरस्तथा ॥
चन्द्रचूडेश्वरश्चैव अग्निगर्भेश्वरस्तथा ॥ १६ ॥
वायवीशाजनेशश्च मेघेशोवैद्युतेश्वरः ॥
आमोदशास्तित्तीरीशोद्यावाभूमीश्वरस्तथा ॥ १७ ॥
गजाजीनधरशश्च नरसिंहेश्वरस्तथा ॥
औपासनेश्वरश्चैव हव्येशोगणकेश्वरः ॥ १८ ॥
कर्णिकेशोदधीचेशोझंझेशः कर्कटेश्वरः ॥
जावालीशः सुवालेशः पुरद्वारेश्वरस्तथा ॥ १९ ॥
ऋग्वेदेशोथर्वकेशः पुराणेशोवशीश्वरः ॥
इतिहासेश्वरश्चैव धर्मसारेश्वरस्तथा ॥ २० ॥
साख्येश्वरश्च योगेशोमौलीश.पालिकेश्वरः ॥
कुजम्भेशश्च जम्भेशोराजराजेश्वरस्तथा ॥ २१ ॥
कौथुमीशोविशाखेशः स्कन्देशः फालिकेश्वरः ॥
कद्दालीशः पृष्ठकेश पृथ्वीश. कार्मुकश्वरः ॥ २२ ॥
अन्तरीक्षेश्वरश्चैव मैत्रेशः कुन्दकेश्वरः ॥
उदावसेश्वरश्चैव मल्लेशोब्रह्मकेश्वर. ॥ २३ ॥
तरंगेशःकुरंगेशोमकरन्देश्वरस्तथा ॥
सुधाधरेश्वरश्चैव धृतकोशेश्वरस्तथा ॥ २४ ॥
व्यालेश्वरोवितर्केशः काननेशोमुनीश्वरः ॥
भद्रमालेश्वरश्चैव केतुमालेश्वरस्तथा ॥ २५ ॥
मन्दरेशोविन्ध्यकेशोनीलकेशोहिमेश्वरः ॥
महेन्द्रेशोकूर्मकेशोमैत्रीशोधूननेश्वरः ॥ २६ ॥

वीतहव्येश्वरश्चैव अश्वमेधेश्वरस्तथा ॥
शिखरेशस्तीर्थकेशोनिवेशश्चाब्जकेश्वरः ॥ २७ ॥
अपरमारहरेशश्च सोमचण्डीश्वरस्तथा ॥
तथा मार्गसहायेशभाजेशोविक्रमेश्वरः ॥ २८ ॥
ईड्येश्वरश्च याज्येशः कर्णवेधेश्वरस्तथा ॥
तर्णकेशःपाण्डुरेशोमेघवाहेश्वरस्तथा ॥ २९ ॥
कनिष्ठेशश्च ज्येष्ठेशस्ताम्रेशः शौनकेश्वरः ॥
अनहत्वेश्वरश्चैव पीतेशोधूम्रकेश्वरः ॥ ३० ॥
बन्धमोचनकेशश्च तथा देविशतेश्वरः ॥
भ्रमरेशःकटकेशोद्रुमचण्डीश्वरस्तथा ॥ ३१ ॥
विशालाक्षेश्वरश्चैव वसन्तेशःखगेश्वरः ॥
गजासुरहरेशश्च नीलकण्ठेश्वरस्तथा ॥ ३२ ॥
सुमित्रावरुणेशश्च कलहंसेश्वरस्तथा ॥
सावित्रीशोगोमतीशोगोनर्देशोनृपेश्वरः ॥ ३३ ॥

गतिप्रदेश्वरश्चैव व्यासेशोगोलकेश्वरः ॥
महाभूतेश्वरश्चैव रसेशोगन्धकेश्वरः ॥ ३४ ॥
वाडवेशोभटेशश्च सर्वप्राणार्तिगेश्वरः ॥
तटातकेश्वरश्चैव वर्गकोशेश्वरस्तथा ॥ ३५ ॥
तोरणेशोरथेशश्च आनपेशः शशीश्वरः ॥
दुन्दुभीशः सिन्दूरीशोजवनेशः कूपेश्वरः ॥ ३६ ॥
वरभद्रेश्वरश्चैव विलादेशोनीमीश्वरः ॥
रंदेशोनामकेशश्च तारणेशोविकेश्वरः ॥ ३७ ॥

॥ ईश्वरउवाच ॥

शरच्छशिगलत्सुधारससमानलिंगावलि-
र्हरिन्मणिनिभच्छविप्रथितबिल्वमौलीन्दुका ॥
फणीन्द्रमणिमण्डलोत्कलितफालपुण्ड्रांकिता
मणीन्द्रवरधामगा वसितगन्धवन्थावरा ॥ ३८ ॥
पश्चाद्द्वागनगे मयैव विहितां लिंगावलीं सुप्रभां
प्रपश्य गिरिकन्यके नयनयुग्मधन्योत्तराम् ॥
महाघकुलदारिणीं सकलशोकसंहारिणीं
रवीन्दुकरशोषणीं मम गणेन्द्रसन्तोषणीम् ॥ ३९ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासपश्चिमद्वार-
लिंगवर्णनं नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

विलाशेशः सुकेशेशआमकेशः प्लवेश्वरः ॥
अन्नकोशेश्वरश्चैव प्राणकोशेश्वरस्तथा ॥ ६ ॥
विज्ञानेशोघनाशेशआत्मेशोरक्षकेश्वरः ॥
आह्ननन्धेश्वरश्चैव मुग्धेशः कोटिशेश्वरः ॥ ७ ॥
निसर्पीशोनामनेशआम्रेशः कमठेश्वरः ॥
शनाशनेश्वरश्चैव उमामहेश्वरस्तथा ॥ ८ ॥
कपिञ्जलेश्वरश्चैव काकेशोपण्डकेश्वरः ॥
असंगेशश्च संगेशोज्योतीशः करणेश्वरः ॥ ९ ॥
हरिरुद्रेश्वरश्चैव चक्रपाणीश्वरस्तथाः ॥
कनकावर्तकेशश्च हरीशश्चारुणेश्वरः ॥ १० ॥
अभ्रेश्वरोदभ्रकेशोदंदशूकेश्वरस्तथाः ॥
उदारेशेन्दुमौलीशमखेशश्च सभेश्वरः ॥ ११ ॥
हरिणेशः किशोरीशः कुण्डलीशोर्भकेश्वरः ॥
युवेश्वरश्च वृद्धेशोदर्दुरेशोवशीश्वरः ॥ १२ ॥
मतीश्वरोवनस्थेशोगृहस्थेशोरुजेश्वरः ॥
सहस्रेशः शतेशश्च लक्षेशः कोटिकेश्वरः ॥ १३ ॥
चापेश्वरोभानुकेशइन्दिरावर्तकेश्वरः ॥
कस्तूरीशोमदंतीशोमनस्वीशोर्बुदेश्वरः ॥ १४ ॥
ऐरावतेश्वरश्चैव तक्षेशोलिङ्गकेश्वरः ॥
अहंकारेश्वरश्चैव फलनेत्रेश्वरस्तथा ॥ १५ ॥
तथैवेलिचिलीशश्च क्रकचेशश्चक्रकेश्वरः ॥
वटमूलेश्वरश्चैव त्रसत्रेशोलुतीश्वरः ॥ १६ ॥

नकुलेशोथ वंशेशः पद्मनेत्रेश्वरस्तथा ॥
उपशांतेश्वरश्चैव दमेशोवृतकेश्वरः ॥ १७ ॥
डलुकेशोथ नररुंडेश्वरः कालेश्वरस्तथा ॥
भगधरेश्वरश्चैव भद्रेशोभरणीश्वरः ॥ १८ ॥

अश्विनीशोरोहिणीशः पंकजेशोवटेश्वरः ॥
निधनेशस्तथोर्ध्वेशोभस्मेशश्च समेश्वरः ॥ १९ ॥

भवेशश्चैव सर्वेशोवेदेशः शाश्वतेश्वरः ॥
ज्वालेश्वरः सालकेशस्तमालेशः पुण्यकेश्वरः ॥२०॥

उत्पन्नेशोणिमादीशः सर्वरत्नेश्वरस्तथा ॥
शुनःकर्णेश्वरश्चैव मादनेशःपृथ्वीश्वरः ॥ २१ ॥
शिपिविष्टेश्वरश्चैव अंशेशोथ मृगेश्वरः ॥
गजाननेश्वरश्चैव वाणेशोविरकेश्वरः ॥ २२ ॥

चण्डीशश्चैव शुक्रेशः फणिकेश्वरएवच ॥
अनसूयेश्वरश्चैव गन्धमादेशईश्वरः ॥ २३ ॥
मण्डेश्वरः प्रजंघेशः कालकूटेश्वरस्तथा ॥
मृत्युञ्जयेशः शैलेशः सदस्येशोमृतीश्वरः ॥ २४ ॥

स्वप्नेशोजागृतीशश्च सुपुप्तीशोहनीश्वरः ॥
शितिकण्ठेश्वरश्चैव सूर्येशः कान्तिकेश्वरः ॥ २५ ॥
स्फाटिकेशः स्वरुद्रेशोवरदेशोवृणीश्वरः ॥
शार्दूलेशोरभस्येशः पुण्ड्रेशानर्तकेश्वरः ॥ २६ ॥

रुद्राक्षेशः कवचेशोभद्रेशश्च मणीश्वरः ॥
पिलीपिलीश्वरश्चैव आमर्देशोगुणेश्वरः ॥ २७ ॥

पितामहेश्वरश्चैव कुटिलेशोझपेश्वरः ॥
भरतेशः केशरीशश्चक्षुः श्रोत्रेश्वरस्तथा ॥ २८ ॥

दण्डकेशश्च लंकेशोमणिभद्रेश्वरस्तथा ॥
घटोत्कचेश्वरश्चैव पुरंशोथ मठेश्वरः ॥ २९ ॥

करमर्देश्वरश्चैव तथैवाम्रातकेश्वरः ॥
फणिभूपेश्वरश्चैव रत्नभूपेश्वरस्तथा ॥ ३० ॥

बिडालकेश्वरश्चैव अण्वीशोमहतीश्वरः ॥
पुरुषेशः परंभशोगिरीशोरमणीश्वरः ॥ ३१ ॥

कवंगेशःकरीन्द्रेशोमाधेशोवालुकेश्वरः ॥
महानादेश्वरश्चैव मण्डपेशःकलीश्वरः ॥ ३२ ॥

जरितेशः कूर्मकेशश्चतुर्मदेश्वरस्तथा ॥
पुष्परागेश्वरश्चैव गेरोदेशोलवेश्वरः ॥ ३३ ॥

ॐ नमः शिवाय.

# शिवरहस्य.

प्रथमांश

प्रदानेशः शिलादेशः कवेशः पददेश्वरः ॥
त्रिलोचनेशोभांक्षेशः स्थूलकर्णेश्वरस्तथा ॥ ३७ ॥
प्रकटेशोधारकेशः कोशार्तीतिश्वरस्तथा ॥
यंत्रेश्वरश्च मंत्रेशस्तथा कनखलेश्वरः ॥ ३८ ॥
गह्वरेशः प्रतार्येशोभगीरथेश्वरस्तथा ॥
अनादीशोमंत्रवदीश्वरोगणहरेश्वरः ॥ ३९ ॥

शृंगेश्वरः पिशंगेशआर्येशस्तारणेश्वरः ॥
ककारेशोमातृकेशः कुष्ठहारीश्वरस्तथा ॥ ४० ॥
हारितेशश्च क्षेत्रेशोवकदाल्भ्येश्वरस्तथा ॥
लोपामुद्रेश्वरश्चैव सुराभाण्डेश्वरस्तथा ॥ ४१ ॥

मणिहस्तीश्वरश्चैव तथा चित्रध्वजेश्वरः ॥
रत्नसौधेश्वरश्चैव कामेशोरुद्रकेश्वरः ॥ ४२ ॥
अवंतीशः कर्पटीशोध्वजेशश्छत्रकेश्वरः ॥
सत्येश्वरः स्तनाभेशः कुवेरेशोवनेश्वरः ॥ ४३ ॥
पवित्रेशोवलेशश्च क्षेत्रेशश्च नगेश्वरः ॥
सदानेशोधावनेशः समासीनेश्वरस्तथा ॥ ४४ ॥
सर्वकामसमृद्धीशः सच्चिदीशः सुखेश्वरः ॥
प्रणतार्तिहरेशश्च पञ्चगन्धेश्वरस्तथा ॥ ४५ ॥
पद्मनाभेश्वरश्चैव पञ्चवक्त्रेश्वरस्तथा ॥
पञ्चाक्षरेशश्छन्देशः सुन्देशः कौशिकेश्वरः ॥ ४६ ॥
आदर्शेशः कालकेशः कालावर्तेश्वरस्तथा ॥
ताम्रध्वजेश्वरश्चैव तथा हंसध्वजेश्वरः ॥४७॥

वृषध्वजेश्वरश्चैव तथा सिंहध्वजेश्वरः ॥
पिच्छेश्वरः कुमारेशोनीलगेशःकलीश्वरः ॥ ४८ ॥
ईशानेशोविकर्तेशः सुरभीशः कुलेश्वरः ॥
सारंगेशः खड्गकेशोवन्धुरेशोगजेश्वरः ॥ ४९ ॥
शंम्वीश्वरोमाथुरेशस्तथा रुद्रगणेश्वरः ॥ ॥

॥ ईश्वरउवाच ॥

एतानि दिव्यलिंगानां नामानि कथितानि ते ॥
यस्तानि नित्यमुत्थाय पूजयेद्वा पठेदपि ॥ ५०॥
स कैलासस्थलिंगानां पठन् रुद्रमवाप्नुयात् ॥
सहस्रं कथितं तुभ्यं तेप्युत्कृष्टतमं शिवे ॥ ५१ ॥
अनन्तान्यपि लिंगानि कोटिशः कमलानने ॥
सारभूतानि लिंगानि कथितानि तवाम्बिके ॥५२॥
सन्ति कैलासशिखरे मया तूक्तानि पार्वति ॥
किं पुनर्बहुनोक्तेन सर्वलिंगमयोनगः ॥ ५३ ॥
कैलासशैलमणिधामगदिव्यतुंग
सोमोपलाकलितलिंगकुलं किलेदम् ॥
तन्मौलिलिङ्गविहितेन्दुकलाझरीभि-
राप्लावितोद्रितनये नगमौलिरेषः ॥ ५४ ॥
तन्मौलिशृंगशिवलिंगमणीन्द्रधाम
कुंभैर्विभाति किल लिंगकुलावतंसः ॥
नानार्कसोमशतकोटिसहस्रकान्तः
कान्त्याधिको गिरिवरः प्रविभाति देवि ॥५५॥

कुलाचलकुमारिके मधुहराक्षिपंकेरुह -
प्रपूजितपदाम्बुजाश्रयणतोतिकान्तोमम ॥
विभाति सुमशेखरद्रुमवनोत्थगन्धानिलै-
र्महांगकलितोद्रिजे श्रवणपुण्यदः शैलराट् ॥ ५६ ॥

कलधौतकलाविलासलोलो
मम मौलिस्थकलाधरोरुभासा ॥
धगधगितततटोरुजातहर्षो
मम सौधोत्तमकुंभशेखरोद्रिजे ॥५७॥

श्रीलिंगधामविलसद्द्युमणिप्रभैश्च
कुंभैर्विचुंबितमहांबरकोशकाशः ॥
भ्राजत्पताकनिवहोनिलपातकेन
दोधूयिताखिलशिखोनगराड् विभाति ॥५८॥

उद्यद्बालदिवाकरप्रतिभरद्रश्मिप्रभैः शृंगकै-
र्माणिक्यामलहीरकैः सुकलितैः कुंभैः शिवागारजैः ॥
तत्तल्लोकनिवासिभिः सुरगणैः संजातविस्मायकै-
र्नानासूर्यशशांकसंभवमहाकांत्याधिकोयं नगः ॥५९॥

ताराराजविराजमानमुकुटालंकारलिंगार्चकैः
प्राप्योयं कलधौतशैलवसतिर्धूताघसंघैरपि ॥
प्राप्योनैव तथानिलाशनतया योगश्च सांख्यैरपि
ब्रह्मेन्द्रादिमरुद्गणैरपि सदा पापान्धकारेर्मम ॥ ६०॥

भक्त्यालिंगितमानसैश्च सुकरं नान्यः पथस्तस्य हि
धन्यः कैलासशैलोनगकुलतिलकोलिंगसंघैकमौलिः ॥
सन्तोष्याम्बुजमित्रचित्रविशिखस्वर्भानुभक्ष्याक्षकात्
मत्तोऽपारयुगोत्थउग्रतपसा लेभे वरं शंकरात् ॥
तस्मिन्नेव निवासईशितुरतिप्रेमास्पदत्वं पुरा
संयाचेग्विलमुक्तये कुलगिरीन्द्रेशः शिवप्रीतिकृत्॥६१

॥ स्कन्दउवाच ॥

इति शिववचनं निशम्य गौरी
प्रणनामेन्दुकलाधराजपादौ ॥
परितः सुसमीक्ष्य लिंगसंघं
घनगात्रोत्पुलकैरुवाच देवी ॥ ६२ ॥

॥ देव्युउवाच ॥

शंभो भीम भवान्धकासुरहर त्र्यक्षाक्षरोमापते
मन्नाथ प्रमथाधिनाथ दयया मे खण्डपर्शो वद ॥
किं वानेन तव प्रसादजनकं तप्तं तपस्तेन हि
कैलासेन तवैव वासकरणं पुण्यैरगण्यैरपि ॥ ६३

किंवानेन नगेन नाथ विहितं चोर्व्यां चिराय प्रभो
लिंगाराधनमेव केवलमहो प्रेमास्पदं ते परम् ॥
किं वाकारिनगेन्द्रधन्यतिलकेनाराधितस्त्वं कथं
लिंगापारशिवालयोयमधुना नान्यन्नगेन्द्रात्परम् ६४

धन्योयं गिरिराजशुभ्रतिलकोलिंगांगमौलिः सदा
पापं वा क्षणसंस्थितं त्वघकुलं लिंगं हरत्येव ते ॥
यत्रापारमहेशसौधवरगं लिंगोत्तमानां कुलं
एतत्संगतवातपोतगतितो लोकाविमुक्ताखिलाः॥६५॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासोत्तरद्वारलिंग-
सौधकथनं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

॥ ईश्वरउवाच ॥

शृण्वपर्णे तपश्चर्याकारणं भूधरस्य च ॥
मम कैलासवर्यस्य सर्वलिंगालयस्य च ॥ १ ॥
नगेन्द्रतिलकश्चायंनानानिर्झरकन्दरः॥
नानाशाखिशतोपेतोनानापक्षिविराजितः ॥ २ ॥
देवि पक्षिगणारावैस्तोष्यन्निव स मां स्थितः ॥
नानामृगगणाकीर्णोनानाद्भुतलतायुतः ॥ ३ ॥
नानाशिखरगोद्भासि शृंगमौलिरयं शिवे ॥
पुरा मयैव मनसा कल्पितोयं महीधरः ॥ ४ ॥
मत्सृष्टिमात्रे मत्यन्तं मनसः प्रीतिमानभूत् ॥
मत्प्रसादाय च पुनस्तपश्चक्रे युगद्वयम् ॥ ५ ॥
धराधरेन्द्रोदेवेशि तच्छृणुष्वाखिलं मम ॥
ज्वलदंगारसन्तापैः सन्तप्ताखिलगात्रकः ॥ ६ ॥

उर्ध्वं रविकरैस्तप्तः शतरुद्रजपादरः ॥
सहस्रहायनं शैलः पर्णभुग्वायुभुक् ततः ॥ ७ ॥
सहस्रं धूपभक्षः स्यात्सहस्रं सलिलाशनः ॥
निराहारः सहस्रं स्याद्भस्मच्छन्नः सदैव हि ॥ ८ ॥
युगमेकमथो वासमम लिंगार्चने रतः ॥
शैलेशश्चागतोदेवि तल्लिंगं बिल्वपल्लवैः ॥ ९ ॥
त्रिकालमर्चयन् भक्त्या ध्यायन्मां स सदा नगः ॥
त्रिनेत्रं नीलकण्ठं च राजच्चन्द्रकलाधरम् ॥ १० ॥
गंगातरंगविलसद्रत्नपद्मविराजितम् ॥
भस्मोत्धूलितसर्वांगं जटामण्डलमण्डितम् ॥ ११ ॥
नागाजिनोपवीतं च फणिभूषा विराजितम् ॥
उमया सहितं देवमंगरागोज्वलांगकम् ॥ १२ ॥
मन्दारकुन्दमालाढ्यस्कन्धरालंकृतोरसम् ॥
करिकृत्तिपटीभास्वत्कटीतटविराजितम् ॥ १३ ॥
फणिमौलिमहारत्नगणाश्रितसुकुण्डलम् ॥
हीरतारमहासारपद्मरागसुकंकणम् ॥ १४ ॥
आरक्तोरुमहापद्मराजत्पादाम्बुजद्वयम् ॥
महार्हवसनं देवं प्रसन्नास्यं सदाशिवम् ॥ १५ ॥
अष्टमीसोमसंकाशनखराजिविराजितम् ॥
उत्फुल्लपुण्डरीकाक्षं वदनस्मेरसुन्दरम् ॥ १६ ॥
दाडिमीबीजसंकाशरदनावलिभासितम् ॥
पक्वबिम्बफलोदाररदच्छदसुशोभितम् ॥ १७ ॥
नीलेन्दीवरसंकाशनीलारक्तविलोचनम् ॥
प्रसादसुमुखं साक्षाज्जगत्साक्षिणमीश्वरम् ॥ १८ ॥

हरिन्मणिनिभाकारां ममांकस्थां च त्वामपि ॥
दध्यौ नगेन्द्रतिलकः पुष्पधम्मिल्लशोभिताम् ॥ १९ ॥
चाम्पेयकलिकोद्भासिदिव्यनासाविराजिताम् ॥
उद्यत्कविनिभात्यच्छमुक्ताफलसुनाशिकाम् ॥ २० ॥
सीमन्तरेखासिन्दूरराजदालकशोभिताम् ॥
मणिध्वजमहाचापसन्निभभ्रूयुगोज्वलाम् ॥ २१ ॥
कस्तूरीतिलकोल्लासिफालभागमनोहराम् ॥
उद्यदुत्फुल्लनीलाच्छदलारक्तदृशायुताम् ॥ २२ ॥
हीरसारकणात्यच्छदन्तपंक्तिविराजिताम् ॥
दाडिमीपुष्पसंकाशाधरां सुसरसां शिवाम् ॥ २३ ॥
ताम्बूलापूरितमुखीं प्रसन्नां सस्मितासुमाम् ॥
तपनोडुपविभ्राजत्कर्णताटङ्कमण्डिताम् ॥ २४ ॥
कर्णपत्रमणिव्रातभास्वन्मण्डितगण्डकाम् ॥
कपोलपालिकादर्शधगत्धागितादिक्तटाम् ॥ २५ ॥
चम्पकोदामकल्हारवकुलाशोकनागकैः ॥
मरुद्दमनकोद्भासिमल्लीमालासरावृताम् ॥ २६ ॥
वेणीमण्डलरत्नाङ्कचन्द्रखण्डशिखण्डकाम् ॥
ग्रैवेयलग्नमणिजसरावलिलसद्गलाम् ॥ २७ ॥
चिन्तकालोलमुक्ताच्छराजत्पदकसन्ततिः ॥
नवरत्नमणिभ्राजद्धीरहारोरुवक्षजाम् ॥ २८ ॥
सुरत्नपुष्पगुच्छाच्छधरां तापसवेणिकाम् ॥
पुष्कराद्वुत्थितापारपीतोद्यन्केतकैर्युताम् ॥ २९ ॥

केतकीगन्धसुभगशीतवातायितांगकाम् ॥
त्रिभंगीसुभगाकारतलोदरविराजिताम् ॥ ३० ॥
तारास्वच्छमहावृत्तमुक्ताहारविराजिताम् ॥
स्फुरत्पदकरत्नाच्छकान्तिकाश्चितदिक्तटाम् ॥ ३१ ॥
रत्नहारमणिभ्राजन्नवरत्नावलीयुताम् ॥
उन्मत्तकरटीकुंभसुवर्णाभकुचोज्वलाम् ॥ ३२ ॥
पाटीरसारकस्तूरीचन्द्रचन्दनचर्चिताम् ॥
पटवासगरूद्भूततैलगन्धैकभासुराम् ॥ ३३ ॥
निचोलरत्नपर्यंतमुक्ताजाललसत्कुचाम् ॥
त्रिवलीललितोदारनाभिभागसुशोभिताम् ॥ ३४ ॥
मृणालनालसुभगरत्नबाहुद्वयांकिताम् ॥
नानारत्नचितानेकबाहुभूषणभूषिताम् ॥ ३५ ॥
नागबन्धफणारत्नलोलिमापारमौक्तिकाम् ॥
वंकिकाफक्किकाभ्राजद्रत्नपंकजशोभिताम् ॥ ३६ ॥
मणिमाणिक्यखचितहस्तकंकणशोभिताम् ॥
रत्नांगुलीयविलसन्नखपंक्तिविराजिताम् ॥ ३७ ॥

महाहीराच्छफलकांगुष्ठवेष्टनवेष्टिताम् ॥
तदंगुष्ठशिरोत्तुंगचलनात्कान्तादिक्तटाम् ॥ ३८ ॥
सुरत्नकाश्चीखचितनवरत्नप्रभोत्कटाम् ॥
तदधस्ताल्ललत्क्षुद्रघंटारणितसुन्दराम् ॥ ३९ ॥
दाडिमीरक्तकुसुमकान्तिरंजितचोलिकाम् ॥
रत्नपर्यन्तसाराच्छधाराप्लुष्टकुचोत्तराम् ॥ ४० ॥

मणिमञ्जीरसिंजानल पादाम्बुजद्वयाम् ॥
पदपाथोजकांगुष्ठ नाग्रोत्थगुच्छकैः ॥४१ ॥
पादांगुलीयभूषाभिरलक्तांकितपद्द्वयाम् ॥
ब्रह्मेन्द्रविष्णुजननीं ममाकल्पविद्युताम् ॥ ४२ ॥
एतादृशीं त्वां ध्यायन् ससाष्टांगस्थिरमानसः ॥
उमासहायं मामेवं ध्यायन्नास्ते तदा मुदा ॥ ४३ ॥
स्वहृदुत्फुल्लपाथोजविकासनरतः शिवम् ॥
बहून्वर्षगणान्देवि कैलासोधरणीधरः ॥ ४४ ॥
निदाघेपञ्चवन्हिस्थोवर्षासुगगनाश्रयः ॥
हेमंते जलशायी च कन्दमूलफलाशनः ॥४५ ॥
पर्णाशनोयुगं साग्रं युगं कन्दाशनोभवत् ॥
युगं च वायुभक्षः स्याद्वाताशनइव स्थितः ॥ ४६ ॥
मम लिंगार्चनपरोधूलिरुद्राक्षभूषणः ।
पञ्चाक्षरजपासक्तः पञ्चास्यध्यानपूर्वकम् ॥ ४७ ॥
रुद्राध्यायजपासक्तोरुद्राविन्यस्तमानसः ।
एवं युगानां दशकं तप्यमानोनगेश्वरः ॥ ४८ ॥
उग्रार्चनरतोप्युग्रन्तपश्चक्रे निरर्गलम् ॥
सत्वनुग्रमनादेवि देवानां विस्मयावहः ॥ ४९ ॥
मुनीनां च गणेन्द्राणां मामयं तोषयन् गिरिः ॥
सपिधायेन्द्रियग्रामं नासाग्रन्यस्तलोचनः ॥ ५० ॥
यमादिनियमोपेतः प्राणायामहताशुभः ॥
प्रणवप्रवणोनित्यं यमं युंजन् मदाश्रयम् ॥ ५१ ॥

अष्टांगयोगनिरतोह्यष्टमूर्तिपदाश्रयः ॥
उटजैकनिकेतश्च कटस्थोविकटोज्वलः ॥ ५२ ॥
धूर्जटिप्रेमसदनं मानसं कृतवान्नगः ॥
वल्मीकेनावृततनुर्गिरिस्तपति कर्पितः ॥ ५३ ॥
तपैकराशिर्वाराशिरिव मानसपंकजः॥
हृदुत्फुल्लमहाम्भोजमध्यगं मामनुस्मरन् ॥ ५४ ॥
ध्यानधारादिविच्छिन्नं कदाचिन्नाकरोदयम् ॥ ५५ ॥
शाखाग्रात्पतितैः प्रवातचलनादालूनवृन्तैः फलैः
पत्रैः केसरकर्णिकादिभिरुमे कुर्वन् स्ववृत्तिं नगः ॥
वर्षाणामयुतं चचारनियतं भूयस्तपोमे दुरः
कुर्वन्प्राणविधारणे वनगवां रोमन्थफेनाशनः ॥ ५६ ॥
मद्भक्तस्तु सरित्प तिं चुलुकवत् खद्योतवद्भास्करं
मेरुं पश्यति लोष्ठवच्छिवरतः कल्पद्रुमं काष्ठवत् ॥
चिन्तारत्नशिलामणिं शकलवद्भूमेः पतिं भृत्यवत्
संसारं तृणराशिवत् किमपरं देहं निजं भाववत् ५७

इति श्रीशिवरहस्ये प्रथमांशे कैलासतपश्चर्या-
नाम चतुश्चत्वारिंशोध्यायः ॥ ४४ ॥

तस्य तं भावमाज्ञाय प्रियेहं प्रेरितस्त्वया ॥
कालेन बहुना देवि तस्याहं निकटं गतः ॥ १ ॥

शारदाभ्रघनाकारवृषभोपरिकल्पिते ॥
रत्नसिंहासनेभास्वत्प्रभामण्डलमण्डिते ॥ २ ॥
रत्नपल्याणविलसन्मुक्तानासाविराजिते ॥
सुशृंगमुकुटोद्भासिकर्णालंवितचामरे ॥ ३ ॥
उद्यत्द्युमणिसंकाशनेत्रकान्तिविराजिते ॥
मणिघंटाझणत्काररंजितग्रीवया युते ॥ ४ ॥
धवले शर्वरीनाथकान्तिद्विगुणकान्तिके ॥
त्वयाहं वृषभे देवि संस्थितः कामगे शिवे ॥ ५ ॥
तस्यैव निकटं प्राप्तोगणवृन्दनिषेवितः ॥
नन्दिप्रोत्सारितपुरोप्सरोगन्धर्वसंस्तुतः ॥ ६ ॥
तुहुण्डधृतरत्नाच्छछत्रावृतमुखोज्वलः ॥
सोममण्डितहुण्डेन मणिदण्डे च चामरे ॥ ७ ॥
वीजितोव्यजनेनाद्यभाण्डकेनाथ-चण्डिना ॥
शोभनं सेवितोवातैः सुगन्धतरशीतकैः ॥८ ॥
पताकाप्रोज्वलाकारबाहुभिश्च गणेश्वरैः ॥
बाणवाणासनभरबाणबाहुसहस्रकैः ॥ ९ ॥
शोभितः पार्श्वतोदेवि कलापधरमुण्डिना ॥
भृंगिताण्डवसन्नाहदर्शनानन्दितान्तरः ॥ १० ॥
तण्डुडिण्डिमनादेन डम्बराम्बरदिङ्मुखः ॥
सनादशंखवहलरवास्फोटितदिक्तटः ॥ ११ ॥
चण्डीशमर्दलोद्दामध्वनिध्वानितव्योमभूः ॥
हेरम्बवृंहितापारघनघर्घरसुन्दरः ॥ १२ ॥
षड्वक्त्रकाहलापारनादपूरितदिङ्मुखः ॥
रत्नपादुकमौलिस्थभैरवेणानुमोदितः ॥ १३ ॥

उक्षाधस्तलसञ्चारिभद्रमौलिगपादयुक् ॥
नारदेरितमधुरवीणाक्कणननन्दितः ॥ १४ ॥
वेदवन्दिरवापारनमः संस्तुतिसुन्दरः॥
मणिभद्रमहाहस्तपटहध्वनिसंयुतः ॥ १५ ॥
लोकपालमुखैस्तत्र सेवितोहं त्वयाम्बिके ॥
झल्लरीवरकोद्भूतरवानन्देन केशिना ॥ १६ ॥
सुकेशमुखवायूत्थशंखध्वनियुतादिशः ॥
आनकोद्दामजारावभद्रेण च प्रकल्पितः ॥ १७ ॥
विष्णुब्रह्मामरेन्द्रैश्च सुकृतिःस्तुतिसंस्तुतः ॥
तमद्राक्षमहं देवि धमनीकृताविग्रहम् ॥ १८ ॥
मत्परन्तद्गिरिवरं कैलासं मुनिवत्स्थितम् ॥
स्वतोपि धवलं चोमे भस्मना चापि पाण्डुरम् ॥१९॥
छायाच्छन्नमहामौलिमपि सूर्यांशुतापितम् ॥
नीरजावलिसंछिन्नसरःपूरितमप्युमे ॥ २० ॥
नीरसैः पाण्डुपत्रैश्च कृताहारं नगोत्तमम् ॥
दृष्ट्वा मे करुणा जाता वेरणच्छिन्दितोदिशम् ॥२१॥

*कमलामलसंफुल्लकरणे स्पर्शितोमया ॥*
मत्करस्पर्शमात्रेण तदोतस्थौ नगेन्द्रराट् ॥ २२ ॥
दृष्ट्वा मां प्रणतः प्रह्वः कृताञ्जलिरिदं जगौ ॥
नयनस्राविसलिलोनृत्यंस्तालकरारवः ॥ २३ ॥
सुन्दरांगोत्थपुलकैर्गद्गदप्रवणं वदन् ॥ २४ ॥

॥ कैलासउवाच ॥

भव शिव भगवन् पिनाकपाणे
सुरवरकिन्नरशोभिताब्जपाद ॥
निरवधिकरुणायशोधिराजन्
शशिधामन् प्रणतोस्मि ते पदाब्जम् ॥ २५ ॥
गुणगणनन्दितनामरूपहीन
त्रिगुणातीतजरादिभिर्विहीन ॥
हरिरुद्राब्जजसार्वभौमभूमन्
स्तुतवेदोत्थितदेवजाब्जमौलौ ॥ २६ ॥

शशिसूर्यानलशोभिताकपाल
स्फुरदुरुभास्करसोमनेत्रमौल ॥
जटया धारितगांगसत्कपर्दशंभो
मयि दृष्टिं वितरायसप्रसादाम् ॥ २७ ॥
जनताकमलोत्थचन्द्रमौले
दुरितापहतारधीरवीर ॥
दृशिशशिविततेन चक्षुपानः
परिपाहीश दयाकटाक्षसारैः ॥ २८ ॥
सुरगानायितवेदजालशंभो
उरगेन्द्रस्फटमालनीलकण्ठ ॥
अवशिवदयया ममैव मौलौ
वसतिस्तेस्तु गणेन्द्रताममाद्य ॥ २९ ॥

इत्थं गिरिन्द्रवचनान्प्रसन्नोस्मि महेश्वरि ॥
तस्मै दत्तं मया देवि गाणपत्यमनुत्तमम् ॥ ३० ॥
गिरीन्द्रसार्वभौमत्वे गिरीन्द्रस्त्वाभिषेचितः ॥
हिमवान्निषधोविन्ध्योमन्दरोमेरुरेव च ॥ ३१ ॥
नीलोमहेन्द्रोम्वरीषोऋषभश्चित्रकूटकः ॥
कंकतोरैवतोदेवि पारियात्रोथ केसरी ॥ ३२ ॥

ऐरावतोथ भद्रश्च मैनाकोगन्धमादन ॥
इरावान्हस्तिशैलश्च मलयोदर्दुरस्तथा ॥ ३३ ॥
सह्योगोवर्धनश्चैव उदयोस्तमयस्तथा ॥
एते प्राधान्यतस्तत्र शैलेन्द्राः स्मृतिमात्रतः ॥ ३४ ॥
ममाग्रतस्ते संप्राप्तामा नत्वा तुष्टुवुर्नगाः ॥ ३५ ॥

॥ गिरयऊचुः ॥

भगवन्भव भूतनाथ शंभो
उरगेन्द्रामलहार पार्वतीश ॥
परिपश्यामलचक्षुपाम्प्रसादे -
रतव पादाब्जरजोत्थमौलयोनः ॥ ॥ ३६ ॥
तव सन्निधिरेव शोकहारी
स्मृतिमात्रेण तवागतावयम्र ॥
वद किंकरवामवामदेव
तव दृष्ट्या कुशलाः स्म देहि चाज्ञाम्र ॥३७॥

इति शैलवचः श्रुत्वा तानवोच मह्ं प्रिये ॥
प्रांजलीन् प्रणतान्प्रह्वानाभिनन्द्यमहेश्वरि ॥ ३८ ॥

॥ शिवउवाच ॥

कैलासोमम वासभूः सहिमतोदत्तागणाधीशता
शैलेन्द्रत्वमपि प्रसादविहितन्दृष्ट्या मया तोषितः ॥
तेनापाग्तपः प्रचारकृतितस्तुष्टेस्मि कष्टापहो
यूयं शैलवरं ममैव वसतिं संपूज्य नत्वा मुदा ॥३९॥

यातस्थानमहोभिषिच्यसुघटैः सौवर्णनीरैरपि
इत्युक्तागिरयस्तदा गिरिवरं नत्वा समानिन्युशः ॥
सिंहस्यासनमुत्तमं शशिनिभं छत्रे च सच्चामरे
इन्द्रोपेन्द्रमरुद्गणैः सह तदा कैलासशैलेश्वरम् ॥४०॥

शैलेशं त्वभिषिच्य शंकरगिरिं भोदेवताः पर्वता
धन्योस्म्यद्य सुरानगेन्द्रगिरिराट्विश्वेशभक्तोह्यसि ॥
त्वन्मौलौ निवसंश्शुभानिवितराम्यपेश्वरः केवलं
मन्मौलिस्थितचन्द्ररश्मिनिकरैःसंशोधितस्त्वं सदा ॥४१॥

इति ममवचनाच्छिवैकतानो
ववृधत्यन्तशिखासमूहमेघः ॥
कलधौतरसैर्विवर्धितोवा
प्रसभं वाक्यमिदं जगाद हर्षात् ॥ ४२ ।

॥ कैलासउवाच ॥

श्रीमद्वीक्षणदग्धकामवपुषं कल्पद्रुमूलेस्थितं
लीलाचालितलोकजालमनिशं कालान्तकं भावये ॥
शूलैनैव लसत्करं तदपरेणात्त मृगीबालकम्
नीलोद्दामतमालसन्निभगलङ्गंगाजलाप्लावितम् ॥४३॥
स्फारोत्कीर्णजटाकुटीरविलसत्सोमार्धचूडं हरं
वन्दे सुन्दरताण्डवादिचतुरं कैलासमौलिस्थितम् ॥४४

इलामिलन्मौलिरथेन्दुमौलिम्
मामाह मौलौ निवसस्व शैलः ॥
मन्मौलिगापारमहोरुलिंगा-
वलीषु च प्रीतियुतश्च भूयाः ॥ ४५ ॥

वेदोपि स्वयमेवमद्य भगवन् रुद्रैर्नमोंतैः पदै-
स्त्वत्सर्वात्मकतागदत्यथ नमन्भक्त्यापरंत्वां सदा ॥
त्वत्सान्निध्यबलेन मामपि विभोस्तोष्यन्नमस्यन्पुन-
र्मंत्रैर्यत्र निषीदसीतिच पुनर्धन्योमदन्योहि कः ४६
इत्थं कैलासशैलस्य श्रुत्वा वचनमाम्बिके ॥
तमब्रुवं महाशैलं कैलासं वरभूधरम् ॥ ४७ ॥

॥ शिवउवाच ॥

कैलासशैलवरसानुगतोर्ध्वसौध
लिंगावलीषु प्रततन्निवसामि कामम् ॥
पापं हरामि सुरताजनतादिलोक
दुःखं च मुक्तिमथ भुक्तिमथोदिशामि ॥ ४८ ॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासवरप्रदानं नाम पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥

॥ ईश्वरउवाच ॥

मत्तोलब्धवरोदेवि कैलासोधरणीधरः ॥
किञ्चित्स्मययुतश्चासीत्प्रियोहं पार्वतीपतेः ॥१॥
नमत्समः शिखरिषु सर्वलिङ्गाश्रयः सदा ॥
मयि देवः सदाध्यास्ते मणिप्रासादमौलिनि ॥२॥
क्व मेरुः पारियात्रश्च मैनाकोमन्दरोपि वा ॥
विन्ध्योवा निषधोगौरि हिमवांश्च नगाधिपः ॥३॥
नीलोस्तउदयोवापि भद्रोवा सप्तशृंगकः ॥
रैवतोवामनः श्रीकः कुमुदोगन्धमादनः ॥४॥
महेन्द्रोमलयः सह्योदर्दुरश्चित्रकूटकः ॥
के वा कुलाचलाः सर्वे शंभोः प्रियतराइति ॥५॥
अहमेव प्रियः शम्भोः सर्वदावासएव हि ॥
गर्वपर्वतसंक्रान्तः सकैलासः पुराम्बिके ॥ ६ ॥
शैलानुसारिस्वहृदाकाठिन्येन नगोत्तमः ॥
तस्य तद्भावमाज्ञाय देवानामपि शैलजे ॥७॥
दक्षमन्यौ मयैवाद्ये मन्युना देवतागणाः ॥
विष्णुरुद्रादयः सर्वे शिक्षिताभद्रकेण हि ॥ ८ ॥

निर्दग्धान्निन्दनादेवि सदक्षान् ब्रह्मपूर्वकान् ॥
पुनः पुनस्तान्दुःखाद्यैर्दैत्यैर्देवि युगे युगे ॥९॥
पातयामि सुरान् युद्धे भवाब्धौ भक्तिवर्जितान् ॥
दुःखाम्बुधौ महादेवि मम भक्तिविवर्जिताः ॥१०॥
पतन्ति सर्वदा सर्वे जन्ममृत्युजरासु च ॥
स्वर्गेषु नरकेष्वेव तानशैवान्सदा शिवे ॥ ११ ॥
मयि भस्मनि रुद्राक्षे शैवे वा येपि दूषकाः ॥
शिवलिङ्गे शिवक्षेत्रे त्रिपुण्ड्रे वेदवर्त्मनि ॥१२॥
भक्तं दूषयते यस्तु योवा कोवा सुरोपि वा ॥
भूपतिर्वा पतिर्वापि तं दुःखे पातयाम्यहम् ॥ १३ ॥
वेदान्ते वा गुरौ मोहादेवि मुक्ते महेश्वरि ॥
पञ्चाक्षरे मुक्तिदे तु रुद्राध्यायेपि वा मम ॥ १४ ॥
शतशाखाश्रुतं मंत्रं पापस्तोमनिवारकम् ॥
सर्वश्रुतिस्तुतिर्देवि श्रीमहादेवपूजने ॥ १५ ॥
एकएव महारुद्रः पूजा इत्याह हि श्रुतिः ॥
रुद्रं विश्वाधिकं मां तु योन्यत्तुल्यतया वदेत् ॥१६॥
सर्वमन्यमसत्त्याज्यं ध्येयोहं पार्वतीपतिः ॥
नमत्समश्चाप्यधिकोदृश्यते श्रूयतेपि वा ॥ १७ ॥
अणोरणीयसामस्मि महतां च महत्तरः ॥
इन्द्रमित्रादिवाक्यैश्च अहमेकोखिलान्तरः ॥ १८ ॥

मामेव वेदवेदान्तोवदन्ति श्रुतयोखिलाः ॥
तुरीयोहं शिवोद्वैतः सत्यं ज्ञानं प्रियस्त्वहम् ॥१९॥

मानयन्त्यन्यथा वाक्यैर्वेदोक्तैर्मोहिताजनाः ॥
तान्पातयामि नरके दुर्बुद्धीन्पापयोनिषु ॥ २० ॥

ममैव हि पराशक्तिस्त्वं जगत्कारिणी शिवा ॥
तवेक्षणाज्जगज्जालं संभवेद्धि युगे युगे ॥२१॥

मम सर्वान्तरत्वं हि अविज्ञाय सुराधमाः ॥
नरोये भूसुराश्चापि मम लिंगस्य पूजने ॥ २२ ॥

मतिर्न तेषां पापानां कलौ देवि भविष्यति ॥
तस्माद्दुःखाम्बुधौ मग्नाभविष्यन्ति सुरासुराः ॥ २३ ॥

मम भक्तिविहीनाये ब्राह्मणाश्चाप्यशंकराः ॥
भवन्ति ते महापापास्तेषां दुःखं पदे पदे ॥ २४ ॥

अनर्चितमहेशानामशैवानां दुरात्मनाम् ॥
भवन्ति विपदः सद्योनरकाश्चापि दारुणाः ॥ २५ ॥

अजप्तशतरुद्राणामशैवानां दुरात्मनाम् ॥
भवन्ति ते महापापास्तेषां दुःखं पदे पदे ॥ २६ ॥

अजप्तपञ्चब्रह्माणामशैवानां दुरात्मनाम् ॥
भवन्ति ते महापापास्तेषां दुःखं पदे पदे ॥ २७ ॥

अजप्तलिंगसूक्तानामशैवानां दुरात्मनाम् ॥
भवन्ति ते महापापास्तेषां दुःखं पदे पदे ॥ २८ ॥

अध्यात पंचतुण्डानान्ध्यानहीनान्तरात्मनाम् ॥
भवंति ते महापापास्तेषां दुःखं पदे पदे ॥ २९ ॥
अजप्तपंचवर्णोत्थपंचाक्षरनिवासिनाम् ॥
भवंति ते महापापास्तेषां दुःखं पदे पदे ॥ ३० ॥

अनुत्धूलितदेहानामशैवानां दुरात्मनाम् ॥
भवंति ते महापापास्तेषां दुःखं पदे पदे ॥ ३१ ॥
त्रिपुंड्ररहितांगानां फालकंठोरुबाहुषु ॥
भवंति ते महापापास्तेषां दुःख पदे पदे ॥ ३२ ॥
अधृताक्षसराणां च अशैवानां दुरात्मनाम् ॥
भवंतिते महापापास्तेषां दुःखं पदे पदे ॥ ३३ ॥

अदृष्टमम लिंगानामशैवानां दुरात्मनाम् ॥
भवंति ते महापापास्तेषां दुःखं पदे पदे ॥ ३४ ॥
प्रदोषार्चनहीनानामशैवानां दुरात्मनाम् ॥
भवंति ते महापापास्तेषां दुःखं पदे पदे ॥ ३५ ॥

सोमवारविहीनानामशैवानां दुरात्मनाम् ॥
भवंति ते महापापास्तेषां दुःखं पदे पदे ॥ ३६ ॥

अष्टम्यर्चनहीनानामशैवानां दुरात्मनाम् ॥
भवंति ते महापापास्तेषां दुःखं पदे पदे ॥ ३७ ॥
भूतार्चनविहीनानामशैवानां दुरात्मनाम् ॥
भवंति ते महापापास्तेषां दुःखं पदे पदे ॥ ३८ ॥

मम क्षेत्रोज्झितानां च अशैवानां दुरात्मनाम् ॥
भवंति ते महापापास्तेषां दुःखं पदे पदे ॥ ३९ ॥
अन्यक्षेत्रस्थितानां च अशैवानां दुरात्मनाम् ॥
भवंति ते महापापास्तेषां दुःखं पदे पदे ॥ ४० ॥

ममतत्त्वविहीनानामशैवानां दुरात्मनाम् ॥
भवंति ते महापापास्तेषां दुःखं पदे पदे ॥ ४१
मम नैवेद्यहीनानामशैवानां दुरात्मनाम् ॥
भवंति ते महापापास्तेषां दुःखं पदे पदे ॥ ४२ ॥

मम लिंगेन ये देवि समं विष्ण्वादिपूजनम् ॥ ४३ ॥

ये कुर्वन्ति महापापास्तेषां दुःखमनर्गलम् ॥
भवंति ते महापापास्तेषां दुःखं पदे पदे ॥ ४४ ॥

बिल्वपत्रोज्झितानां तु अशैवानां दुरात्मनाम् ॥
भवंति ते महापापास्तेषां दुःखं पदे पदे ॥ ४५ ॥
मां पश्यन्ति समं ये तु देवि विष्ण्वादिभिः शिवे ॥
तेषां न दूरगादेवी आपदोनिरयाअपि ॥ ४६ ॥

मद्भक्तमन्यभक्तैश्च समं पश्यन्ति ये जनाः ॥
तेषां न दूरगादेवी आपदोनिरयाअपि ॥ ४७ ॥
एवं धर्मोज्झितायेवै नराअपि सुराः शिवे ॥
तएव रासभाजाताविद्वांसोबहुविश्रुताः ॥ ४८ ॥

मृदोर्ध्वपुंड्रं ये कुर्युरशैवाजडबुद्धयः ॥
तएव नारकाः पापास्ते यमातिथयोम्बिके ॥ ४९ ॥
भस्मात्रिपुंड्ररुद्राक्षे येषां लज्जा शिवार्चने ॥
तएव रासभादेवि ते यमातिथयोम्बिके ॥ ५० ॥

सर्वश्रुतिमतं नित्यं लिंगार्चनमुमे मम ॥
त्यक्त्वान्यदेवपूजायां ये रतारासभावराः ॥ ५१ ॥
गृहस्थायतयोदेवि ते यमातिथयोम्बिके ॥
मृत्फालादग्धचक्रांकाये विप्रादेववर्जिताः ॥ ५२ ॥

आचारभासुराश्चापि असुरारासभाश्च ते ॥
येन्यदेवसमं मत्वा मां निन्दन्ति क्षणं शिवे ॥ ५३॥
ते सर्वेप्यंत्यजाएव कर्मानिर्हास्तएव हि ॥
मार्लिंगं चान्यलिंगैश्च पूजयन्ति च येधमाः ॥ ५४ ॥

तएव लिंगदग्धांगाः सूकरीयोनिसंभवाः ॥
तस्मान्मदर्चनं ध्यानं न त्याज्यं वैदिकैर्द्विजैः ॥ ५५ ॥
ये भस्मनिष्ठाः सततं रुद्राध्यायार्थवित्तमाः ॥
तेषामेवात्मविज्ञानं मम लिंगार्चने रतिः ॥ ५६ ॥
ये तु पंचाक्षरासक्ताः सदा रुद्राक्षधारिणः ॥
तेषामेवात्मविज्ञानं मम लिंगार्चने रतिः ॥ ५७ ॥
ये तु मत्क्षेत्रनिरताः श्रुत्युक्तेनैव वर्त्मना ॥
तेषामेवात्मविज्ञानं मम लिंगार्चने रतिः ॥ ५८ ॥

तस्मान्मत्परमोभूयादहं तेषां हि मोचकः ॥
पापसन्तापदुःखाब्धेस्तारकोहं महेश्वरि ॥ ५९ ॥
सुराणां गर्वनाशाय सृष्टोविश्रवसः सुतः ॥
विष्णुस्तु भृगुशापेन मनुष्येषु जनिष्यति ॥ ६०॥
तस्य भार्यापहरणान्मुनिसंपीडनादपि ॥
कदाचिदागाद्दर्पेण कैलासं मम रावणः ॥ ६१ ॥
अखर्वगर्वसंक्रान्तः कैलासस्यापि गर्वहृत् ॥
तोलयामास वाहुभ्यां कैलासं मम शैलजे ॥ ६२ ॥
कैलासश्चालितस्तेन नानालिंगसमाश्रयः ॥
महागम्योमम तदा मन्युनासावधः कृतः ॥ ६३ ॥
तेन स्तुतोस्मि वेदैश्च वेदवेद्योहमीश्वरः ॥
नाम्ना सहस्रं शरदां तुष्टावाष्टाकृतिं हि माम् ॥ ६४ ॥
मदंगुष्ठाग्रनिर्मग्नधरणीधरमूलगैः ॥
वाहुभिः पीडितोदेवि दशास्योमामरोरवीत् ॥ ६५ ॥
दयया मोचितं रक्षस्तदा स्तोत्रेण मां स्तुवत् ॥
स्तुत्वा नत्वानिर्जगामदिशं मेनावलोकयत् ॥६६॥
कैलासोपि महादेवि हतगर्वोवभूवह ॥ ६७ ॥

॥ देव्युवाच ॥

कथं तेन महादेव संस्तुतोसि वदाद्य तत् ॥
किंवा तेन तपस्तप्तं श्रोतुमिच्छास्ति मे शिव ॥ ६८॥

॥ ईश्वरउवाच ॥

तत्स्तुतिं सावधानेन पार्वति शृणु ते वदे ॥
रावणोरोरवीद्देवि मच्छैलवरमूलगः ॥ ६९ ॥

दीनस्वरोतिविकृतं सास्राविलविलोचनः ॥ ७० ॥

॥ रावणउवाच ॥

ताराराजविराजमानमुकुटं कांकोदराकल्पकं
कर्पूराभशरीरकान्तिविलसन्मारांगभस्मावरम् ॥
कैलासाचलतोलनेन कुपितांगुष्ठाग्रसंपीडितं
शैलाघातनबाहुभंजनरटद्वैराजसामश्रयं ॥ ७१ ॥

उन्मुक्ताखिलरावणं पुरहरं देवं भजे शंकरम् ॥७२॥

वैराजराजकृतगायनरीति तुष्टं
राजच्छशांकधवलं ललितोत्तमांगम् ॥
यक्षाधिराजकृतसख्यमुमासहायं
देवं नमामि सुरराजकृतप्रणामम् ॥ ७३ ॥

इलाधरसुताप्रियं वरसुनन्दिचण्डिप्रियं
सुरेन्द्रवरसुप्रियं प्रभवकुन्दमालाधरम् ॥
मुकुंदनयनार्चितं भवहरान्धकारे स्थितम्
रजारमणसुन्दराक्षियुगपूज्य पादं शिवम् ॥ ७४ ॥
अजमनोद्भियं शिपंडहुरामलसुवाह
नान्दितंगन्धवन्धमधुरालकलोलं ॥
रुद्रनेत्रसुधरित्रदयानिधानं
याज्यमित्रवरधामगचित्रशक्ते ॥ ७५ ॥
स्तौमि प्रकृष्टवचसा वरवैश्वमित्र
सार्भैर्भवंतमगतः परिमोचयाशु ॥ ७६ ॥

पर्वानन्दितशर्वरीरमणवत्कान्तेन्दुधामानना
गात्रार्धाधिकृतास्वकान्तिवदने नेत्रे च मौलौ तथा ॥
देवेशेन सदैव शोभितकलायुक्तेन बालांकधृक्
तादृक्षं जगतां गुरुं त्रिजगतां पापापहं तं भजे ॥७७॥

॥ ईश्वरउवाच. ॥

एवं तुष्टावचाष्टाकृतिमखिलतनूद्भासिकः शैलक्लिष्टो
माभीशं जगदार्तिनाशनमुमे चार्तस्तदा रावणः ॥
कैलासाचलतोविमुक्तभुजधृक् नत्वा ययौ धामकं
लंकां मूलनिकेतनं मम सदा लिंगार्चकः शङ्करि:॥७८॥
सुरवरगजजोरुसाद्विपाणैः
परिघृष्टव्रणतः क्विणंस्तु वक्षाः ॥
रणभुविरावितदेवराजसंघः
पणितप्राणगणेश रावणेश ॥ ७९ ॥

रावणेशरावणेद्रिकन्ये

नालीकासननंदनोद्भवभवः पौलस्त्यएपोंबिके
मामाराध्यगणेन्द्रतामगमुते भ्रातोप्यवध्यः सुरैः ॥
येनाकारि तपः स्वकीयमनले चोत्कृत्यमांसं जुहोत्
मल्लिंगे विदधादयं स्वशिरसः पद्मालिमालांपुरा ८०॥
भ्रातृभ्यां निजवीर्यनिर्जितमहासीमैकभूमायशः॥८१

वैरूपवैराजबृहद्रथंतरैः
श्रीरामदेव्यैर्थरुद्रस्वांकरैः ॥
श्रीरैवतेलांधरवैर्महेन्द्रै
र्महाप्रदंप्रावरवेश्वमित्रैः । ८२ ॥
तुष्टावसामैः शशिमौलिमंबिके
सरावणोराविततसर्वलोकः ॥
रवैस्तदा सामसुगानतोषितं ॥ ८३ ॥

धीरोदारपयोजजापतिकृतात्पादारविंदार्चना
तुष्टं दुःखहरं प्रकृष्टवचसा स्रष्ट्रा पुनः संस्तुतं ॥
त्वप्राशातकराजगंधसंहनसत्केरवे
मित्रायेयशिवस्यमित्रनिवहापांत्वधघ्यादिभान्ते
नैतामितगर्वपर्वतमहापायायायच्छिवः ॥ ८४॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासचालने रा-
वणकृतस्तुतिर्नाम षट्चत्वारिं-
शोध्याय. ॥ ४६ ॥

इलाधरसुताप्रियं वरसुनन्दिचण्डिप्रियं
सुरेन्द्रवरसुप्रियं प्रभवकुन्दमालाधरम् ॥
मुकुंद नयनार्चितं भवहरान्धकारे स्थितम्
रजारमणसुन्दराक्षियुगपूज्य पादं शिवम्॥ ७४ ॥
अजमनींद्रियं शिपंडहुरामलसुवाह
नन्दितंगन्धबन्धमधुरालकलोलं ॥
रुद्रनेत्रसुचरित्रदयानिधान
याज्यमित्रवरधामगचित्रशक्ते ॥ ७५ ॥
स्तौमि प्रकृष्टवचसा वरवैश्वमित्र
सार्भैर्भवंतमगतः परिमोचयाशु ॥ ७६ ॥

पर्वानन्दितशर्वरीरमणवत्कान्तेन्दुधामानना
गात्रार्धाधिकृतास्वका॰॰वदने नेत्रं च मौलौ तथा ॥
देवेशेन सदैव शोभितकलत्युस्तेन वालांकधृक्
तादृक्षं जगतां गुरुं त्रिजगतां पापापहं तं भजे ॥७७॥

॥ ईश्वरउवाच. ॥

एवं तुष्टावचाष्टाकृतिमखिलतनूद्भासिकः शैलक्लिष्टो
मामीशं जगदार्तिनाशनमुमे चार्तस्तदा रावणः ॥
कैलासाचलतोविमुक्तभुजधृक् नत्वा ययौ धामकं
लंकां मूलनिकेतनं मम सदा लिंगार्चकः शङ्करिः॥७८॥
सुरवरगजजोरुसद्विषाणैः
परिघृष्टव्रणतः क्विणंस्तु वक्षाः ॥
रणभुविरावितदेवराजसंघः
यणिनप्राणगणेश रावणेश ॥ ७९ ॥

रावणेशरावणेन्द्रिकन्ये

नालीकासननंदनोद्भवभवः पौलस्त्यएपोंबिके
मामाराध्यगणेन्द्रतामगलुते प्राप्तोप्यवध्यः सुरैः ॥
येनाकारि तपः स्वकीयमनले चोत्कृत्यमांसं जुहोत्
मल्लिंगे विदधादयं स्वशिरसः पद्मालिमालांपुरा ८०॥
भ्रातृभ्यां निजवीर्यनिर्जितमहासीमैकभूमायशः॥८१
वैरूपवैराजबृहद्रथंतरैः
श्रीरामदेव्यैर्घररुद्रस्याकरैः ॥
श्रीरैवतेलांदरवैर्महेन्द्रै
र्महाप्रदंप्रावरवैश्वमित्रैः । ८२ ॥
तुष्टावसामैः शशिमौलिमंबिके
सरावणोरावितसर्वलोकः ॥
रवैस्तदा सामसुगानतोषितं ॥ ८३ ॥
धीरोदारपयोजजापतिकृतात्पादारविंदार्चना
तुष्टं दुःखहरं प्रकृष्टवचसा स्रष्टा पुनः संस्तुतं ॥
त्वप्राशातकराजगंधसंहननात्कैरवे
मित्रायेयशिवस्यमित्रनिवहापांत्वधष्यादिभान्ते
नैतामितगर्वपर्वतमहापायायायछिवः ॥ ८४॥

इति श्रीशिवरहस्ये प्रथमांशे कैलासचालने रा-
वणकृतस्तुतिर्नाम षट्चत्वारिं-
शोध्यायः ॥ ४६ ॥

करोति सृष्टिं नाशं च स्थितिं कालस्य कल्पनाम् ॥
सैव मायामोहितानां ब्रह्मविष्णुहरात्मनाम् ॥ २२ ॥
शरीराणि प्रविश्यैव करोति सचराचरम् ॥
सएव सर्वभूतानां प्राणानादायोदेति च ॥ २३ ॥
सएव सर्वभूतानां प्राणानादायास्तमेति च ॥
स्त्रियान्नपानभोगैश्च तत्तद्देहेषु सर्वदा ॥ २४ ॥
परां प्रीतिं वितनुते जडेष्वजडईश्वरः ॥
सएव जाग्रदाद्यासु अवस्थास्वपि शंकरः ॥ २५ ॥
अवस्थारहितश्चायं सर्वेष्वन्तर्गतः स्थितः ॥
सएव जाग्रद्भूतेषु स्वपित्येकोमहेश्वरः ॥ २६ ॥
सएवानन्दमूर्तिस्तत्तस्यानन्दैकलेशतः ॥
प्रियात्मकं जगज्जालं कुरुते दुःखदायकम् ॥ २७ ॥
असत्यमेतच्च जडं स्वसत्यात्सत्यवत्स्थितः ॥
करोति च जडं सर्वं चेतनानां सचेतनः ॥ २८ ॥
असंगोपि सदा भाति जगत्स्वेतेषु शंकरः ॥
संगवानिव विश्वेशोसंगः सर्वान्तरङ्गकः ॥ २९ ॥
बुद्धेर्बोधयितामन्तामनसश्च मनोतिगः ॥
अप्राणः प्राणरूपेण आकाशादपि चोत्तरः ॥ ३० ॥
ब्रह्मब्रह्ममयोभाति शिवएव सनातनः ॥
न तस्य कारणं कार्यं न क्रिया परमार्थतः ॥ ३१ ॥
शीर्णेषु देहजालेषु अशीर्णः सर्वदा स्थितः ॥
विकारभूते जगति निर्विकारतया स्थितः ॥ ३२ ॥
गच्छन्स्त्वेव सदासीनोशिवएव हि केवलः ॥
गुहाहितोनिरिच्छोहि सदा भेदविवर्जितः ॥ ३३ ॥

कारणं कारणानां च महान् हि तमसः परः ॥
यस्माद्ब्रह्मेन्द्रविष्ण्वाद्यारुद्राः सर्वे मरुद्गणाः ॥३४॥
संप्रसूतामहादेवि न ततोस्त्यधिकः परः ॥
यस्य विश्वसितं वेदानानाशाखाविभूषिताः ॥ ३५ ॥

यस्य ज्ञानेन सर्वेषां मुक्तयः सर्वतोद्विजाः ॥
स सन्तरति संसारमसारं भवदायकम् ॥ ३६ ॥
सरसोयं यद्रसेन जगद्रसमये भवेत् ॥
सएव ज्योतिषां ज्योतिः स चक्षुः सतपोमहत् ॥
॥ ३७ ॥
सभूमाकेवलानन्दः सबोधः केवलं शिवः ॥
सएव स्थूलश्चाणुश्च रुद्रोविश्वार्तिनाशनः ॥ ३८ ॥
निरिन्द्रियश्चेद्रियाणां गतिः शास्तामहेश्वरः ॥
निराभासोनिरासंगोविश्वभासप्रवर्तकः ॥ ३९ ॥
सर्वं तस्मिन्महादेवे जगद्ब्रह्मापिपीलिकम् ॥
विभाति मायया साक्षात्तस्मिन् ज्ञाने मुनीश्वराः ॥
॥ ४० ॥
सर्वं शिवतया भाति प्रसादेन महेशितुः ॥
सर्वोऽशात्मापुरुषोनेहनानास्ति किञ्चन ॥ ४१ ॥

विकारमेतत्सर्वं हि अविकारे विकारितम् ॥
तस्यैव तपसोध्यानात्तल्लिंगार्चनतोद्विज ॥ ४२ ॥
सर्वमेकं तस्यैव नात्र कार्याविचारणा ॥
भिद्यन्ते ग्रंथयः सर्वाएकत्वेनानुपश्यतः ॥ ४३ ॥

तस्मात्मार्तं महादेवं विश्वाकारतया स्थितम् ॥
वह्निर्वायुर्जलं क्ष्मा च वियत्स्वेतन्महेश्वरः ॥ ४४ ॥
एतेषामानुलोम्येन प्रातिलोम्यतया तथा ॥
संजातान्यत्र लीनानि तस्मिन्नेव महेश्वरे ॥ ४५ ॥
तस्माद्भूतानि जातानि तत्र जीवन्ति तान्यपि ॥
तस्मिन्नेव लयं यान्ति ईशसंस्थं चराचरम् ॥ ४६ ॥
ईशावास्यमिदं विश्वयस्मिन्सर्वं प्रवर्तते ॥
एवं योवेदवेदान्तैः प्रसादात्परमेशितुः ॥ ४७ ॥
गुरोःस्याश्रद्धया चैव सर्वज्ञश्चैव शांभव ॥
समुनिः सशिवश्चापि सशिवज्ञानवित्तमः ॥४८॥

॥ स्कन्द उवाच ॥

अपाणिपादोसि निरामयोसि
रूपः स्पर्शः शब्दगन्धोरसादिः ॥
सर्वस्य वेत्ता त्वं न वेत्ति कश्चित्
द्रष्टद्रष्टारं त्वां वेत्ति न कथं चित् ॥४९॥
वृद्धोबालः पुरुषस्त्वं युवा स्त्री
त्वं वै क्लीवोनत्वमेवासि किंचित् ॥
स्थाणुश्छन्दभूतभव्यं जगद्वै
देहैर्युक्तोभासि तस्मान्नतोस्मि ॥ ५० ॥

इति श्रीशिवरहस्ये प्रथमांशे वेदरहस्यकथनं
नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

ॐ नमः शिवाय.

# शिवरहस्य.

प्रथमाश.

## ॥ स्कन्दउवाच ॥

एतादृशं महादेवं नीरूपं रूपवास्थितम् ॥
प्राह देवी महादेवं प्राञ्जलिः प्रणता तदा ॥ १ ॥
करुणासागरापारसुधाकरशिखण्डक ॥
ब्राह्मनुण्डमहाखण्डमालाकलितकन्धर ॥ २ ॥
अनाधार महादेव जगदाधार शंकर ॥
प्रपन्नजनमन्दारसुन्दरानन्दविग्रह ॥ ३ ॥
कथं कैलासमौलिस्थलिंगानामुद्भवः शिव ॥
श्रोतुं मे कौतुकं शंभो वद सर्वज्ञ मत्प्रिय ॥ ४ ॥
शैलमौलौ महादेव लिंगानामुद्भवोत्र हि ॥
कथं समभवच्छंभो तन्मे विस्तरतोवद ॥ ५ ॥
इत्थं गौर्या तदा पृष्टोमहादेवोदयारसैः ॥
तामुवाच महात्मा जगदात्मा महेश्वरः ॥ ६ ॥

## ॥ शिवउवाच ॥

शृणु शैलसुते बालकमलामललोचने ॥
रहस्यमेतद्गोप्यं ते नाख्येयं यस्य कस्यचित् ॥ ७ ॥
मद्भक्तायैव देयं स्यादन्यथा पतितोभवेत् ॥
योभूतिभूषणरतोयास्त्रिपुंड्रैकभासुरः ॥ ८ ॥
योरुद्राक्षांगदकरोरुद्राक्षामलभूषणः ॥
योरुद्रजपसुप्रीतोयोमल्लिंगार्चने रतः ९ ॥
योभस्मशायी सततं पञ्चाक्षरजपादरः ॥
योविल्वार्चनतः प्रीतोयश्च विल्वार्चनाप्रियः ॥ १० ॥

योमद्भक्तिसुधापारकथाश्रवणतत्परः ॥
योमन्नैवेद्यभोजी स्यादन्यनैवेद्यवर्जितः ॥ ११ ॥
योमत्ध्यानमनानित्यमन्यध्यानविवर्जितः ॥
मन्नामपरमोयश्च अन्यनामविवर्जितः ॥ १२ ॥
योमत्क्षेत्रनिवासीस्यादन्यक्षेत्रविवर्जितः ॥
योमद्भक्तजनप्रीतोह्यन्यभक्तपराङ्मुखः ॥ १३ ॥

अन्नैः पुष्णाति योभक्तान्मदीयान्सततं शिवे ॥
यमादिनियमोपेतः सर्वदा शिवपूजकः ॥ १४ ॥
वेदान्तसारपारज्ञाः प्रकाशयन्तेष्विदं शिवे ॥
नान्येषु मेव देवेशि रहस्यं गोप्यमेव हि ॥ १५ ॥
विद्याविदिकथासारं दत्वा मुक्तिमवाप्नुयात् ॥
प्ररोहं याति सुभगः सभूमौ वटबीजवत् ॥ १६ ॥

मुटेलाप्रज्ञतापस्ते वृथैव शांभवं हरः ॥
यथा मृत्कुंभक्षिप्तांभोवृथा भवति शांकरिः १७ ॥
तद्वद्भवति मूर्खेषु पशुधर्मेषु शांकरि ॥
महापापमवाप्नोति तस्य नैवेह निष्कृतिः ॥ १८ ॥

यथा सुगन्धकर्पूरचन्दनैर्भूषितोनरः ॥
रथ्याभस्मकरीषेषु स्वांगं संलेपयेत्स हि ॥ १९ ॥
तथैवाशांभवे दत्तं नोपकाराय भामिनि ॥
शांभवप्रवरे दत्तं विस्तारं याति शांकरि ॥ २० ॥

यथोत्सृष्टं जले तैलं विस्तारमुपगच्छति ॥
तस्माद्वोप्यतर्म देवि साधुध्वेवं विदर्शय ॥ २१ ॥
ममैव मनसा सृष्टः कैलासोयं महीधरः ॥
नानातरुगणच्छन्नः सर्वपक्षिवराश्रयः ॥२२॥
रत्नसौधवरोपेतोरम्यपुष्करणीयुतः ॥
कोटियोजनविस्तारः शून्यएव महीधरः ॥ २३॥
रम्योयमपि शैलेन्द्रोविपिनाद्यलिमण्डितः ॥
मृगाश्रयोपि सततं शून्यएव विभाति मे ॥ २४ ॥
तस्मान्मया महादेवि मनसेदं सुनिश्चितम् ॥
तत्सर्वं मंगलाकारं शिवलिंगाश्रयं हि यत् ॥ २५ ॥
लिंगोज्झितं हि यद्देवि तदमंगलमीर्यते ॥
यस्मिन् ग्रामेपि वा देवि पुरे वा विपिने शिवे ॥
मदीयं लिंगहीनं च स्मशानसदृशं हि तत् ॥ २६ ॥
यत्र वा शिवलिंगं स्यादुत्तुंगालयमध्यगम् ॥
ग्रामे वा विपिने वापि तत्क्षेत्रमविमुक्तिकम् ॥२७॥
प्रातस्तद्ग्रामनिर्वासाः पश्यन्त्यपि शिवालयम् ॥
न तेषां पापसंबंधस्तदन्हात्प्रतिमुच्यते ॥ २८ ॥
यत्र लिंगकुलं देवि धन्योदेशः सदासहि ॥
यत्रैव शांभवाविप्रायत्र लिंगार्चनप्रियाः ॥ २९ ॥
भस्मत्रिपुंड्रुरुद्राक्षमालालंकृतविग्रहाः ॥
यत्र विल्ववनं भद्रे तद्वनं परमं शिवे ॥ ३० ॥

तद्दर्शनेपि पापानां प्रलयोभवति क्षणात् ॥
रुद्रक्षलिंगेक्षणादेव क्षणान्नश्यति पातकम् ॥ ३१ ॥

धिक् भस्मरहितं भालं धिग्ग्राममशिवालयम् ॥
धिगनीशार्चनं जन्म धिग्विद्यामशिवाश्रयाम् ॥३२॥

शिवलिंगकुलं भद्रे कल्पितुं मणिसौधगः ॥
समाधिनिष्ठोह्यभवं शतं वर्षाणि शैलजे ॥ ३३ ॥

व्याघ्रचर्मपरीधानोभस्मधृक् भस्मसंश्रयः ॥
त्रिपुंड्रविलसद्भालोजटागंगेन्दुशोभितः ॥ ३४ ॥

सुसमानशिरोग्रीवोनासाग्रन्यस्तलोचनः ॥
आत्मानमात्मनाध्यायन् तद्वक्तुं नैव शक्यते ॥३५॥

सर्वसर्वातिगं शान्तं ओतप्रोतं सनातनम् ॥
अजमव्ययमाशास्यं हृत्स्थं व्याप्तजगत्त्रयत् ॥३६॥

अक्रियं मनसा वाचा वेदैर्वा वक्तुमक्षमम् ॥
कोशातिगं कोशमानदेशकालादिवर्जितम् ॥ ३७ ॥

अस्थूलमणुकाहीनअसंगमरसं विभुम् ॥
अगन्धन्तेजसां राशिं तेजोहीनं गुणातिगम् ॥ ३८ ॥

व्याप्यव्यापकताहीनं महान्तं विस्तृतं च तत् ॥
आनन्दमरसं भोक्तृभोगभोग्यादिवर्जितम् ॥ ३९ ॥
विशोकं विरजं सूक्ष्ममजिघृक्षुगुणातिगम् ॥
सत्यकामं च संकल्पनानाजालविवर्जितम् ॥ ४० ॥
नान्यत्किञ्चिदवेदाहं सत्यज्ञानादिवर्जितम्॥
आनन्दहीनोऽनिश्चेष्टस्तदहं ब्रह्मकेवलम् ॥४१॥
एवं स्थितस्य मे गात्रात्पुलकः संबभूवह ॥
देहीदेहांगनाशोत्थस्वात्म्यैकपरमात्मनः ॥ ४२ ॥
आनन्दाम्बुनिधेवच्यः कोपि मत्तः समुत्थितः ॥
मद्रोमकणाल्लिंगानि कैलासस्थानि पार्वति ॥ ४३ ॥
तदा कालान्तरे देवि समाधिविरते मयि ॥
पश्यामि तानि सर्वाणि लिंगाकाराणि शैलजे ॥ ४४
प्रोद्यत्सुधांशुधवलजालामौलीनि शांकरि ॥
कैलासेश्वरमुख्यानि त्रीणिकोट्यधिकानि च ॥ ४५ ॥
मणीन्द्रसारसुभगमौलिकुंभोरुगोपुरैः ॥
प्रासादवरणोपेतैर्दिव्यपूजाभरैरपि ॥ ४६ ॥
बिल्वमन्दारमौलिनि फणाजालततानि च ॥
दृष्ट्वाश्चर्येण तल्लिंगकुलं मंगलदायकम् ॥ ४७ ॥
कैलासशंकरं लिंगं पूजितानि च पूजये ॥
लोकलीलाविनोदाय कार्यमेतन्मम प्रिये ॥ ४८ ॥
एतत्ते कथितं देवि नाख्येयं यस्यकस्यचित् ॥ ४९ ॥
अशांभवजनार्पितं गदितमेतदाद्यं यदि
वृथा भवति तद्वतं निगमहीनभस्मे हुतम् ॥
मरूपरभवस्तरुर्भवति न प्ररूढोयथा
तथापि तृणकोपमोभवति भाग्यहीनोनरः ॥५०॥

अशांभवजनाश्रयोनरकवर्गदुःखांबुधिः
सएव सदुपाश्रयोभवति भस्मपुंड्रोज्झितः ॥
ममार्चनकथासुधाश्रवणहीनपीनान्तरः
कथं मलजलाविलोभवति सूकरः सिंहवत् ॥ ५१ ॥
अगाधजनिनाशनप्रभवभूतिदुःखांबुधिं
न सन्तरति मानुषः कुमतिरिष्टविष्ठाशनः ॥
अरिष्टमरणोन्मुखः शिवमहेशनाम्नोज्झितः
करंटककुलोद्भवोभवति भाग्यहीनोधमः ॥ ५२ ॥
येषां सा शिवनामसन्मधुरसाश्रीदिव्यनामानि मे
व्याख्येयेत सुजिह्वया करयुगैः श्रीविल्वपत्रार्चकाः ॥
कथासु मम शांकराः प्रथितश्रोत्रपात्रादरा
भवंति सुकृते. परंवरमनन्यभावं गताः ॥ ५३ ॥
तेषां मुक्तयएवलभ्यनउमे मद्भावसारादरा
हीरोदारकुमारदारनिकरैः सौख्यैकसाराश्च ते ॥
पारावारविकारसंसृतिभवं दुःखं न तेषु ध्रुवं
मत्पादाब्जपराश्च संहृतमनस्तापाहिसूरादयः ॥ ५४ ॥

सुखांबुधिसुधांबुदप्रवल्लीललीनाहिते
निधानकलशाः सदा भुवि सदैव तेषां सुखम् ॥
शरीरविगमेपि ते प्रथितचन्द्रचूडार्चका
नगेश्वरमिमं शिवं समधिवाप्यतेसद्गगाः ॥ ५५ ॥

इति श्रीशिवरहस्ये प्रथमांशे शिवगौरीसंवादे
अष्टचत्वारिंशोध्यायः ॥ ४८ ॥

---

## ॥ शिवउवाच ॥

पुःाहं सुखमासीनोमन्दरे चित्रकन्दरे ॥
रम्यपुष्करविस्तीर्णे पुष्करिण्यास्तटे शुभे ॥ १ ॥
वन्दारुतरुसंच्छन्ने देवोद्यानमनोहरे ॥
नानासिद्धसमाकीर्णे मुनिगन्धर्वशोभिते ॥२॥
नगाग्रकुसुमापारस्तवके छन्नगुच्छके ॥
मुदितालिभिराच्छन्ने शाल्मलीकिंशुकावृते ॥३॥
पुन्नागवनसंभूतमारुते वाति शीतले ॥
मयूरवरसारङ्गमत्तवानरवारणे ॥ ४ ॥
पुंस्कोकिलकलालापशुकसारसशोभिते ॥
कलहंसकुलारावकुररध्वनिसुन्दरे ॥५॥
मन्दारकुसुमोद्भूतमन्दमारुतशोभिते ॥
किम्पूरुषकृतापारमृदङ्गध्वनिनादिते ॥ ६ ॥
वैखानसैर्वालखिल्यैर्मुनिभिश्च मरीचिपैः ॥
उद्यचण्डांशुनिचयैरुर्ध्ववाहुभिरुन्नतैः ॥ ७ ॥

तापसैर्मौलिविलसत्कपर्दोत्कलशोभितैः ॥
कपर्दकृतनीडैश्च पक्षिपक्षोत्थमारुतैः ॥ ८ ॥
विश्रान्तैः सूर्यकिरणतप्तगात्रैर्मुनीश्वरैः ॥
रम्यसानुशताकीर्णे निर्यद्रीतिविराजिते ॥ ९ ॥
तगरागरुजोद्भूतदावाग्निवरधूपिते ॥
वरसौधे मन्दराख्ये सुखासीनन्त्वयासह ॥ १० ॥
उद्यच्चन्द्रांशुधवलं वालेन्दुकृतशेखरम्॥
राजत्फणिफणारत्नक्वणत्कंकणशोभितम् ॥ ११ ॥

उरगेन्द्रमहाहारं नीलकण्ठन्त्रिलोचनम् ॥
व्याघ्रचर्मांतरासङ्गङ्गापिङ्गजटाधरम् ॥
त्रिशूलविलसद्वाहुं मृगहस्तं महेश्वरम् ॥ १२ ॥
ममैव मायापरिमोहिताः सुरा
रुद्रेन्द्रविष्ण्वाब्जजमित्रसोमाः ॥
भगोर्यमावरुणोगन्धवाह-
स्तथा सोमोवसवोमारुतश्च ॥ १३ ॥
ऊचुः प्रांजलयः सर्वे मां प्रणम्याथ न सुराः ॥
मत्तेजसा धर्षिताश्च भीतामाहेश्वरोजसा ॥ १४ ॥

॥ देवाऊचुः ॥

कोभवान्तव किं रूपं नानाश्चर्यैकभावनः ॥
नम्रोसि देवदेवेश ब्रह्ममण्डलसत्कर ॥ १५ ॥
त्रिनेत्रश्च गरादश्च नीलकण्ठश्च शंकरः ॥
महाहिवलयोद्भासि रत्नमालालसद्गलः ॥ १६ ॥
पितृकाननसंभूतभस्मधार्यसि सर्वदा ॥
जटिलोसि महादेव महावृषभवाहनः ॥ १७ ॥
मत्स्यकूर्मवराहादिनरसिंहाजिनप्रियः ॥
गजकात्तधरोनित्यं चन्द्रमूर्धासि शाश्वतः ॥ १८ ॥
करवालमहाशूलधारकोसि महेश्वर ॥
वामभागैकविलसत्कामिनीकोसि विश्वभुक् ॥१९॥
सदा गिरिप्रियश्चासि असङ्गः संचरिष्यति ॥
तव चारित्र्यगणनां गणितुङ्कोपि न क्षमः ॥ २० ॥
कानिचित्तव देवेश वद त्वद्गुरुणानिध ॥
अशरीरोसि चारित्रं तव ज्ञातुं न शक्यते ॥ २१ ॥

तव मायामयैः पाशैर्मोहिताश्च वयं सुराः ॥
शरीरिणं त्वान्दृष्ट्वैव अस्माभिः समुपास्यते ॥ २२ ॥
पुत्राभ्यां प्रीतियुक्तोसि युक्ताभ्यां द्विपडास्यकैः ॥
पड्भिर्मिताहिनन्देवन्त्वाञ्च मन्यामहे वयम् ॥ २३ ॥

वयं च लोकपाः सर्वे ब्रह्मविष्णुमहेश्वराः ॥
रुद्रादयश्च दिक्पालाग्रहर्षिमनवः सुराः ॥ २४ ॥
ब्रह्मा सृजति लोकांश्च विष्णुः पालयते जगत् ॥
रुद्रः संहरते चान्ते इन्द्रोयं सुरनायकः ॥ २५ ॥
हन्त्याजौ सर्वदैत्यांश्च मखभुक् विष्टपाधिपः ॥
विश्वे च ऋभवः सोमं तेन यज्ञे पिबन्त्यपि ॥ २६ ॥

सोमन्तवाज्ञया शंभो अश्विनौ सोमपीथीनौ ॥
वसवश्च तथा शंभो सूर्यः पाति गभस्तिभिः ॥२७ ॥
निशानाथः सदा चन्द्रस्ताराश्चान्ये ग्रहादयः ॥
इन्द्राग्नीसूर्यतनयोनिर्ऋतिर्वरुणोमरुत् ॥ २८ ॥
यक्षेन्द्रोयन्धनाधीशोईशोयश्च महेश्वरः ॥
मनवोऋषयश्चैव स्वंस्वङ्कार्य मुपासते ॥ २९ ॥

ताराचक्रमिदं सर्वं लोकाश्चैव चतुर्दश ॥
एतेषामतिरिक्तस्त्वं कस्त्वं देव वदाधुना ॥३० ॥
चरित्राण्यपि ते देव विश्वातीतानि दर्शय ॥
नैव स्वं विश्वपारोसि देवोविश्वाधिकोह्यसि ॥३१॥

तव देव कथं रूपं रूपवानिव दृश्यते ॥
न सज्जसे गुणेषु त्वङ्गुणवानिव दृश्यसे ॥ ३२ ॥
विश्वातिगोसि भूतेषु विश्ववानिव दृश्यसे ॥
निर्गुणोपि च देवेश सगुणोपीव दृश्यसे ॥ ३३ ॥
देव्यानया विहरसे कैलासाचलमूर्धगः ॥
निष्किञ्चनोसि च सदा सर्वभाग्यसुखोदयः ॥ ३४ ॥
तव दृक्कोटि[illegible]भवन्त्येवेश्वराहि ते ॥
स सुरासुरगन्धर्वामानवाः पशवोपि हि ॥ ३५ ॥
तत्र तत्रोत्कृष्टतमास्तव कारुण्यतोऽखिलाः ॥
रमसे प्रमथाधीशैः स्कन्दहेरम्बसंयुतः ॥ ३६ ॥

तवापारचारित्राणां नेयत्ताय महेश्वर ॥
वेद्यैरीड्योसि भगवन् नैव किञ्चित्करोपि च ॥ ३७ ॥
तव लिङ्गं सुरैः सर्वैरसुरैर्मुनिभिर्नरैः ॥
पूज्यते बिल्वपत्रैश्चैतेषान्त्वं मोचकोह्यसि ॥ ३८ ॥

भवजालमयैः पाशैः किन्ते रूपं महेश्वर ॥
भस्मप्रियोसि भगवन् भस्मनिष्ठायुते कृपा ॥ ३९ ॥
रुद्राक्षधारिणोयेस्युस्तेपि त्वद्भक्तसत्तमाः ॥

पञ्चाक्षरपराणाञ्च त्वं सदा मोक्षकोह्यसि ॥ ४० ॥
रुद्राध्यायार्थकथनसंलापासक्तचेतसाम् ॥
तेषान्त्वं पापजालानि विनाशयसि शङ्कर ॥ ४१ ॥

भक्तिप्रियोसि भगवन् मोहितास्तव मायया ॥
संशयाविष्टहृदयास्त्वाम्पृच्छामोमहेश्वर ॥ ४२ ॥
तवैव रूपन्देवेश कृपया वद तच्छिवम् ॥
अस्माभिरिव लोकेषु रूपवानिव दृश्यसे ॥ ४३ ॥
स्त्रियान्नपानभोगेश्च रहितोप्यजरामरः ॥
अरिमित्रेष्वपि सदा तुल्योस्यपि महेश्वर ॥ ४४ ॥
स्मरत्रिपुरदैत्येन्द्रयमान्धकगजादिहृत् ॥
उत्तमोसि कथन्देव अस्माभिरिव ते सदा ॥
चारित्रन्दृश्यते शम्भो वद तत्करुणाबलात् ॥ ४५ ॥

॥ स्कन्दउवाच ॥

इत्येतैः सहितदेवैः परिपृष्टोमहेश्वरः ॥
उवाच ताञ्शृणु मुने वेदवेदाङ्गवित्तम ॥ ४६ ॥
विश्वाक्षोभगवान्नुताथ इषुमान् व्याप्तश्च सर्वात्मको
रुद्राणाञ्च गणैः सहस्त्रवदनः सर्वात्मकः शक्तिमान्॥
नानाकारजगद्गतिषु विरहत्येकोपि सर्वात्मक
स्तद्वत्तत्र शिवायुतोगिरिवरे क्रिडारसैर्निर्भरः॥ ४७ ॥

क्वचिद्ब्राह्मे सौधे विहरति सहाम्बोहि भगवान्
क्वचिल्लिङ्गे स्वाङ्गन्त्वपचितिविशेषैर्विहरति ॥
क्वचिन्नीले सौधे विहरति च वातायनगतः
क्वचित्स्वच्छान्तरे जलसरसि देव्यावगहते ॥ ४८ ॥

क्वचित्तुष्यन् गन्धैः क्वचिदपि मणिहारसदने
क्वचिन्नृत्यम्पश्यन्क्वचिदपि च वीणासुनिनदैः
क्वचिद्भक्ष्यम्भुङ्क्ते विहरति च दोलासु शिवया ॥ ४९॥
क्वचिद्दीव्यत्यक्षैः क्वचिदपि च हल्लीसरयुतो
महारत्नैः क्लृप्तैर्वरतरगवाक्षैकवसतिः ॥
क्रीडाकन्दुकमुत्क्षिपत्यविरतन्देव्यास्यलोकादरो
ध्यायन्स्वात्मतया कदाचिदपि वै एकोपि नानाकृतिः५०
इत्थं कैलासशैलेष्वनवरतमीशोपि वसति
भवान्या तादृक्ष्या किमिहमहमीडेय चरितम् ॥
ततः किञ्चित्किंचित्कथरचरितमात्रङ्कथमपि
ब्रुवे शम्भोः पादाम्बुजभजनभक्त्यैव हि सदा ॥ ५१ ॥

इति श्रीशिवरहस्ये प्रथमांशे देववाक्यं
नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

---

॥ स्कन्दउवाच ॥
निलिम्पवचनं श्रुत्वा निर्लेपोनिर्मलः शिवः ॥
अनुकंपारसाक्रान्तः कंपितानाहतान्सुरान् ॥ १ ॥
॥ ईश्वरउवाच ॥
इतिगीर्वाणवृन्दानां श्रुत्वाहं वचनं शिवे ॥
मन्दस्मिताधरोदवि विस्मयानन्दितान्तरः ॥ २ ॥
मन्मायामोहितान् ज्ञात्वा नानवोचमथाम्बिके ॥
ब्रह्माविष्णुमहेशाद्याइन्द्राग्न्यनिलमित्रकाः ॥ ३ ॥

वसवोश्विभगादित्यामरुतश्चर्यायोखिलाः ॥
शृणुध्वं मम सार्वात्म्यं यदज्ञानात्सुरासुराः ॥ ४ ॥
मन्मायामोहितायूयमभिजातास्थसत्तमाः ॥
भवन्तः पशव. सर्वे आब्रह्मस्तम्भपूर्वकाः ॥ ५ ॥
अहम्मायामयैः पाशैरघणाभिः सुरासुरान् ॥
बध्वा क्रीडामि देव्या च जगत्यस्मिन् चराचरे ॥ ६
अहमेव सुरान् सर्वान् मोचकोभक्तिभावितः ॥
मम रूपमविज्ञाय भवन्तोविग्रहं मम ॥ ७ ॥
दृष्ट्वैव चेष्टां विविधाङ्गुणभूताङ्गुणातिगान् ॥
विषयेष्वनुरक्तं मा ज्ञात्वा मोहं परञ्जताः ॥ ८ ॥
तमद्यैवापनेष्यामि शृणुध्वम्परमं मम ॥
गोप्याद्गोप्यतरं ज्ञानमथर्वशिरसि स्थितम् ॥ ९ ॥
सर्वश्रुतिशिरोद्भूतं साक्षादज्ञाननाशनम् ॥
अहमेकोनिराधारोवर्ताम्याकाशवत्सदा ॥ १० ॥
नैव लेपोस्ति मनसोमम कार्येन्द्रियैस्तथा ॥
न महाभूतसंघैश्च न कालेर्न दिशासुराः ॥ ११ ॥
वस्तुतोस्म्यपरिच्छिन्नअसङ्गोस्मि निरामयः ॥
अव्यक्तः परमात्माहं सर्वेषामन्तराशितः ॥ १२ ॥
अहमादिश्च मध्यं च अहमन्त· सनातनः ॥
जगज्जन्मादिनाशोत्थक्रियाभिर्नाहमीश्वरः ॥ १३ ॥
अतएवाखिलं विश्वं मय्येवेदं स्थितं सुरा. ॥
ब्रह्मविष्णवीन्द्ररुद्रेन्द्राभवन्तोमत्तएव हि ॥ १४ ॥

निर्गतास्थभवन्तोवै जगज्जालमिदं सुराः ॥
सोमोहं जनितादेवाः सर्वेषां भवतां सुराः ॥ १५ ॥
भवद्भिः सह मय्यन्ते विद्यत्येतज्जगाचरम् ॥
न मत्तोस्ति पृथक् किंचिन्नेहनानास्ति किंचन ॥ १६ ॥
मां विज्ञायेदमखिलं जानन्त्येकं सनातनम् ॥
ममैकत्वपरिज्ञानात्कोमोहोय निर्लिम्पकाः ॥ १७ ॥
मां विदित्वैव परमां शान्तिस्तेषां सर्वं हि ॥
ग्रंथिभिर्नाभिभूयन्ते कामकर्ममयैः सुराः ॥ १८ ॥

वध्यन्तेत्र भवन्तोहि पशवोमम मायया ॥
वाङ्मयैर्गुणमयैर्देवास्तत्फलंप्राप्यते दिवि ॥ १९ ॥
ये यथा माम्प्रपद्यन्ते नानोपासनया सुराः ॥
तांस्तथैवाहमेवाद्य तत्रायानम्प्रपूरकः ॥ २० ॥
सदैव प्रेरयाम्यद्य सोहङ्कारोपरे भवेत् ॥
मां प्रेरकमविज्ञाय कर्ताहमिति मन्यते, २१
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ॥
सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुराः ॥ २२ ॥

अपाणिपादोजवनः पश्याम्यहमतन्द्रितः ॥
अचक्षुः श्रोत्रहीनोस्मि मनः प्राणातिगोस्म्यहम् ॥२३
ईशावास्यमिदं सर्वमित्थं ज्ञात्वा विमुच्यते ॥
अहं सर्वशरीरेषु विज्ञानमिदमेव हि ॥ २४ ॥
न वेत्ति मां सुराः कोपि सततं योगयुक्तिभिः ॥
सर्वाश्रयोह्यपि सदा सर्वाधारश्च सत्तमाः ॥ २५ ॥

पञ्चकोशविहीनश्च पञ्चभूतातिगोह्यहम् ॥
पञ्चप्राणातिगश्चाहं कदन्देहेन्द्रियं सुराः ॥ २६ ॥
अपक्षयादिरहितः सर्वभूतेषु सर्वदा ॥
लोकोत्थसुखदुःखैश्च षडूर्मिभिरपि ध्रुवम् ॥ २७ ॥

नैव लिप्तोस्मि देहेषु अक्षीणोहमवस्थितः ॥
सूर्योयथा सर्वलोकं प्रवर्तयति कर्माणि ॥ २८ ॥
लोककार्यविहीनश्च तद्वत्साक्ष्यहमास्थितः ॥
कायप्राणमनोधर्मैर्नानाहङ्कारसम्भवैः ॥ २९ ॥

धर्मैर्वा पापजालैर्वा नैव लेपोस्ति मे सुराः ॥
काष्ठाहम्परमश्चाहं भासकोहं जडेष्वपि ॥ ३० ॥
भीषास्मादनिलोवाति भीषोदेति गभस्तिमान् ॥
भीषैव चन्द्रयमकाभीषैवेदं स्थितं जगत् ॥ ३१ ॥
ज्योतिषां ज्योतिरस्मीह विम्बोविम्बातिगोस्म्यहम् ॥
एकत्वं वा तथा द्वित्वं बहुत्वं वा न किंचन ॥ ३२ ॥

नैव मुक्तिर्नैव वन्धोमयि सर्वेश्वरे सुराः ॥
सर्वभूतस्त्वहन्देवाः साक्ष्यसाक्षिविवर्जितः ॥ ३३ ॥
नचाणुर्न महांश्चापि निर्गुणोवा गुणोपि वा ॥
न मायामायिनइव किंचिन्नैवाहमिश्वरः ॥ ३४ ॥
एषोहम्परमानन्दोरसोहं सर्ववस्तुगः ॥
एषब्रह्मादिसर्गश्च अहमेव सदा सुराः ॥ ३५ ॥

अतियूयं सर्वएव सीमा भूमाहमेव च ॥
न वेदवादवेदान्तैर्न गुरूक्त्या न चेज्यया ॥ ३६ ॥
न कर्मणा वा तपसा प्राप्नोत्येकोपि वो सुराः ॥
मत्प्रसादेन वेदैव वृणेतं भक्तमेव हि ॥ ३७ ॥
मन्निष्ठां सर्वभावेन कश्चिज्जानाति वा नवा ॥
अथान्यथानयन्त्यर्थं वेदान्तानान्दुरात्मनः ॥३८॥
मामविज्ञाय दुःखौधैर्नैव मुक्तोभविष्यति ॥
विभूतीर्मम वक्ष्यामि शृण्वन्तु परमाः सुराः ॥३९ ॥
मद्भाभावपरोऽभामत्प्रसादेन लभ्यते ॥
ये भस्मनिष्ठः सततन्तेषामेतत्प्रकाश्यते ॥ ४० ॥
ये त्रिपुण्ड्रादिसद्धा गारतेषामेतत्प्रकाश्यते ॥
ये रुद्राक्षमहादेहास्तेषामेतत्प्रकाश्यते ॥ ४१ ॥
ये रुद्राध्यायनिरतास्तेषामेतत्प्रकाश्यते ॥
ये मल्लिङ्गाराधनेच्छा बिल्वपत्रादिसाधनैः ॥ ४२ ॥
ये पञ्चाक्षरसन्मन्त्रजपध्यानैकमानसाः ॥
तेषां श्रुतिशिरोद्भूतं ज्ञानं सद्यः प्रजायते ॥ ४३ ॥
ये शिवक्षेत्रनिरतास्तेषामेतत्प्रकाशते ॥
अनन्यभावाः सततं वेदान्ते मयि ये गुरौ ॥ ४४ ॥
तथा चानन्यभावाये मदः कौटिल्यवर्जिताः ॥
तेषां श्रुतिशिरोद्भूतं ज्ञानं सद्यः प्रकाशते ॥ ४५ ॥
मन्नामनिरताये वै तेषामेतत्प्रकाशते ॥
सर्वेभ्योदेवसंघेभ्योवरिष्ठमन्वंत हि य ॥ ४६ ॥

तेषां श्रुतिशिरोद्भूतं ज्ञानमेतत्प्रकाशते ॥
मत्ध्यानानिरताये वै तेषामेतत्प्रकाशते ॥ ४७ ॥
मत्ध्यानं नाम वेदान्तसारतात्पर्यचिन्तनम् ॥
तस्मिन्नशक्ते मद्रूपाचिन्तनन्तत्प्रबुध्यये ॥ ४८ ॥
चिन्तयेन्नीलकण्ठं मां त्रिनेत्रं चंद्रशेखरम् ॥
उमार्धविग्रहं रूपं स्वहृत्कमलसद्मगम् ॥ ४९ ॥
भावयन्सततं युक्तस्तज्ज्ञानं प्राप्नुयात्सुराः ॥
अपरोक्षं हि मे ज्ञानन्तस्य जायेत निश्चितम् ॥५० ॥
एवं साधनहीनानां ज्ञानन्तद्दुर्लभं सुराः ॥
शृण्वन्गुरुमुखेभावैर्बुध्या शब्दपदार्थवित् ॥ ५१ ॥
नैव तत्प्राप्नुयाज्ज्ञानं कल्पकोटिशतैरपि ॥
मत्प्रसादविहीनोयोगृही वाथ यतिर्वनी ॥ ५२ ॥
तन्नैव प्राप्नुयात् ज्ञानं साक्षात्संसारमोचकम् ॥ ५३ ॥
यस्मिन् ग्रामे पुरे वा सततपरिचितापारशैवप्रचारा
रुद्राध्यायजपादराः सितलसद्भस्मत्रिपुंड्रादराः ॥
शम्भोर्लिङ्गसमर्चकास्तु सुतरान्तेनातुरानैव ते
संप्राप्यन्ति यमाद्भयं जनिजरारोगप्रणाशेन वा॥५४॥
ज्ञानमेतदतिदुर्लभं सुराभुक्तिमुक्तिजनकं मम भक्त्या॥
युक्तियुक्तगुरुसूक्तसुधाधिरुच्यमानदनघं सततं च ॥५५॥
लभ्यते किल पचेलिमपुण्यैः कस्यचिन्मम कृपावशतोहि ॥
बन्धहृत् हृदयभेदकं सुराअन्यदेव न यथा नच कर्मणा ५६॥

इति श्रीशिवरहस्ये प्रथमांशेसुरोपदेशो
नाम पंचाशत्तमोऽध्यायः ॥ ५० ॥

## ॥ ईश्वरउवाच ॥

विभूतिर्मम वक्ष्यामि शृण्वन्तु सुरपुङ्गवाः ॥
यत् ज्ञात्वा न पुनर्ज्ञेयं विद्यते सुरसत्तमाः ॥ १ ॥
अहमेकोखिलाधारअहं विश्वप्रवर्तकः ॥
अहं विश्वमिदं सर्वं मय्येवान्ते विशत्यपि ॥ २ ॥
अहन्धाता विधाता च मत्तोन्योनास्ति कश्चन ॥
सृजामीदं ग्रसामीदम्भरामीदं सुरोत्तमाः ॥ ३ ॥
यथोर्णनाभिः सूत्रांश्च सृजति ग्रसतीत्यपि ॥
तथैवेदं जगज्जालं भवद्भिः सह सत्तमाः ॥ ४ ॥
कालात्माहं ब्रह्मक्षत्रमोदनं मृत्युभाजनम् ॥
अहं जीवं प्रविश्यैव सर्वभूतेषु संस्थितः ॥ ५ ॥

सर्वभूतेषु भूतान्तर्गुहायां समवस्थितः ॥
सर्वेन्द्रियविनिर्मुक्तः सर्वधर्मविवर्जितः ॥ ६ ॥
मदाधाराइमे लोकालोकायूयं सुरासुराः ॥
तपने तापकश्चाहं चन्द्रमाहं प्रसादकः ॥ ७ ॥
अनिले चपलश्चाहन्त्वानले उष्मकोह्यहम् ॥
इन्द्रे यमे प्रतापोहं लक्ष्मीश्चाहन्धनाधिप ॥ ८ ॥
अश्विनावपि भैषज्यं मरुतामन्तरं सदा ॥
विश्वेषां हृदयं चाहं वसूनां हृद्गतः सदा ॥ ९ ॥
असुराणां सुराणां च संपदासमवस्थितः ॥
तमसा सात्विकेनेव मुनीनां राजसः सुराः ॥ १० ॥
गुणत्रयोहं विबुधागुणहीनोस्मि केवलः ॥
अहं विनिर्गुणः साक्षात्तमः पारे प्रतिष्ठितः ॥ ११ ॥

अपां रसस्तथैवाहन्तेजसां ज्योतिरस्म्यहम् ॥
भूताकाशे चेतयिताव्यापकः शब्दगोऽस्म्यहम् ॥ १२॥
पृथिव्यां च तथा गन्धोगुणोदेवाः सुसंस्थितः ॥
वायुश्चाहन्तथा देवि एषामाद्याविसृष्टयः ॥ १३ ॥
चराचरमिदं प्रोक्तं जगत्स्थावरजङ्गमम् ॥
एतेषामानुलोम्येन सृष्टयः स्युः प्रवर्तिताः ॥ १४ ॥
एतेषां प्रातिलोम्येन स्थितिःप्रलयसंज्ञिता ॥
एतेषाङ्क्रियंकरणे नैव किंचिदहं सुराः ॥ १५ ॥
निर्लिम्पानैव लेपोमे किन्तु साक्षी सनातनः ॥
सत्सान्निधानविरहे जगन्नैव प्ररोचते ॥ १६ ॥
अयस्कान्तमणेर्यद्वत्सन्निधौ लोहसूचयः ॥
चेष्टन्ति विविधन्देवास्तथैवेदं जगद्गतम् ॥ १७ ॥
सन्निधौ चेष्टते मय सर्वं क्रीडनकाममम ॥
मम रूपपरिज्ञानम्भवतामपि दुर्लभम् ॥ १८ ॥
षडूर्मिरहितश्चाहं कृत्स्नधर्मविवर्जितः ॥
ब्रह्माप्यहं सृजामीदं रजसा केवलं जगत् ॥ १९ ॥
विष्णुः पालयिता चाहं सात्विकङ्गुणमास्थितः ॥
रुद्रोभूत्वा संहरामि तामसोन्ते चराचरम् २०
सदाशिवाहन्देवेशाअनुग्रहकरोस्म्यहम ॥
मन्मायामोहितान्सर्वान्करोमीश्वररूपधृक् २१
पंचकृत्यपरश्चाहं पंचकोशातिगोस्म्यहम ॥
पंचप्राणाविहीनोहं पंचभूतैकवर्जितः २२

इयन्मे ह्यपरा शक्तिर्विक्षेपावरणात्मिका ॥
यया संमोहितायूयं जगत्सासुरमानुषम् २३
स्थास्नुर्गच्छत्सुरेन्द्राश्च पराशक्तिरियं मम ॥
सृष्टौ स्थितौ तथा नाशे कारणन्त्वियमेव हि ॥२४ ॥
ममैव शक्तिः परमा विचित्रज्ञानदायिनो ॥
मत्प्रसादादावरणशक्तिनाशः प्रजायते ॥२५ ॥
यावत्कर्मविपाकोहि देहिनां भवतां सुराः॥
विक्षेपाय च सा शक्तिरनुवर्तेति सत्तमाः ॥ २६ ॥
ममैवांशोजीवएव स्वाज्ञानात्परिजृम्भते ॥
नानायोनिशरीरेषु अशीर्णोदुःखभागभुक् ॥ २७ ॥
एवं द्विधा देहगेहवृक्षे पक्षिवदास्थितौ ॥

एकः कर्मात्मकं भुक्ते फलं वै सुखदुःखयोः २८
तथान्यः साक्षिवद्भाति द्वासुपर्णेति मन्त्रतः ।
ब्रह्मैव संसरत्येषस्वाविद्यातोदिवौकसः ॥ २९ ॥
स्वविद्यया मुच्यते च तपसा केवलेन हि ॥
अहं भावतयापन्नफलभुक् सुखदुःखयोः ॥ ३० ॥
स्वर्गे च नरके चैव सदा वै संप्रवर्तते॥
मत्ज्ञानान्मुक्तिमाप्नोति नान्यथा कर्मकोटिभिः ३१
जीवार्पितं मयि तथा न जीवमपि हे सुराः ॥
षड्डूर्मिरहितश्चाहं सर्वे देवाः सत्तमाः ॥ ३२ ॥
षट्कौशिकमिदन्देहं प्रविश्याखिलभासकः ॥
षट्वर्गैरिन्द्रियोत्थैश्च कारयामि चराचरम् ॥ ३३ ॥

सत्यकामः सत्यसंकल्पः सर्वलोकान्सृजाम्यहम् ॥
मङ्कल्पात्पितरोदेवाउपतिष्ठन्ति मामिह ॥ ३४ ॥
न मे शोकोस्ति मोहोस्ति जिघृक्षा च पिपासिका ॥
अशरीरः शरीरेषु अनवस्थेष्ववास्थितः ॥ ३५ ॥
महांश्चाहं विभुश्चाहमात्माशीर्णोहमेव हि ॥
अवस्थात्रयदूरोहमसङ्गः पुरुषस्त्वहम् ॥ ३६ ॥
सर्वाकारः सर्वभासः सर्ववासोहमीश्वरः ॥
योमां वेद सवेदर्दं योमामज्ञानमोहितः ॥ ३७ ॥
परदारा परोवेद्योज्ञात्वा देवं विभेति न ॥
शान्तिं पराङ्गच्छति च न कामी भवति स्थिरः ॥३८॥
ब्रह्म मां वेद स ब्रह्म स्थावरं हि सुरासुराः ॥
अस्ति ब्रह्मेति मां वेद तस्याहं मोचकोस्मि च ॥३९॥
नान्तः प्रज्ञश्च न वहिः प्रज्ञानं ब्रह्मचाप्यहम् ॥
अन्तर्यामी सदैवास्मि अमृत्युर्मृत्युरूपतः ॥ ४० ॥
अहमेव सदा ब्रह्म साक्षिसाक्ष्यादिवर्जितः ॥
अयमात्मासदानन्दोदेशकालैर्मतोप्यहम् ॥ ४१ ॥
तत्वमेतत्सर्वमसीत्यादिवाक्यैकरूपतः ॥
अहं वाक्येषु सर्वेषु अहमेवास्मि भासकः ॥ ४२ ॥
आनन्दं परमं ज्ञात्वा तरत्येव भवार्णवम् ॥
उपास्यं मामभिज्ञात्वा शोकमोहौ जहाति च ॥४३॥
यूयं मां नैव जानीथ अन्यत्सर्वं मृषैव हि ॥
सत्यं ज्ञानमनन्तोहं मत्सत्यात्सत्यतां जगत् ॥ ४४ ॥

मम सत्यतयैवेदं चेतते विविधं जगत् ॥
महानदांबुधेः सर्वं शीकरं जगदेव हि ॥ ४५ ॥
रसोऽहं सर्वभूतेषु रसतां जानते तु ये ॥
आनन्दमात्रा यास्ते मे जीवन्त्येव सुराः सदा ॥ ४६ ॥

कोवान्यः प्राणिति सदा मदाकाशं विना सुराः ॥
न तत्र गच्छति मनोन वा गच्छति चेन्द्रियम् ॥४७ ॥
परमात्माहमेवाद्य सएवाद्यः स उत्तमः ॥
असङ्गस्स्वरसस्पर्शअघ्राणोगन्धएव हि ॥ ४८ ॥

अपाणिपादकायादिः पायूपस्थादिवर्जितः ॥
प्रमाप्रमेयरहितस्तर्कदूरोऽहमेव हि ॥ ४९ ॥
अहं जानामि सर्वं हि न मां जानाति कश्चन ॥
परांचिखानि व्यतृणत्तस्मान्मां च न पश्यति ॥ ५० ॥

मत्प्रसादयुतः कश्चित् जानात्येव हि वा नवा ॥
दृष्टाहन्दृश्यरहितोदर्शनं चाहमेव हि ॥ ५१ ॥
षोडशोऽहं सुरश्रेष्ठा श्रोताघ्राताहमेव हि ॥
बुद्धिर्बोद्धा मनश्चापि प्राणप्राणोऽहमीश्वरः ॥ ५२ ॥

सर्वाएव कलादेहइन्द्रियाण्यहमेव हि ॥
सर्वामय्येव लीयन्ते नाहन्तेषु व्यवस्थितः ॥ ५३ ॥
एकएवाहमद्वैतश्चतुर्थं शिवएव हि ॥
भूमाऽहम्परमानन्दोमां न जानाति कश्चन ॥ ॥ ५४ ॥

एकोहं भुवने जडाजडगतिस्वैरं हि नानाजगत्
नास्त्येव प्रतिभाति किंचिदपि वै तन्मार्गतृष्णोपमम्"
तेनाद्रीन भवेत्क्षमासुरगणानास्त्येव किंचिज्जगत्
सर्वं शंभुतया विभाति सकलङ्कस्यखिदतत्सुराः ५९

इति श्रीशिवरहस्ये प्रथमांशे श्रुतिसार-
निरूपणं नाम एकपंचाशत्तमो-
ध्यायः ॥ ५१ ॥

---

॥ ईश्वरउवाच ॥

सोहं नित्योऽप्यनित्यश्च ब्रह्मब्रह्माहमेव हि ॥
प्राक् चाहं चैव पश्चाच्च दक्षिणोदक् च एव हि ॥ १ ॥
अधश्चोर्ध्वमहर्लोकोदिशश्च विदिशोऽप्यहम् ॥
पुमान्नपुंसकश्चाहं स्त्री चाहं सर्वदेवताः ॥ २ ॥
नैव स्त्री न पुमांश्चाहं नैव षण्ढः सनातनः ॥
अशरीरः शरीरेषु अशीर्णः शीर्णकेष्वहम् ॥ ३ ॥
ज्योतिषामहमेवास्मि आत्मज्योतिः सदाव्ययः ॥
अनिलानलसूर्येन्दुभूतानामान्तरोस्म्यहम् ॥ ४ ॥

मां न जानन्ति भूतानि भूतादिश्चाहमेव हि ॥
छन्दसामहमेवादिर्गार्हपत्योहमेव हि ॥ ५ ॥
दाक्षिणाहवनीयोहं सत्योहमग्निरहं सुराः ॥
गौर्यहं च वरिष्ठोहं कनिष्ठोहं सनातनः ॥ ६ ॥
ऋग्यजुः सामाथर्वाणि मन्त्रिरोहि सुरेश्वराः ॥
अक्षरोहं क्षरोहं च गुह्योहं पुष्करन्तथा ॥ ७ ॥
अणोरणीयोस्मि सुरामहतोहं महांस्तथा ॥
विश्वतश्चक्षुरेवाहं विश्वतोबाहुरीश्वरः ॥ ८ ॥
विश्वमौलिर्विश्वपादः सहस्राक्षः सहस्रपात् ॥
दशांगुलमिदं सर्वमत्यतिष्ठामि भो सुराः ॥ ९ ॥
अमृतस्याहमीशानः सर्वेषु पुरषोन्तरः ॥
अपादशीर्षपर्यन्तं सर्वेषां संस्थितोस्म्यहम् ॥ १० ॥

एषोन्तरोहं पुरुषोहिरण्यश्मश्रुरेव हि ॥
मनसोहं जवीयांश्च ममावास्यमिदं जगत् ॥ ११ ॥
मय्येव लीयते सर्वं मत्तोन्यन्नास्ति किंचन ॥
अप्राणोह्यमनाः शुभ्रनिर्गताक्षोहमेव हि ॥ १२ ॥
न प्राज्ञोहं न चाप्राज्ञोनोभयप्रज्ञएव हि ॥
अहं भूतेषु सुप्तेषु जागर्मि सततं सुराः ॥ १३ ॥
अहमव्यक्तएवेशोव्यक्तो भूतहृदि स्थितः ॥
स्थाणुर्निर्गुणएवास्मि कार्यकारणवर्जितः ॥ १४ ॥
क्षराक्षरादिरहितः परमात्माहमेव हि ॥
अहं च न दिवा रात्रिर्न सन्नासन्सदाशिवः ॥ १५ ॥

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ॥
तदामान्तु न विज्ञाय दुःखस्यान्तोभविष्यति ॥ १६ ॥
वेदैः सर्वैश्च वेद्योहं वेदान्तेष्वहमास्थितः ॥
स्वे महिम्न्यहमेवैकअहमौपनिषत्परः ॥ १७ ॥
वेदादिस्वरएवाहं प्रणवोहं सनातनः ॥
प्रणवादिस्त्रिमात्रोहं सर्वमन्त्रात्मकस्त्वहम् ॥ १८ ॥
पंचाक्षरपरश्चाहं पंचपातकवर्जितः ॥
ससङ्गेनैव मे सङ्गअहं भुवनमेव हि ॥ १९ ॥
विश्वातीतोविश्वधामाविश्वाधिकउमापतिः ॥
भवन्तः पशवः सर्वे भवताम्पतिरस्म्यहम् ॥ २० ॥
मत्प्रसादाद्भवन्तोहि मुक्तये यततानुना ॥
मज्ज्ञानं वेदवाक्योत्थमन्याच्छिल्पं सुरोत्तमाः२१
ब्रह्मैवाहं संसरामि अविद्यावशगः सुराः ॥
निर्मुक्तोमोचयाम्येव सर्वं सासुरमानुषम् ॥ २२ ॥
श्रवणैर्नापि लभ्योहङ्कर्मभिर्न सुरासुराः ॥
शृण्वन्तोपि यतिश्रेष्ठा न मां विन्दन्ति केचन ॥२३॥
अतोन्यदार्तं विबुधाः सर्वं जगदिदं ध्रुवम् ॥
कथं भवन्तोमन्यन्ते तद्ब्रुवन्तु ममाग्रतः ॥ २४ ॥
विभूतीर्मे मया प्रोक्ता श्रत्थया वेद नान्यथा ॥
नोविश्वस्तचेतसे देयं ज्ञानं वेदान्तवाक्यजम् ॥२५॥
दत्वा नरकमाप्नोति सह पूर्वपितामहैः ॥
सर्वोपनिषदां सारं मयैतत्समुदाहृतम् ॥ २६ ॥

भवद्भ्यः सम्यगधुना हृदयग्रन्थिभेदनम् ॥
नाशिष्यायाप्यभक्ताय नापुत्रायेदमेव हि ॥ २७ ॥
दद्यादेतच्छाम्भवेभ्योयतिभ्यः सुरसत्तमाः ॥
देयमेतत्सुरश्रेष्ठास्तस्य मुक्तिरयत्नतः ॥२८ ॥
मत्प्रसादेन सर्वेषां मुक्तयः स्युः करे स्थिताः ॥
शिवव्रतानां चरितन्देयन्तेषामिदं सुराः ॥ २९ ॥
शिवव्रतमिदं देवाः पुराचीर्णं मयैव हि ॥
अग्निरित्यादिभिर्भस्म गृहीत्वाङ्गानि संस्पृशेत् ॥३०॥
व्रतमेतदिदन्देवाः पशुपाशविमोक्षणम् ॥
श्रद्धया तपसा देवामम लिङ्गार्चनेन हि ॥ ३१॥
भस्मत्रिपुण्ड्रचिन्हे ( ऽ्के ) श्च पापहीनोभवेन्नरः॥
पंचाक्षरावर्तनैश्च पंचपापप्रणाशनम् ॥ ३२ ॥
रुद्राध्यायजपैश्चैव बिल्वमूले विशेषतः ॥
मम क्षेत्रेषु नियतं वासाच्च सुरसत्तमाः ॥ ३३॥
अविमुक्तनिवासाच्च तत्रैवान्ते तनुक्षयात् ॥
उमासहायमन्मूर्तिध्यानेनैव सुरास्तथा ॥ ३४ ॥
एतदेव परं ज्ञानं लभ्यते मत्प्रसादतः ॥
नान्यथा लभ्यते ज्ञानङ्कर्मोपासनया सुराः ॥ ३५ ॥
इदमखिलरहस्यं वेदजालोत्थसारम्
कथितमिदमशेषाज्ञाननाशैकहेतु ॥
हृदि निहितमपीदं भेदनं ज्ञानमाद्यम्
जगति नहि विधेयं मुढमर्त्येषु देवाः ॥ ३६ ॥

भवशतजनिनाशं मोक्षमार्गप्रदीपं
मयि दुरितशतोत्थैः पापतापैर्विहीनम् ॥
मम हि वरपूजाध्यानतः प्राप्यमेवं
गुरुवदनजबोधैर्वेदवाक्यैर्दुरापम् ॥ ३७ ॥
किं वीर्यं भवतां सुराहरिहरौ पद्मासनः सेन्द्रकाः
सूर्येन्दू ह्यनिलानलाश्च मरुतोविश्वाश्विनौ ब्रूतच ॥
वस्वादित्यगणार्भूमरुगणायूयं कुबेरादय -
स्त्वत्पद्यामिवलाबलं मम पुरः सन्दर्शयन्त्वादरात् ३८

॥ स्कन्दउवाच ॥

इत्युक्तं त्रिदशेश्वराहरिमुखाः श्रुत्वा वचः शाङ्करं
देवाग्रे महिमानमुत्तममहो प्राकट्यमीप्सीकृताः ॥
गर्वोरीकृतमानसाः सुरगणाः प्रोचुर्हि नत्वा शिवम्
स्वं स्वं कार्यमथाधिपत्यजनकं शृण्वन्तु तद्वाक्यजम् ३९

॥ब्रह्मोवाच॥

सृजामि विविधं जगत्सुरनरादिगन्धर्वकं
समुद्रगिरिगह्वरं नदनदीवनं चाप्यहम् ॥
न मत्समसुरौघकं प्रति वदामि शंभो तव
प्रसादसुमुखान्मुखाद्विदितवेदजालोस्म्यहम् ॥ ४० ॥

॥विष्णुरुवाच॥

अहं हि दैत्यप्रवराननेकान्
निकृत्य चक्रेण विदारितौजसः ॥
चराचरं विश्वमिदं हि पालये
न मत्समः कश्चिदिति प्रभो मनः ॥ ४१ ॥

॥ रुद्रउवाच ॥

मच्छूलमूलवरकोटिविलग्नधारा-
च्छिन्नन्तथान्ते प्रलयाय कल्पने ॥
चराचरं विश्वमिदं ममास्ये
फलालिवत्सर्वयामीदमिष्टम् ॥ ४२ ॥

॥ इन्द्रउवाच ॥

त्रिविष्टपपदे स्थितोमदकरीन्द्रकुंभस्थितः
सुरेन्द्रवलयावृतः प्रकटरत्नमौलिस्फुरः ॥
प्रसादतलपङ्कजः कुलिशपाणिरिन्द्रोस्म्यहम्
सुवृत्रमरुजंभकप्रमुखवैरिनिर्णाशनः ॥ ४३ ॥

॥ वायुरुवाच ॥

ममानिलबलाद्बलानदनदीनगाः कामगा
विलोलतरमर्णवाः प्रति भवन्ति लोकाखिलाः ॥
महाद्रुमकुलावलिप्रपतनोरुवीर्यः सदा
सदैव मरुतां वरोनरखगादिदेहस्थितः ॥ ४४ ॥

॥ सूर्यउवाच ॥

प्रचण्डकरमण्डलोमम मयूखजालैर्जगत्
पयोधरपयःकणैरतिसुवातवृष्ट्युत्थितैः ॥
दिनोदयदिनान्तिमे प्रथितबीजधान्यादिभि-
र्जगन्त्यथ पुपामि वै सकलरचिरादेः पथः॥ ४५ ॥

॥ अग्निरुवाच ॥

शिखाशतविदीपितः सुरगणेषु तृप्तिप्रदो
मुखादिषु सुसंस्थितः पितृगणेषु कव्यप्रदः ॥
महार्णवमुखे स्थितो मम शिखासु पक्वं रसं
पवित्रितजगत्त्रयस्तव च फालनेत्रेस्म्यहम् ॥ १६ ॥

॥ यमउवाच ॥

यमोयमवतामहं नरकवर्गगर्वापहः
प्रचण्डतरदण्डधृक् समदृगस्मि सर्वत्र वै ॥
ममोत्तमभटारवैर्जगति जागताः पातका
न सन्ति भयभीतितस्तव शिवांघ्रिदत्तेक्षणः ॥ १७ ॥

॥ कुबेरउवाच ॥

धनैश्च धनवर्जितान्परिपुपामि त्वत्प्रेरित-
स्तवाज्ञपदमित्त्रतामुपगतोस्मि यक्षाधिपः ॥
समुच्य कृतवर्णकप्रथितगीतकाप्ताधिपः
किमुत्तरमिदं मम प्रवणमेतदेवं मनः ॥ १८

॥ चन्द्रउवाच ॥

सोमोहं सरसीरुहालिमलिनीमुत्फुल्लनेमित्रक-
स्त्वन्मौलिस्फुरदंबरे मधुरिमाकांतिर्जटाजूटगः
पुण्णाम्योषधिजालमीश्वरतवाद्याहं प्रव।शा।प्पदो
नेत्रन्तेय चवायमिश्वरदयापात्रं प्रशाध्यय माम् १९॥

॥ वरुणउवाच ॥

अपां पतिनदीनदप्रवरनीरपाराब्धिगः
समुल्लसितकेतनः स्फुरदपारगङ्गापतिः ॥
अपुण्यजनपाशकृद्वरुणवैश्च संसेवितः
तव प्रपदपूजकोभव हरेस्तदेवास्तु मे ॥ ५० ॥

॥सर्वे देवाऊचुः॥

विश्वेश्विनौ मरुतः सर्वएव
वयं सहेन्द्रेण पिवाम सोमम् ॥
तवाज्ञया जगतां पालने च
रतावयं भो प्रमथाधिनाथ ॥ ५१ ॥

॥ सूतउवाच ॥

इति सुरवचनं निशम्य शंभुः
प्रणतान्सकलानुवाच देवान् ॥
तदभिनवजातवाक्यहर्षः
प्रसमीक्ष्यैव वचोप्युदाररूपम् ॥ ५२ ॥

॥ईश्वरउवाच॥

एतन्मे तृणकाकृतिश्च पुरुषः सङ्कल्पजोनिर्मित-
स्तास्मिन्वामहिमारसं सुरवराः संचोदयन्तु द्रुतम् ॥
तत्पश्यामि भवत्प्रतापमखिलं देवास्त्वरन्तु द्रुतम्
इत्युक्त्वा जगदीश्वरोथ उमया शीघ्रान्तिरोधत्तवै ॥५३॥

विष्णुब्रह्महरामरेश्वरयमावाय्वग्नयः सूर्यका-
श्चन्द्रेशानवसुर्वरुणकाविश्वेशादिकूपालकाः ॥
तस्मिन्तार्णनरे स्वकायुधवरैः शक्तीभिरीशास्तदा
नो किंचित्प्रविचालितुन्त्वथ भवन्नीशाअनीशास्तदा ५४
देव्या चापि समन्विताः गणगणैरुद्दण्डभक्तप्रभाः
आनम्रोत्तमशेखराः सुरगणा भक्त्या प्रपन्नाहरम् ॥
सम्यक् तुष्टुवुरब्धिजाततनयानाथादयः सर्वशो
विश्वेशं भुवनेश्वरान्त्रिभुवनाराध्यं महेशं शिवम् ॥५५॥
स्प्रष्टुं पातुमथाशुमप्यतिबलाद्दग्धुं च संशोषितुं
वोढुं चालयितुं च दण्डमखिलं संप्लावितुं वा जले ॥
भाग्यैः पूरयितुं च सोमजकरैर्नेशास्ततस्ते सुरा
लज्जानम्रमुखा महेशचरणं भक्त्या प्रपन्नास्तदा ॥५६॥

इति श्रीशिवरहस्ये प्रथमांशे देवानां
बोधनन्नाम द्विपंचाशत्तमो-
ध्यायः ॥ ५२ ॥

---

॥ जैगीषव्यउवाच ॥
अत्यद्भुतकथा श्राविः चरितं शंकरस्य च॥
तिरोधानङ्गते देवे किं चक्रुः सुरसत्तमाः ॥ १॥
शिखिध्वज नमस्तेस्तु तन्मे विस्तरतोवद ॥
नाहं तृप्यामि त्वद्वक्त्रसुधानिष्यन्दधारया ॥ २ ॥

पुनः पुनश्च श्रवणे भूयसीच्छा प्रवर्तते ॥

॥ सूतउवाच ॥

इत्येतद्वचनं श्रुत्वा शांभवस्य सषण्मुखः ॥ ३ ॥
शृण्वताङ्गणवृन्दानां देवानान्तं मुनीश्वरम् ॥
संबोध्य प्राह तान् विप्रान्देवस्य चरितन्तदा ॥ ४ ॥

॥ कुमारउवाच ॥

शृणुष्व चरितोदारं परमं धूर्जटेर्मुने ॥
ततस्ते ब्रह्मविष्ण्वाद्याः सेन्द्राः सर्वे मरुद्गणाः ॥ ५ ॥
सूर्यचन्द्राः सवरुणाः करुणासारविग्रहाम् ॥
तुष्टुवुर्जगतामंबामुमां शोभितभूषणाम् ॥ ६ ॥
कृतांजलिपुटाः सर्वे ध्यायन्तस्ते शिवान्तदा ॥ ७॥

॥ देवाऊचुः ॥

अयि गिरिनन्दिनि नन्दितमोदिनि विश्वविनोदि-
नि नन्दिसुते ॥ गिरिवरविन्ध्यशिरोधिनिवासिनि शं-
भुविलासिनि विष्णुनुते ॥ जय जय हे महिषासुरम-
र्दिनि रम्यकपर्दिनि शैलसुते ॥ ८ ॥
भगवति हे शितिकण्ठकुटुंबिनि भूतिकृते ॥ अयि
निजहुंकृतिमात्रनिराकृतधूम्रविलोचनधूलिकृते ॥ जय
जय हे० ॥ ९ ॥
समरविशोषितशोणितबीजतले श्रीयुतशुंभनिशुंभम-
हाहवतर्पितभूतपिशाचतते ॥ जय जय हे० ॥१०॥

अयि जगदंबकदंबवनप्रियवासनिवासिनि सोधरते॥ शिखरिशिरोमणितुङ्गहिमालयसौधनिजालयमध्यग - ते ॥ मधुमधुरे मधुकैटभतर्जनजातससंभ्रमब्रह्मनुते ॥ जय जय हे० ॥ ११ ॥

सुरघनघोषिणि दुर्धरधर्षिणि घोषरते ॥ त्रिभुवनपोषि- णि शंकरतोषिणि कल्मषदूषिणि घोररते ॥ तनुजवि- शोषिणि दुर्मदरोषिणि सन्मुखपोषिणि सिंहगते ॥ जय जय हे०॥ १२॥

धनुरनुषंगमनुक्षणसङ्गपरिस्फुटवंकिनटत्कटके ॥ कन- कपिशङ्गनिषङ्गपृषत्करणं भटसंयहतासुरसंघरवच्चतुर- ङ्गबलक्षितिरङ्गघटद्रणरमत्पटके॥जयजय हे०॥१३ ॥

अयि शिखण्डविखण्डिततुण्डवितण्डितशुण्डगजाधक्र- ते ॥ रिपुगजगण्डगतोदरभण्डविदारणचण्डपराक्रम- शौर्यमृगाधिपते ॥ जय जय हे० ॥ १४ ॥

जय जय देवि नगराजकुलोत्तारिणि कचकुचगमन- जघनवदनकण्ठोदरकटितटोरूद्वयकरबाहुभूषणविराजि- ते ॥ सजलजदलनगमतङ्गपुलिनेंदुशंखकरतलासिंह- रंभारक्ततीरजमृणालनिभे ॥ तारामलमौक्तिकसरकी- लितकन्धरे बिंबाधरे मध्याष्टमीचन्द्रमसमानालिके ॥ तपनोडुपमण्डलायिततालाटङ्के ॥ उद्यत्कविमण्डलानि- भनासामुक्तामणिद्योतिते ॥ सर्वाभरणभूषिते ॥ त्व- न्मायामोहितान् रक्ष रक्ष ॥ १५ ॥

इति संस्तुत्य ते सर्वे प्रणम्य भुवि दण्डवत् ॥
वद्धांजलिकरामौलौ तदाचुस्ते सुरास्तदा ॥ १६ ॥

॥ देवाऊचुः ॥

त्वया संमोहिताः सर्वे न जानीमोमहेश्वरम् ॥
सर्वदेवसमं ज्ञात्वा कारणानां च कारणम ॥ १७ ॥
यतिं यमवतान्देवमीशानं चेतनं चितः ॥
यस्यैव विरहात्सर्वं तृणमेतत्पुरोगतम् ॥ १८ ॥
जगत्सृष्टयादिकार्येषु फल्गुन्यपि महेश्वरि ॥
किंचित्कर्तुमनीशाहि त्वां प्रपन्नाः सदाम्बिके ॥१९॥
नमस्तेस्तु जगन्मातः प्रसन्नाभवनः सदा ॥
त्वया कृतामिदं सर्वन्त्वया संपाल्यते जगत् ॥ २० ॥
त्वय्येवान्ते लयं याति सदेवासुरमानुषम् ॥
त्वं शक्तिः परमा देवी महेशार्धाङ्गभागिनी ॥ २१॥
त्वत्प्रसादेन सर्वेषां मोहनाशोभवेच्छिवे ॥
सर्वत्र गूढा शक्तिस्त्वं मायावी स महेश्वरः ॥ २२ ॥
त्वांप्रपन्नावयं सर्वे मोहितास्तव मायया ॥
इत्युक्त्वा ब्रह्मविष्ण्वाद्याः प्रणताभुवि दण्डवत् ॥२३ ॥
अथोत्थाय नभोमध्ये ददृशुः सर्वएव ते ॥
नीलतोयदमध्यस्थविद्युल्लेखेव भासुराम् ॥ २४ ॥
निष्टसकनकाभासां सर्वाभरणभूषिताम् ॥
बालेन्दुवत्धमुकुटां सोमधामसमाननाम् ॥ २५ ॥
नीलेन्दीवरनेत्रान्तां पवित्राकृतिसुन्दराम् ॥
दृष्ट्वा पुनः प्रणम्येशीं रक्ष रक्षेति चाब्रुवन् ॥ २६ ॥

देवानां वचनं श्रुत्वा उमोवाच सुरांस्तदा ॥
प्रगल्भधीरमधुरं देवाज्ञानविनाशनम् ॥ २७ ॥

॥ देव्युवाच ॥

एषब्रह्मा यमात्मा प्रणवपदगतोमानमात्रादिहीनो
निर्मायोनिर्गुणत्वाच्छशिनइव कला शक्तिरस्मीह देवाः
सर्वेशः शक्तिमांश्च प्रकृतिपरवशोविश्वमेतद्विचित्रम्
विश्वोद्भूता भवन्तस्सकलभवहरन्तं भजध्वं महेशम् २८
यतोवै हरिब्रह्मरुद्रेन्द्रपूर्वं
प्रजातास्थयस्मिन्स्थिताएव नूनम् ॥
भवद्भिस्ततं लोकजालङ्क्लिलेदम्
प्रपश्यध्वमीशं भजध्वं महेशम् ॥ २९ ॥
शक्तिस्त्वहं यस्य जगत्समग्रं
करोमि लीलामिपतोभवद्भिः ॥
भवप्रसादेन भवैकमोचनं
ममैव शक्तिं शरणं प्रयात ॥ ३० ॥
न तस्य कार्यङ्करणं शिवस्य
सनातनोनित्यशुद्धः पुराणः ॥
यन्मायया मोहितास्थप्रजेशा-
स्तस्यैवेताद्विरहात्सर्वमेव ॥ ३१ ॥
व्यर्थीभूतास्तार्णके मानवेस्मिन्
संमान्य नेष्टङ्गगनान्तरस्थम् ॥
सर्वेन्द्रियाणि प्रचलन्ति तस्य
शक्त्या तथा चोपरतं भजध्वम् ॥ ३२ ॥

योवै रुद्रः स भगवान् यश्च वायुस्तस्मै वै नमोनमः ॥
योवै रुद्रः स भगवान् यश्च वरुणस्तस्मै वै नमोनमः॥ ५ ॥
योवै रुद्रः स भगवान् यश्च रसस्तस्मै व नमोनमः ॥
योवै रुद्रः स भगवान् यश्च निर्ऋतिस्तस्मै वै नमोनमः ॥ ६ ॥
योवै रुद्रः स भगवान् यश्चेशानस्तस्मै वै नमोनमः ॥
योवै रुद्रः स भगवान् यश्च कुवेरस्तस्मै वै नमोनमः ॥ ७ ॥
योवै रुद्रः स भगवान् यश्च सूर्यस्तस्मै वै नमोनमः ॥
योवै रुद्रः स भगवान् यानि च नक्षत्राणितस्मै वै नमोनमः ८
योवै रुद्रः स भगवान् ये चाष्टौ ग्रहास्तस्मै वै नमोनमः ॥
योवै रुद्रः स भगवान् ये च ऋषयस्तस्मै वै नमोनमः ॥ ९ ॥
योवै रुद्रः स भगवान् ये चाष्टौ वसवस्तस्मै वै नमोनमः ॥
योवै रुद्रः स भगवान् द्वादशादित्यास्तस्मै वै नमोनमः १०
योवै रुद्रः स भगवान् यएकादशरुद्रास्तस्मै वै नमोनमः ॥
योवै रुद्रः स भगवान् या च पृथिवीतस्मै वै नमोनमः ॥ ११
योवै रुद्रः स भगवान् यश्चापस्तस्मै वै नमोनमः ॥
योवै रुद्रः स भगवान् यश्च तेजस्तस्मै वै नमोनमः ॥ १२॥
योवै रुद्रः स भगवान् यश्च वायुस्तस्मै वै नमोनमः ॥
योवै रुद्रः स भगवान् यश्चाकाशन्तस्मै वै नमोनमः ॥१३॥
योवै रुद्रः स भगवान् या च भूस्तस्मै वै नमोनमः ॥
योवै रुद्रः स भगवान् यश्च भुवस्तस्मै वै नमोनमः ॥ १४ ॥
योवै रुद्रः स भगवान् यश्च सुवस्तस्मै व नमोनमः ॥
योवै रुद्रः स भगवान् यश्च महस्तस्मै वै नमोनमः ॥ १५ ॥

योवै रुद्रः स भगवान् यश्च जनस्तस्मै वै नमोनमः ॥
योवै रुद्रः स भगवान् यश्च तपस्तस्मै वै नमोनमः ॥ १६ ॥
योवै रुद्रः स भगवान् यच्च सत्यन्तस्मै वै नमोनमः ॥
योवै रुद्रः स भगवान् ये च प्राणास्तस्मै वै नमोनमः ॥ १७ ॥

योवै रुद्रः स भगवान् यानि च सर्वेन्द्रियाणितस्मै वैनमोनमः
योवै रुद्रः स भगवान् यश्च कालस्तस्मै वै नमोनमः ॥ १८ ।
योवै रुद्रः स भगवान् यश्च मृत्युस्तस्मै वै नमोनमः ॥
योवै रुद्रःसभगवान्यच्चभूतंभव्यभविष्यत्तस्मैवैनमोनमः १९

ॐमागवन्ते भूर्भुवस्वस्त्रिरोंकलिस्तस्मै वै नमोनमः २०
ब्रह्मैकस्त्वं त्रियोर्ध्वस्त्वं गतिः पुष्टिर्महेश्वरः ॥
विश्वं च विश्वातिगस्त्वं हुतं प्रहुतमेव च ॥ २१ ॥
कृतं चाकृतमेव त्वं परम च परायणम् ॥
नारायणादिजनकअर्यम्णोवरुणस्य च ॥ २२ ॥

जनिता त्वन्तथा वायोर्द्यावाभूम्योर्महेश्वर ॥
सर्वेशः सर्वसाक्षी च सर्वएव त्वमेव हि ॥ २३ ॥
अग्राह्यः सर्वभूतेषु सर्वेन्द्रियगुणातिगः ॥
अलिङ्गोऽप्यशरीरस्त्वं व्यापकश्च सनातनः ॥ २४ ॥
यामनन्त्वा महादेव सर्वे देवाउपासते ॥
त्वत्तो जातं जगच्छंभो स्थितं त्वय्येव लीयते ॥ २५ ॥
त्वत्तो नास्ति पृथक् किंचिन्नभिन्नं परमार्थतः ॥ २६ ॥

अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः जनयन्तीं सरूपाः ॥
अजो ह्येको जुषमाणोनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः ॥ २७ ॥
मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् ॥
तवावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ २८ ॥
नेह नानास्ति किंचिद्वै त्वदधिष्ठितमेव हि ॥
त्वामविज्ञाय दुर्मेधाः कृतकृत्याभिमन्यते ॥ २९ ॥
न सापरायं प्रविदाम बाला
मूढा वयं केवलं त्वद्विहीनाः ॥
किंचित्तृणं चालयितुं च नेशा-
स्त्वन्नोगतिः परमा चास्ति शंभो ॥ ३० ॥
त्वयावृतं लोकमिदं समग्रं
कोपि दीनं कथयेत्त्वद्विहीनः ॥
एको रुद्रस्त्वं हि सर्वस्य कर्ता
विश्वालिंगः परमश्वेतकोसि ॥ ३१ ॥
सर्वभूतातिगश्चात्मा कोशातीतः परात्परः ॥
महाग्रासस्त्वमेवेशो मृत्युस्त्वदुपसेचनः ॥ ३२ ॥
ओदनन्तव भूतेश ब्रह्मक्षत्रं जगत्तथा ॥
ब्रह्मपुच्छं प्रतिष्ठा त्वं शान्तिरक्षरमेव च ॥ ३३ ॥
हृदिस्था देवताः सर्वे हृदि प्राणः प्रतिष्ठितः ॥
हृदय पुरुषे ति त्वं तिस्रो मात्रा परश्च सः ॥ ३४ ॥

ॐकारः प्रणवोव्यापि अनन्तोनन्तविक्रमः ॥
तारः सूक्ष्मोवैद्युतश्च शुक्लः सर्वशरीरगः ॥ ३५ ॥
ईशानोभगवान् रुद्रोमहादेवस्त्वमीश्वरः ॥
परं ब्रह्म परन्धाम परः पारः परायणः ॥ ३६ ॥
शूरोवीरः पुरुषोभूतसंस्थो
विश्वोविश्वेशः प्राणदश्चाऽव्ययात्मा ॥
चक्षुःश्रोत्रे रसना नासिकात्वक्
मनोवोद्धा बुद्धिरीश त्वमेव ॥ ३७ ॥
पतिः पतीनां पशवोवयं च
अस्मानहो पासि तथाखिदेवम् ॥
त्वदुद्भवं सर्वमीश त्वमेको
नानेव भासि पुरुषस्य मायया ॥ ३८ ॥
तिलेषु तैलन्दधनीव सर्पि
रापस्तरूत्थास्त्वरणीषु वन्हिः ॥
एवं प्रोतन्त्वय्यद्वितीये महेशे
त्वज्ञं लीनन्त्वयनं चैतदेव ॥ ३९ ॥
न विद्यते गुणकर्मादिनाम
रूपादिशक्ज्ञानशक्त्याविभिन्नः ॥
हृदयस्त्वं भूतभव्यः पुराण
एकोवीरो वेदगणैकवेद्यः ॥ ४० ॥
ओङ्कारादिस्वरूपोमहेशो
विधामास्त्वं वरणीयस्तथाणुः ॥
महान् जेता जिष्णुश्चापराजितः
अभ्रावकाशः खं च कं च त्वमेव ॥ ४१ ॥

विभ्राट् सम्राट् भूमधामा त्वमेव
पितासि माताभ्रातृकश्चादिवैद्यः ॥
रुजां हरस्त्वं भिषक् पापहीन
अपाणिपादोनिर्विकारस्त्वमात्मा ॥ ४२ ॥
स्वयं भानुः परएकोज्योतिरेव
त्वत्तोन ओजस्विष्ठतमोस्ति देवः ॥
त्वन्नोदिवा नैव रात्रिस्त्वमीश-
स्त्वं सोमा वै विश्वतश्चक्षुरीशः ॥ ४३ ॥
नवेदान्ता नापि वेदाश्च ते वै
तवाज्ञानं नाशयितुं समर्थाः ॥
आकाशपृथ्वीसलिलं च वायु-
स्तेजश्चासि प्रथितन्ते जगच्च ॥ ४४ ॥
विश्वस्य नेता विश्वभर्ता त्वमीशो
तव ज्ञानात्सर्वमेवेह विन्देत् ॥
तवाज्ञानान्मोहिताः सर्वएव
तव प्रसादादेवया बोधितास्म ॥ ४५ ॥
अवस्थातीतः पर आत्मा त्वमेव
ब्रह्मैव त्वं संसरस्यादिरूपः ॥
विशोकोविमृत्युरजिघित्सोपिपासः
शरीरहीनोस्यजरः पुराणः ॥ ४६ ॥
ऋतं सत्यं नैव रूपातिगस्त्वं
तवामेयरूपं कोहि वेदेदमेव ॥
ऋचोअक्षरे परमस्त्वं महेशो
नान्यस्त्वत्तोपद्रवेदेवमार्तम् ॥ ४७ ॥

नान्यदृक् त्वां पश्यति पश्यकस्त्वं
दृष्टेर्द्रष्टा वाच्यवाचादिहीनः ॥
विद्याधीश स्वर एको महेश
स्त्वमेवेकोवेदकोसीशि एव ॥ ४८ ॥
नमस्ते हर सेवतां शोचिषेते
नमस्ते अस्त्वर्चिषे देवदेव ॥
विश्वाधीशः शङ्करोवेदवेद्यः
अन्यास्तु ते शक्तयोघोररूपाः ॥ ४९ ॥
भक्तेषु नित्यं शिवरूपोभवत्वं
शत्रूनस्माकं जहि शूलेन शंभो ॥
यथेदं विश्वं भुवनं पासि जुव्हन्
सृष्टिं कुर्वन्नो मनःपद्मसंस्थः ॥ ५० ॥
त्वमाशिषन्द्रविणन्देहि शंभो
विश्वकर्मा मनसा संप्रदृश्यः ॥
धाता विधाता परमेष्ठ्यसित्व-
मिष्टानि तेषान्तव पादपूजया ॥
सर्वं लभेतैव न संशयोत्र ॥ ५१ ॥
त्वन्नो माता जनिता चोपनीता
भ्रातुर्बन्धुः परमोगुरुस्त्वम् ॥
त्वन्देवेषु प्रथितस्त्वेकएव
वेदे रुद्रस्त्वं मतोदेवपूर्वः ॥ ५२ ॥

विदन्ति च त्वां मनुजाश्चापि शंभो
ओतं प्रोतं जगदेकन्त्वया ततं ॥
यद्भूतजालं निखिलं वै विसृष्ट-
मेतादृशन्त्वां न विन्दन्ति केचित् ॥ ५३ ॥
दृष्टयान्तरेण परिपश्यन्ति मूढा
मायानीहारप्रावृताः शास्त्रजल्पाः ॥
अ न्नतृप्याभोगभाजोभुवः खे
यज्ञदानैः कामकामाश्च बालाः ॥ ५४ ॥
दिवः परः पृथिव्यास्त्वं परश्च
देवासुरास्त्वंपरामूढगर्भाः ॥
भूतानन्त्वं महिमा गर्भभूतः
कस्त्वां वेद सर्वभूतार्थहीनम् ॥ ५५ ॥
देवैर्विश्वं यत्र जातं च सर्वं
तथा लीनन्त्वयि विश्वं च सर्वम् ॥
आदावथान्ते जगदत्तद्विचित्रं
मध्येर्पितं भुवनं च त्वमेव ॥ ५६ ॥
त्वचोगन्धर्वाओषधीशोपि शंभो
सर्वेन्द्रियाणि मनसा नमामः ॥
हृदा पश्यन्ति सततं मनीषिणः
ते ब्रह्मनाड्या तव यान्ति सद्म ॥ ५७ ॥
त्वां हृद्गुहां गूढमनुप्रविष्टं
सदैव सन्तं न विजानन्ति देवाः ॥
विश्वस्यचक्षुर्विश्ववक्त्रोरुबाहु-
र्विशस्पतिस्त्वं भुवनस्य गोप्ता ॥ ५८ ॥

द्यावाभूमी त्वत्तएवोत्थृते स्तः
सूर्योभ्राजति खे सोमतारैर्ग्रहैश्च ॥
नान्ये जानन्ति तव भक्त्या विहीना
अजातन्त्वामीशं शरणं प्रपन्नाः ॥ ५९ ॥

॥ सूतउवाच ॥

इत्थं संस्तुत्य ते सर्वे दण्डवत्सुरसत्तमाः ॥
प्रणेमुः परमात्मानं ददृशुर्देवतागणाः ॥ ६० ॥
तेजोराशिं महादेवं गगनस्थं सनातनम् ॥ ६१ ॥
वडवानलवाडवेन्द्रमुख्यै-
र्वडवाजानिविडोजसार्चितांघ्रिम् ॥
वलिनन्दनपूज्यमानलिङ्गं
सतताच्यं च सुविल्वपल्लवैः ॥ ६२ ॥
बलप्रमथनं शिवं वलिवलारिवाणार्चितं
विलेशयफणामणिप्रवृतपाणिपद्मांघ्रिकम् ॥
बलोत्कटसुरासुरैर्नतमुवालचन्द्राङ्ककं
धृतावलवराङ्ककं हरिमुखाः समैक्षन्सुराः ॥ ६३ ॥

इति श्रीशिवरहस्ये प्रमांशे देवकृतोपनिषत्स्तुति-
र्नाम चतुःपंचाशत्तमोध्यायः ॥ ५४ ॥

## ॥ स्कन्दउवाच ॥

तदा देवामहादेवङ्गगनस्थं सनातनम् ॥
उमया वरदन्देवं मन्दास्मितमनोहरम् ॥ १ ॥
उत्फुल्लकुन्दविलसन्मालाशोभितकन्धरम् ॥
सुधांशूग्रांशुकीलाभिर्विकासितदिशां मुखम् ॥ २ ॥
कुन्दाच्छशारदाभ्राभसमकान्तिशरीरकम् ॥
त्रिनेत्रशोभिवक्त्रौघं नागकुण्डलमण्डितम् ॥ ३ ॥
कुण्डलीशफणाभ्राजत्कुण्डलाननमण्डितम् ॥
कपर्दतटवत्थेन्दुङ्गाङ्गाभावितमौलिकम् ॥ ४ ॥

शूलामललसद्बालमृगपाणिमनोहरम् ॥
आशावसं महात्मानं रत्नकङ्कणमण्डितम् ॥ ५ ॥
करटिल्वक्कटितटवत्थखड्गविराजितम् ॥
देव्या च संयुतं चारुवदनास्मितकान्तया ॥ ६ ॥
धम्मिल्लमल्लिकामोदपङ्कजोत्तमगन्धया ॥
सिन्दूरतिलकाशोभिभालयाच्छमणित्विषा ॥ ७ ॥
नानालंकारसंकृतत्तदङ्कशोभया ॥
कोटिकंदर्पदर्पघ्नः कोटिसूर्यशताधिकः ॥ ८ ॥
कोटिचन्द्राधिकतनुस्तनुहीनोपि शंकरः ॥
नन्दिना घनघोषेण युतएषोमहेश्वरः ॥ ९ ॥
गंभीरया मधुरया वाचासंल्हादयंस्तदा ॥
प्राह तान्प्रमथाधीशः सुराधीशान्सुरप्रियः ॥ १० ॥

भूतसंघन्तथैवान्ये ऋषयः परिमोहिताः ॥
एतस्याः शक्तिवैचित्र्यं जगदेतच्चराचरम् ॥ २२ ॥
एनां प्रणमत क्षिप्रमेतस्याः कृपयासुराः ॥
विक्षेपावरणाभ्यां च शक्तिभ्यामपवर्जिताः ॥ २३ ॥
तावदेव चिरन्देवायावद्विक्षेपशक्तितः ॥
न मुक्तामे परंज्ञानं प्राप्यापि सुरसत्तमाः ॥ २४ ॥
विक्षेपावरणनिर्मुक्ताभविष्यध्वं कृपाधिकाः ॥
भवतां सर्वथाज्ञानं मत्प्रसादेन सत्वरम् ॥ २५ ॥

यावदावर्तनन्देवाः सज्ञानाश्चाधिकारिणः ॥
प्राप्नुवन्तु भवन्तोहि वेदवेदान्तसंभवम् ॥ २६ ॥
ज्ञानं म परमेश्वर्य देव्याश्च कृपया सुराः ॥ २७ ॥

॥ स्कन्दउवाच ॥

तदा देवाः शंभुवचोनिशम्य परमार्थतः ॥
जानुभ्यामवनीकृत्वा तुष्टुवुर्जगदम्बिकाम् ॥ २८ ॥
देवदेवप्रसादाय भक्त्या बद्धकराः सुराः २९ ॥

॥देवाऊचुः ॥

शरच्छशिसमानने जितगजेन्द्रयाते शिवे
सुनीलजलदोपमोज्वलकचे सुचिंजाधरे ॥
सुनीलकमलच्छदोत्पलसमाननेत्रांचले
दयारसघने शिवे सदयमद्य नः पालय ॥ ३० ॥

सुरासुरमुनिव्रजैर्नतपदांबुजे शङ्करि
महेश्वरमहांकगे विकचमाल्लि धम्मिल्लके ॥
भवानि भवनाशिनि हरितभक्तपापव्रजे
नमाम पदपंकजन्तव विमुक्तिदं केवलम् ॥ ३१ ॥
कांचनसंस्थिते मणिकदंबकान्तिप्रभे
शरच्छशिसुविंबवत्प्रथितवक्त्रविंबाधरे ॥
सुगन्धसरवन्धुरार्पितसुगात्रि चांभोरुहो
ज्वलन्नयनकोटिके नतगुहादिहेरंबके ॥ ३२ ॥
नगेन्द्रकुलकन्यके विधृतसामिसोमालके
महेश्वरसुवासिनि असुरजालसंभल्लके ॥
नमाम पदपल्लवन्तव सुगात्रमौलिस्फुरत्
सुरोत्तमकिरीटगं जयति पापमल्लापरम् ॥३३ ॥

कुलाचलकुलन्तपा तिलकभूतमीशे कृतं
कुलाचलशिखाश्रये कुलिशिताघसंघे शिवे ॥
कुलीनजनमानसाश्रयजपादपद्मोज्वले
प्रसीद पवनानलैर्नतपदाम्बुजे शंकरि ॥३४ ॥

॥ सूतउवाच ॥

देवानां संस्तवं श्रुत्वा प्रहृष्टा परमेश्वरी ॥
प्राह प्रसन्नगंभीरन्देवान्समधुराङ्गिरम् ॥ ३५ ॥

॥ देव्युवाच ॥

स्तुत्या च भवतान्देवाः प्रसादसुमुखात्वहम् ॥
ददामि वाञ्छितं सर्वं शिवज्ञानमिदं सुराः ॥ ३६ ॥

मद्ज्ञानेन परां शांतिमधिगच्छत सुव्रताः ॥
अहंमानं परित्यज्य शिवतावात्म्यवेदिनः ॥ ३७ ॥
विमुक्ताः पशवोयूयं मन्मायापाशक्तिवेभवैः ॥
अहमेवाखिलाधाराअहन्ध्येयाखिलैरपि ॥ ३८ ॥
सर्वत्र सदसच्चापि अहं विश्वमिदन्ध्रुवम् ॥
मन्मायया मोहितास्थअहमेतद्ब्रवामवम् ॥ ३९ ॥
अहमेव स्वयमिदं वदामि ज्ञानमैश्वरम् ॥ ४० ॥
अहं विश्वं भुवनं चेनयामि
अहंविश्वेभिर्वसुभिश्चरामि
अहमादित्यैर्वत विश्वेदेवैः ॥ ४१ ॥

अहमेव वात इह प्रवाम्यां
रममाणाभुवनानि विश्वा ॥
अहन्दधामि द्रविणं हविष्मते
सुवीर्याय यजमानाय सुन्वते ॥ ४२ ॥
परोदिवोयं परमेनापृथिव्यां
एषोन्तर्याम्यमृतः पुराणः ॥
सदा जनानां हृदये सन्निविष्टः
एनमात्मानं गूढमनुप्रविष्टम् ॥ ४३ ॥
हृदा पश्यन्ति मनसा मनीषिणः
एषभूतपतिरेषसेतुर्विधरणोलोकानाममृतंभेदाय ॥
एष सुप्तेषु जागर्ति भूतं पुरुषोनिर्मिमाणः
एषोन्तरादित्य हिरण्मयः पुरुषोहस्यत्त शिवः ॥ ४४ ॥

एषधाता विधाता च स्वराट् संम्राट् प्रजापतिः ॥
एष देवो दिव्य एकः पुराणः सङ्गिप्वसङ्गोगुणनामकर्मभिः ४५
एषएव हि भूतात्मा भूते भूते व्यवस्थितः ॥
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ ४६ ॥
एतस्य चलनादेव यथा चलति भास्करः ॥
तथैव सर्वभूतेषु तद्धर्मैर्नैव लिप्यते ॥ ४७ ॥
अलिङ्गआकाशसधर्मएषो नान्तोन चादिर्न च मध्यमेषः ॥
नागतोयं न जगद्विचित्रं एषोखिलाधारउरुक्रमः सदा ४८
विशेषहीनश्च कविः पुराणएषस्वतंत्रः पुरुषः पुरातनः ॥
गूढेनु गूढः परमः पारपारः सुदुर्दशोयोगयुक्तैश्च भूयान् ४९
मदेकसंस्थो भवतां वे निर्लिपाः
न जानन्ति सर्वे हृदिभासमानम्
सदाक्षास्यभासं महोक्षाद्विहीनम् ॥ ५० ॥
अस्यैवाहं प्रकृतिश्चास्मि देवा
न मां जानते ये सदा दुःखभाजः ॥
प्रभास्मीह देवी शशिसूर्यऋक्षे
एषां ग्रहाणां परमास्थितिश्च ॥ ५१ ॥
नचावयोर्भेदजालं कदाचित्
मया चाहं एष मायी महेशः ॥ ५२ ॥
भावग्राह्योह्यनीडात्मा भावाभावकरः शिवः ५३
कलाविमं पुरुषन्देवमीड्यं निचाय्येनं शान्तिमत्यंतमेति ॥
एष आत्मा तपसालोकनीयो नान्यैर्धर्मैरस्य लिङ्गं न चैव ५४
यस्यैष आत्मा वृणुते तनुं स्वां तस्य प्रसादेन हि तस्य लाभः
यस्यैष लाभान्नपरंलाभमीष्टेजनःसुराज्ञानमेतस्य दुर्ज्ञम् ५५

पुराविदः कवयो ये मनीषिणो
ज्ञात्वाप्येनं निष्प्रकंपा महेशम् ॥
तरान्ति शोकं च पृथक् पथक् जना
न जानते नित्ययुक्ता गुणेषु ॥ ५६ ॥

तथेन्द्रियाधारमनन्तरूपं
नीरूपरूपं परमाकाशमेनम् ॥
विश्वक् प्रपंचेषु पुरीशयं स्थितं
वेदान्त सैधैरपि दुंढ्यमानम् ॥ ५७ ॥

रसं रसानां परमास्वादनीयं-
मनास्वादं रसवर्जं सुगुप्तम् ॥
तुरीयमिन्द्रं सततोदितं गुणै-
र्गुणातीतं विभुपं दिव्यधाम ॥ ५८ ॥

एषानन्तमहिमाधारईशो
भूमा सीमा कारणमेकोद्वितीयः ॥
नानैवास्ति महिमा यत्प्रतिष्ठः
कविः प्रज्ञानोरसवर्ज्योयमात्मा ॥ ५९ ॥
एष ब्रह्मैष एवेन्द्र एष सर्वं चराचरः ॥ ६० ॥

एषआत्मापहतपाप्मा
नीरजोविशोकोविमृत्युरजिघित्सोपिपासः ॥ ६१ ॥
सत्यकामगुणाढ्येष बृहत्धामायमीश्वरः ॥ ६२ ॥

एषोऽशरीरोविश्वकर्ता गुणेशो
एषदेवः शीर्यमाणैर्न शीर्णः ॥
अजरोयममृतोवै विशोकः
शोकातिगोजातिधर्मैर्विहीनः ॥ ६३॥
एष वेदैर्मन्त्रैश्च विप्रै–
रविश्रुतेरिन्द्रियैरप्रतर्क्यः ॥
एषोऽनन्तश्चरति देहजाले–
र्यथोर्णनाभिः सृजते तन्तुजालम् ॥ ६४ ॥
एषआदित्ये तपति तेजसेत्थः
एषविप्रैर्मखजालैश्च तुष्टः ॥
पातिमामेममृतस्य नाभिं
कालातिगः पाति विश्वं सदैव ॥ ६५ ॥

अस्मात्परं नाणुरस्तीह किंचित्
सएव भर्ता मम देवःपुराणः ॥
नीरूपरूपोऽप्ययमात्मा महेशो
नीलग्रीवः शिपिविष्टः शाश्वतोयम् ॥ ६६ ॥
न हन्यते हन्यमाने शरीरे
दिव्योदेवोऽप्यदेवः पुराणः ॥
तमनूचाना उपासते परं
तुर्यावस्थातीतमनूपमं शिवम् ॥ ६७ ॥
नान्तः प्रज्ञं न बहिः प्रज्ञमीशं
नोभयप्रज्ञमर्हत्तमं च ॥
विश्वस्य स्रष्टारमनेकरूपं
विश्वस्यैकं परिवेष्टितारम् ॥ ६८ ॥

गुहाहितं गह्वरेष्ठं पुराणं
त्ववस्थातीतं प्रणवं चादिमेकम् ॥
महन्महान्तं परमात्मानमीश–
मणोरणीयांसमिदन्ततं च ॥ ६९ ॥

विभ्राजमानं भूतवर्गेष्वसक्तं
वेलातिगं स्वप्रभया भासमानम् ॥
वालाग्रमात्रं हृदये भासमानं
जीवःभासं मन्यमानं च मूढैः ॥ ७० ॥

न त्वेष जीवोन शिवश्चादिकर्ता
यस्मात्परं नापरं चास्ति किंचित् ॥
बृहद्ब्रह्म शुक्लं ऋतं सत्यमीशं
प्रमोदं महत् ज्ञानमानन्दमेकम् ॥ ७१ ॥

एतत्परं विदुरमृतास्ते भवन्ति
अथेतरे दुःखमेव विशन्ति ॥ ७२ ॥
सएष परमानन्दोब्रह्म तत्परमं स्मृतम् ॥
अस्यैवानन्दमात्रा हि भवन्तश्च सुरासुराः ॥ ७३ ॥

अयमेव पराकाष्ठा सब्रह्म सशिवः स्वयम् ॥
वेदपर्वतजालोत्थमन्त्रैः क्लृप्तोयमेव हि ॥ ७४ ॥

इत्युक्त्वा सा जगन्माता देवानां पश्यतान्तदा ॥
आह देवं महादेवमनादिमजमव्ययम् ॥ ७५ ॥

॥स्कन्दउवाच ॥

इत्थंवावचनेन नन्दितनिजस्वान्ताः सुरास्ते तदा
नानावेदशिरोगतैश्च विविधैर्वाक्यैस्तदा हर्षिताः ॥
तान्देवीमगजां गिरीशरमणीमानन्दधाराघृताः
पश्यन्त्युत्फुल्लितलोचनैः परिवृढन्देवं नभोमध्यगम् ७६॥

इति श्रीशिवरहस्ये प्रथमांशे देव्युप.निषद्बो-
धोनाम पंचपंचाशत्तमो-
ध्यायः ॥ ५५ ॥

॥ सूतउवाच ॥

कुक्षिन्त्रिलोकन्देवेशं महोक्षस्थं हि पार्श्वगम् ॥
प्रांजलिर्विनयोपेता नयादिगुणसंपदा ॥ १ ॥
प्राह देवी विरूपाक्षं विशालाक्षी महेश्वरी ॥ २ ॥

॥ देव्युवाच ॥

दिवौकसान्तद्भगवन्प्रसादतो
मम चैव ते ज्ञानमहो महार्थदम् ॥
तवाद्यबोधाद्धृदयग्रन्थिभेदनं
समाप्नुवंत्वावहिताः कृतार्थाः ॥ ३ ॥
भवाननादिः पुरुषः पुरीशयो
गुहाहितोगव्हरेष्टः पुराणः॥
गुणातिगोगुणभूतेष्वसङ्गः
अशीर्णआत्मा परमः पावनस्त्वम् ॥ ४ ॥

नान्यस्त्वत्तोभिद्यमानं न चास्ति
कविर्मनीषी परिभूः स्वयंभूः॥
तथापि लोकायन उत्तमोसि
सर्गव्रजैरुद्वहसीह देवान् ॥ ५ ॥

विभुर्महान् द्यान्दिवं रोदसीं खं
रोदिष्यतोरुद्रईशोद्वितीयः ॥
अकामकामोमहिमा त्वं हि भूमा
सीमा सदिव्योदेवएकोऽरुपस्त्वम् ॥ ६ ॥

अजोऽव्ययस्त्वन्तव वक्त्रं महेश
प्रपन्नाः सर्वे दक्षिणं घोररूपम् ॥
एते सर्वे पशवः कामवास-
स्तेषान्त्वं पाशंच्छेत्तुमर्हस्यतोद्य ॥ ७ ॥

पयोनिधिः पयसां त्यागएको
नित्यो नित्यानां चेतनानां च चेताः ॥
पतिः पतीनां प्रथमोविधुरीशः
त्वत्तोवभुवुर्भुवनस्य गोपाः ॥ ८ ॥

मनोवाचामतिगस्त्वं हि गोप्ता
सर्वः सर्वेषां सर्वखर्वादखर्वः ॥
वभ्रुर्मधुः पिङ्गलोविश्वनेता
सहस्रभाः सोमधामानमीयः ॥ ९ ॥

एते प्रसादाभिमुखास्तवातो
लोकेषु लोक्याः पालनीयामहेश
तवैश्वर्यादासकामाभवन्तु ॥ १० ॥

नान्यत्तेपान्त्वत्तएवाखिलेपु
संप्राप्तास्ते पारमैश्वर्ययोगं
मुच्यन्तु ते मम मायादिपाशैः ॥ ११ ॥

॥स्कन्दउवाच॥

तदा देव्यावचः श्रुत्वा आह देवोघृणानिधिः ॥
प्रणतानमरान्सर्वान्विष्णुब्रह्मेन्द्रपर्वकान् ॥ १२ ॥
हस्तमस्तकसंयोगं कृत्वा देव उमाधवः ॥
गिरा प्राह ततो देवान् शक्तिं वै पातयंस्तदा ॥ १३ ॥

॥ईश्वरउवाच ॥

देव्यानया बोधिता यूयमेव
वेदान्तविज्ञानसुनिश्चितार्थाः ॥
मद्ध्यानयोगेन सुरोत्तमाश्चिरं
संप्राप्स्यथ ज्ञानमज्ञैर्दुरापम् ॥ १४ ॥
न चक्षुषा दृश्यमिदं च खैः सदा
न वेदवादैर्न च शास्त्रतर्कैः ॥
तपसैवानुदृश्योहमात्मा
गुरुप्रसादेन शिवप्रसादात् ॥ १५ ॥
भिद्यन्ते वै विपुलाग्रन्थयोवः
अनादिसिद्धं कोनुहि वेदएव ॥
नसांपरायोभवतां बालकाना
मनाद्यविद्याविषयैकवर्त्मनाम् ॥ १६ ॥
यूयं मया कल्पितैवास्थ लोके
लोकाधीशा यावदावर्तनं हि ॥
तावज्ज्ञानं प्राप्यमय्येव लीना
भविष्यथ प्रतिकल्पं सुरेशाः ॥ १७ ॥

तं मामनुप्रतिपद्यध्वमद्य
सुनिर्वृतास्तपसा केवलेन ॥
विज्ञानवान्मां मनसास्मरेत
तस्माद्देदेरीड्य एकोमहेशः ॥ १८ ॥
यज्ञैर्दानैस्तपसा नाशकेन
मत्क्षेत्रवासैः परिधूलनादरः ॥
धृतात्रिपुण्ड्राभवपाशमुक्ताः
शिरोव्रतैरग्निरित्यादिमन्त्रैः ॥ १९ ॥
उत्धूल्य गात्राणि पवित्रभस्मना
रुद्राणि चावर्तयान्ति प्रीतये मे ॥
पंचाक्षरावर्तनजातहर्षा
मल्लिङ्गसंपूजनमात्रतुष्टाः ॥ २० ॥
कष्टैर्विहीनाः शिपिविष्टमिष्टै-
र्बिल्वैः समर्चन्ति दिने दिने माम् ॥
प्ररुष्टभक्त्यैव भवोत्कटे रतः
प्रणष्टमोहाः प्रकटाष्टमूर्तिम् ॥ २१ ॥
सर्वार्तिघ्नं हृदये संप्रविष्टं
ध्यायन्त मामेव सदा हृदिस्थम् ॥
संप्राप्य मज्ज्ञानमहो दुरापं
कोष्टङ्गनिष्टं परिपश्यध्व जुष्टम् ॥ २२ ॥
इष्टं च यत्किंचिदपि त्रिलोके
निवेद्य तद्भुंजत प्रीतियुक्ताः ॥
तेनैवयो ज्ञानमखंडनिष्टं
कुर्याच्च तत्संसृतिबन्धनाशम् ॥ २३॥

पाशान्भवतां त्रिविधतापसंभवा-
न्सनातनांश्छेदयाम्यथहृष्टः ॥
अहो भवद्भिः परिपूर्णकामः
किं विस्मृतो हृदये सन्निविष्टः ॥ २४ ॥

पूर्णमदः पूर्णएवास्मि पूर्णः
पूर्णात्पूर्णो नास्त्यपूर्णं मया हि ॥
देव्याः प्रसादेन विमुक्तकामा-
श्चरन्तु तुष्टाः परिपूर्णसिध्दयः ॥ २५ ॥

तथापि किंचित्प्रवदामि वैभवं
कष्टन्तदव्यक्तगतं ममाद्य ॥
सर्वेषु देवेषु सदैव सर्वदा
लिङ्गाकृतिर्गिरिमौलौ निविष्टः ॥ २६ ॥

स्थानेषु पूज्योहमनादिरीशो
मद्रूपलोकर्यं भवतां सुदुर्लभम् ॥
अहन्त्वलिङ्गोपि हि लिङ्गसंस्थः
सनातनःपूजनीयो भवद्भिः ॥ २७ ॥

सदैव लिङ्गं मम लिङ्गमेवं
ज्ञातुं न शक्यं क्षुरधारकन्तत् ॥
ततोपि नीरूपमिदं हि लिङ्गं
जगत्पवित्रीकुरुतेर्चनादिभिः ॥ २८ ॥

ततोऽपि तत्केवलं कष्टलभ्य-
न्तस्माद्भवन्तः शरणं प्रयान ॥
कैलासवासो भवतां सुदुस्तर-
स्तत्र प्रवेशो नहि सर्वा मे सदा ॥ २९ ॥
सर्वं वभासोप्यहमेव ईश-
स्तत्रांबया गणसंघैश्च युक्तः ॥
मुक्तो विजन्हामि सदास्तमायः ॥ ३० ॥
कैलासलिङ्गेषु सदा निविष्टः
केदार ओङ्कार अथाविमुक्ते ॥
महामले रुद्रकोटौ प्रभासे
हिमालये श्रीनगमौलिसंस्थे ॥ ३१॥
तथान्यदेशोत्तमसंस्थलिङ्गे
संपूज्य मुक्ताश्च भवन्तु विज्वराः
रहस्यमेतत्कथितं सुरोत्तमाः ॥ ३२ ॥

॥ सूतउवाच ॥

इत्युक्तागिरिजा महेश्वरवचः श्रुत्वा विधीन्द्रादयो
विष्णवीशानमरुद्गणाः सवरुणा नत्वा महेशं शिवम्॥
जग्मुः स्वाभिमतप्रदेशमभितोदेवामुदा शङ्करात्
प्राप्य ज्ञानमहोदयं सुरुचिरं मुक्तिं च लिङ्गार्चनात्
॥ ३३ ॥
हिमालयनगोत्तमे हिमसुधाममौलिस्फुर-
न्हिमाद्रिवरकन्यका जटिलकान्तिकान्तं प्रभुम्॥
पयोधिसुतया हरिः पयसिजातपुष्पार्चनै-
र्निनाय दिवसानुमे वरसुलिङ्गकेदारगः ॥ ३४ ॥

ॐकारं समवाप्य भारतिपतिः सब्रर्मवातीरगं
पुष्पैर्विल्वदलार्चनैः श्रुतिगतैर्मन्त्रैःस्तुवन्मामुमे ॥
तत्याजाखिलपातकं हृदिगतं चाज्ञानमप्यानतः
स्रष्टा दिक्षु ततःस्वकीय वदनैस्तुष्टाव चाष्टाकृतिम्३५
रुद्रोविमुक्तपदवीमविमुक्तमेतद्
संप्राप्य लिङ्गनिलयं वरगङ्गयापि ॥
विश्वेश्वरान्त्रिभुवनेश्वरमीशितारं
त्वामंबिकामगसुतां च विशालनेत्राम् ॥ ३६ ॥
अभ्यर्च्य पुष्पनिकरैः पयसोरुदुैश्च
नीरैश्च सेव्य वरविल्वदलैः समर्प्य ॥
लेभेप्यलभ्यमपि वेदशिरः प्रतीतं
ज्ञानं सदोदितमखण्डमवाप्य तुष्टः ॥ ३७ ॥
यमोपि वरशैलके भवनगन्धमाद्रौ शिवं
समर्च्य निजघातकैः श्रुतिगतं च लेभे शिवम् ॥
विमुक्तहृदयस्तदा त्रिदलविल्वपत्रैः शिवे
सएव सुखसंपदां प्रवरदक्षिणाशामुखः ॥ ३८ ॥
श्रीशैलनायकमुमे मथिते प्रदोषे
श्रीदन्धनाधिपतिरर्च्य विमुक्तपापः ॥
ज्ञानं च यक्षपतिरक्षयरूपदीक्षा
पक्षाश्रयेण विमलं सलभे सुमोक्षम् ॥ ३९॥
तावश्विनौ करहदं पुरमप्यवाप्य
नागेशमर्च्य विविधैर्लभतां सुपुष्पैः ॥
मोक्षन्तथैव भिषजामधिपौ तथा ते
वैदन्तथायुपउमे समवापतुस्तौ ॥ ४० ॥

वायुः कामदवैद्यविद्यविपिनाधीशं समभ्यर्च्य मां
बिल्वैः कोमलपुष्पनीरजदलैः संप्राप मोक्षं द्रुतम् ॥
अग्निः पुष्करमीश्वरं त्रिभुवनाध्यक्षं समभ्यर्च्य वै
सर्वं भक्षसमुद्भवप्रथितमप्यंहोविमुक्तोभवत् ॥ ११ ॥

गोकर्णे समवाप्यते हि मरुतः पूज्येश्वरं मां शिवे
बिल्वैः कोमलपल्लवैश्च वसवोदित्यास्तवैस्तुष्टुवुः ॥
श्रीमच्छ्यंबकलिङ्गमप्यगसुते ते द्वादशार्काहितम् १२

महेशि रुद्रस्त्वनिशं महेश्वरं
संपूज्य त्रिदलैश्च बिल्वपत्रैः ॥ १३ ॥
परिणत हिमधाममण्डलोपि शंभुं
हृदयांभोजलपुण्डरीकवासम् ॥
गोपर्वते समभिपूज्य तथैव शंभुं
मार्तण्डकोपि गिरिजे समवाप मुक्तिम् ॥ १४ ॥

कांची कांचितविकृतटां विविपदस्तेकाम्रमूले हरं
कामाक्षीमपि भोगभाग्यनिकरैःसंपूज्य मुक्तिं गताः॥
अन्ये चापि ग्रहास्तथैव मुनयो देवासुरामानवा
गन्धर्वोरगयक्षराक्षसगणामुक्ताः समभ्यर्च्य माम् १५

श्रीकण्ठे तृणशंकरे सुविहिते रत्नाद्रिमौलिस्थिते
श्रीमातृभवे गिरीन्द्रतनये श्रीकालहस्ते गिरौ ॥
जंबूलिंगकवेरजातटयुगे जप्ये तथा कुंभगे
पुण्यश्रीधवलार्जुने विधिपुरे श्रीवेंकटाब्जे पुरे ॥१६॥

पुण्ये श्वेतवने मयूरविपिने छायावने शांकरि
संपूज्य त्रिदशेश्वरं गिरिजया मुक्तिं परान्ते ययुः ॥
हालास्यनायकमुमे वरशालिवाठ
नाथं च कान्तिमति काशिपुरीयताक्षीम् ॥ ४७ ॥
देवांगनाः समभिपूज्य हलीसलास्यै-
र्नृत्यैर्महेश्वरि मुदं समवापुरग्र्याम् ॥
मार्कण्डेयघटोद्भवौ घटहरं संपूज्य मृत्युं क्षणा-
द्योजिग्ये भुवनेश्वरि त्रिभुवने मत्पादशूलाहतं ४८
तद्वत्स्वामिगिरौ समर्च्य गणशस्तदक्षिणावर्तके
मामाराध्य गणाश्च भूसुरगणास्तत्रत्य लिंगेषु माम्॥
श्रीप्राज्ञीरनिकेतनं अपि सदा नाम्ना महाकालकं
संप्राप्यार्च्य गणत्वमापुरकृतैर्मुक्ताअभूवन्गणाः॥४९॥
भृङ्गी नन्दिकचाण्डिकौ बालिसुतः पौलस्त्यहुण्डादयो
मामाराध्य सदैव तुम्बुरुमे तन्मे समाकर्णय ॥ ५०॥

इति श्रीशिवरहस्ये प्रथमांशे देवकृत-
क्षेत्रपूजन नाम षट्पंचाशत्त-
मोऽध्यायः ॥ ५६ ॥

॥ ईश्वरउवाच ॥

देवैर्गणेन्द्रैर्मुनिभिस्स्तुतोहन्तत्र तत्र हि ॥
तत्स्तुतिं सावधानेन मत्तः शृणु नगात्मजे ॥ १ ॥

विष्णुब्रह्मादयोदेवास्तथैव गणपामम ॥
मान्तुष्टुवुर्महादेवं पद्यैर्गद्यैर्मनोहरैः ॥ २ ॥

॥ विष्णुरुवाच ॥

स्फुरज्जटाकुटीविहंगसंघमंडितां
करिप्रियांगसंगतां मुखाब्जकान्तिरंगिताम् ॥
कपर्दकोटिसंगतांकथा सुधातरंगिणीं
भजामि शंभुमौलिगां महेश्वरीं नतोस्मि ताम् ॥ ३॥

खरादिखड्गसंहतिप्रपंचबन्धनान्तकं
प्रहासचंद्रहासघृगखण्डखण्डपर्शुकम् ॥
प्रभावितार्दिकान्वितं खणज्ञपारणस्फुरत्
खरादिदुःखरादिदुष्टगर्वहृच्छिवम् ॥ ४ ॥

॥ ब्रह्मोवाच ॥

मनोतिगं वचोतिगं गुणातिगं गणातिगं
भुजंगराजभोगमार्चितांघ्रिहृत्पयोजगम् ॥
तरंगिणीतरंगजप्रफुल्लपद्मनालगं
भजामि नृत्यरंगगं कुरंगपालमीश्वरम् ॥ ५ ॥

हिरण्यदं महीप्रदं पशुप्रदन्धनप्रदं
हराजविष्णुसत्पदप्रदानभोगमोक्षदम् ॥
भजामि देवदैवतं गुहाहितं जगद्गतं
प्रभावितं सुभाषितं महाश्रुतीडितं शिवम् ६ ॥

॥रुद्रउवाच॥

महाहिराजकंकणन्धराधरात्मजावरं
ज्वलत्त्रिशूलधारिणं मुनीन्द्रबालपोषणम् ॥
कुरंगबालधारिणं सितत्रिपुण्ड्रधारिणं
भजामि सोमधारिणं प्रकृष्टसामघोषिणम् ॥ ७ ॥
सुधांशुखण्डदीधितिप्रचण्डमौलिमण्डितं
सुकुण्डलीकृताच्छगण्डकुण्डलीश्वरप्रियम् ॥
अखण्डदिव्यदीधिमत्सुचन्द्रखण्डदेहकं
विधातृमुण्डपण्डजप्रकाशमालजालकम् ॥ ८ ॥
भजामि चण्डताण्डवं घनाण्डजाण्डजाप्रियं
तुहुण्डहुण्डकप्रियं महारुषोग्रदण्डकम् ॥

॥ इन्द्रउवाच ॥

पुरान्तकं स्मरान्तकं भगान्तकं मखान्तकं
भजेन्धकान्तकान्तकं शिवं सदा हृदंबुजे ॥ ९ ॥

॥ वायुरुवाच ॥

सुदक्षदक्षशिक्षकं महोक्षवाहकांसग
मयस्करं यशस्करं तिरस्करं महेनसाम् ॥
महस्करं नताप्रियन्तिरस्करन्दुरात्मनां
सुमस्कारिमनोगतं सुतस्कर हविष्करं
भजामि शंकरं सदा हृदन्तरेषु विस्तरम् ॥ १० ॥

॥ अग्निरुवाच ॥

शुभांगदं शुभास्पदं सुरेषु दत्तसत्पदं
महाविभूतिधारिणं सुभूतिस्वर्गमोक्षदम् ॥
भवादिहीनबोधकं करीन्द्रचर्मवस्त्रक-
मखण्डसोममण्डलप्रभं शिवं भजे सदा ॥ ११ ॥

॥ यमउवाच ॥

हरं सुभक्ततत्परं गरन्धरं जलन्धरं
प्रवृत्धशत्रुसंहरं यशस्करं महेश्वरम् ॥
हरीशरं महीधरेन्द्रराजराजकार्मुकं
भजामि भूरथं हरं पुरासुरादिसंहरम् ॥ १२ ॥

॥ सूर्यउवाच ॥

शरीरभोगसंहरं भजामि देवभास्करं
हरं च शंकरं सदा परात्परं नटेश्वरम् ॥
जनार्दनादिपूजितं फणीन्द्रराजहारकं
सुरेन्द्रमारमारणं त्रिलोकभूतिकारकम् ॥ १३ ॥

॥ कुबेरउवाच ॥

धनाधिपं सुराधिपङ्गणाधिपन्दयाधिक-
मुमाधिपं वृषाधिपं जगत्सुकारणाधिपम् ॥
भजामि वसुधाधिपं नगाधिपं हृदाहितं
चराचरात्मकाधिपं सुधेशचन्द्रशेखरम् ॥ १४ ॥

॥ चंद्रउवाच ॥

शरच्छशिसमच्छविं महोक्षपुच्छचामरं
महाच्छतरकल्पकं कुसुमगुच्छसन्मस्तकम् ॥
निरिच्छजनवल्लभन्ताटिनिसच्छविकपर्दकं
हृदच्छशिवमव्ययं सुकच्छपस्तवेडितम् ॥ १५ ॥

॥ वरुणउवाच ॥

विशिष्टादिद्विष्टनष्टङ्गरिष्ठं
महिष्टन्तथा ज्येष्टमीशं गिरीशम् ॥
भजामीष्टमष्टाकृतिं भक्तिनम्रं
कनिष्ठं च कुष्टादिकष्टौघनाशम् ॥ १६ ॥

॥ अश्विनावूचतुः ॥

कटिपटकरटित्वचं जटाकुटीरा-
त्मुरपाटीरतटोरुगांगपाथः ॥
स्रवदर्धेन्दुकलाजटासनाथं
निकटाडम्बरटंककोटिहस्तम् ॥ १७ ॥
भुजङ्गराजहारकं महोज्वलाग्निधारकं
भवांबुधेः सुतारकं भयानकं महेनसाम् ॥
भजेन्धकान्तकान्तकं महेश्वरत्वदायकं
सुरासुरेन्द्रनायकन्धृताङ्गनार्धकायकम् ॥ १८ ॥

॥ मारुतउवाच ॥

महीन्द्रभूभुजां सुखं त्रिलोकराजसत्सखं
सुतामजातसन्मुखं वहिर्मुखैः सुदुर्दृशम् ॥
समस्तदुःखहारकं हसन्मुखं भजे शिवं
शिखीसखं जलंसखं वसत्वशेषतोहृदि ॥ १९ ॥

॥ रुद्राऊचुः ॥

दृगंचलस्फुलिङ्गरोपदग्धमीनकेतनं
पतङ्गरुकूसमन्तरं विहङ्गवाहनार्चितम् ॥
हृदिस्थितं शिवांगकं पयोजराजिमौलिकं
महोक्षवाहवक्षसं भजाम्यधोक्षजार्चितम् ॥ २० ॥
हृदादिहीनमक्षतन्त्यपक्षयादिवर्जितं
क्षयेशमौलिमीक्षणीकृताब्जमित्रकोचमम् ॥
अलुप्तमक्षताक्षटश्यविग्रहन्त्रिलोचनं
विश्वरूपकाक्षमीश्वरं भजे सदा हृदन्तरे ॥ २१ ॥

॥ आदित्याऊचुः ॥

गणाधिनाथनाथिताखिलप्रपंचरक्षकं
गाधिजातसन्नुतीकृताब्जदिव्यपादुकम् ॥
भजामि रात्रिनाथमौलिकं स्फुरत्सुरौघरंजिनी
तरङ्गिणीसनाथदिव्यवासनोपगं सदा ॥ २२ ॥

॥ गणेशउवाच ॥

अशेषशोषिताखिलप्रपंचजातशोषकं
मुनीन्द्रजातिपोषकं महाहिशेषभूषकम् ॥
समुद्रनीरशोषकं प्रकाममिष्टलोचनं
तडित्समानघोषकं भजे विसृष्टिकारणम् ॥ २३॥

॥ स्कन्दउवाच ॥

घनस्तनयुगार्धकं स्तनितनिम्नमेवादिकं
सुचक्षुषं निराकृताघसङ्घकं घृणायुतम् ॥
धृताक्षभूति सुप्रियं घनाभकण्ठमण्डलं
विधीजमुण्डमालकं भजेन्तरङ्गचिद्घनम् ॥ २४ ॥

॥ नन्दीश्वरउवाच ॥

चराचरसुखाकरं कपोटयोनिधारकं
निशाचरान्तकं चतुर्मुखारविन्दवेदसंस्तुतम् ॥
विचारमात्रगोचरं सुपुष्पवक्त्रगोचरं
सुनिश्चलं हृदन्तरे सुचामरौघवीजितम् ॥ २५ ॥

॥चण्डिरुवाच॥

हरिद्वसानमीश्वरं जटाधृतत्रिमार्गगं
नटेनमीश्वरार्चितं कटीभचर्मधारकम् ॥
ललाटपट्टपावकं तरंगिणीसुहंसकं
वटोरुमूलगं शिवं भजे शिवं महोत्कटम् ॥ २६ ॥

॥भृङ्ग्युवाच॥

मृडन्दृढं परीदढं सुगाढवाढहृद्रतं
समूढव्यूढसन्मुखांक्रयासमूहतर्पितम् ॥
अनूढकन्यकाद्विजंसखं सुमूढगूढहृद्रतं
महाकराम्बुजोत्थितप्रकामढक्कवादम् ॥ २७ ॥

॥ईश्वरउवाच॥

गीर्वाणैरमृतार्थिभिः किलशिवे क्षीराब्धिधारार्णवे
कृत्वा वासुकिरज्जुमंथनविधौ मंथान मंथाचलम् ॥
तस्मादप्युदभून्महामणिगणं धेनुव्रजं पंकजा
जाता चोपाधिनायकः सुरतरुः सारंगतारंगकौ ॥२८॥
धूमोत्कीलितकालकूटशवलज्वालादिगन्तङ्गताः
कांदीशीकृतदेवदैत्यनिवहन्दृष्ट्वाहमेकोघृणी
तत्प्रार्थ्याखिलदेवसंघविनुतो नीलाच्छकण्ठोभवम् २९॥
अकपटपटुवाक्यमौलिगुंफै-
स्तटिनीजालकमौलिरार्द्राखिलाङ्गः ॥
करटित्वकूपटभूतकटितटः
सपदि तदूरुहृदञ्जनृत्तटोपः ॥ ३० ॥

सन्ध्याताण्डवडम्बरव्यसनिनो भर्गस्य चण्डभ्रमे
प्रोन्नृत्यद्भुजचण्डमण्डलभुवो झंझानिलाः केवलम् ॥
एषामुच्चलतां जनेन झटिति व्यूहेषु भूमीभृत
उड्डिनेषु विडौजसा पुनरसौ दंभोलिरालोकितः ३१

॥ सर्वे देवाऊचुः ॥

त्वल्लिङ्गार्चनतो महेश शरदां जीवेम सार्धं शतं
त्वन्नामानि सदा ब्रुवाम च विभो भक्तान्हि नन्दामते ॥
लिङ्गं विल्वदलोत्तमाङ्गमसकृत्पश्येम पुण्याः कथाः
शृण्वामः प्रतिवासरं च विगतैनस्का भनामो वयम् ३२

॥ शेषउवाच ॥

वसुधाधरधारकं महेशं
वसुधाराधितमब्जमित्रसंस्थम् ॥
हिमकरहिमभेषजाक्षियुग्मं
हिमगिरिसुतया नतोस्मि देवम् ॥ ३३ ॥

॥ ईश्वरउवाच ॥

पृष्टोप्टलग्नकमवातिग लोकनाथ
भूद्रारदारितरसातलतोतिमूलम् ॥
ब्रह्माण्डखर्परमतीत्य गतोर्ध्वमौलिं
लोकेशदृष्टिविरहान्मम लिङ्गमेतत् ॥ ३४ ॥
तल्लिङ्गपूजनमुमे श्रुतिमौलिवाक्य
सिद्धान्तगर्भितपदप्रमयैव भाव्यम् ॥
तत्कश्चिदेव कुरुते मम च प्रसादा-
न्नोवासुराभरितभक्तिरसाहि केचित् ॥ ३५ ॥

चण्डांशुप्रकटप्रदीपिततमस्तौमैकसीमादिशः
खद्योतद्योततेव प्रभवति भवतोदेवजालं समग्रम् ॥
किंवा निंबतरुः सुरद्रुमतमोभूयात्ततोमे शिवे
अज्ञानं किमु वेदनेन सदृशं विष्णवादयः किं समाः ३६

गगनातिगलिङ्गमौलिमेतत्
चरणतस्तलातलमूलभागम् ॥
महसा धवलीकृताखिलाशं
भवदाशास्यसमं ममेष्टवासम् ॥ ३७ ॥

गगनगतमपारतेजसेत्थं
जनितानन्दभरेण देवसंघाः ॥
अवनितलनिषण्णमस्तकास्ते
परिवत्धांजलयोवदृशुरीशम् ॥ ३८ ॥

॥ सूतउवाच ॥

सुरकुवलयसोमं सोमवामोत्तमाङ्गं
मधुरिमगुणसीमाभूममादित्यगीतम् ॥
सुमसममृदुकायं भीमभोगं च सौम्यं
कुमतिपथविदूरङ्कामदं कामनाशम् ॥ ३९ ॥

कमलामलनेत्रपूज्यपादं
कमलावन्धुजटं जटोरुभूषम् ॥
कलितालकगांगतुंगलीलं
कलशोद्भूतमुनिप्रपूजितांघ्रिम् ॥ ४० ॥

इति श्रीशिवरहस्ये प्रथमांशे सर्व देवकृ-
त स्तुतिर्नाम सप्तपंचाशत्तमो-
ध्यायः ॥ ५७ ॥

॥जैगीषव्यउवाच॥

अहो ज्ञानमहानन्दधारामृतनिमज्जनैः ॥
सानन्दं मग्नहृदयाः शिवज्ञानहताशुभाः ॥ १ ॥
धन्यावयं न सन्देहं स्कन्दानन्दैकमेदुराः ॥
किन्तल्लिङ्गं महेशेन प्रोक्तन्तद्वद मेधुना ॥ २ ॥
किन्तल्लिङ्गं कथ्य लिङ्गी कोवा तल्लिङ्गपूजकः ॥
लिङ्गार्चनेन किं प्राप्यं वद विस्तरतोधुना ॥ ३ ॥
त्वद्वागमृतधाराभिः पापदावानलोमम ॥
शान्तः प्रशान्तं चित्तं च महानन्दाब्धिवीचिगम् ॥ ४॥

॥ सूतउवाच ॥

जैगीषव्यवचोवीचिसंप्लावितहृदन्तरः ॥
स्कन्दोनन्दितमन्दारोगुह्यन्तत्पारमेश्वरम् ॥ ५ ॥
देव्यै देवेन कथितमवादीच्छांभवायतु ॥

॥स्कन्दउवाच ॥

यथा मुने त्वया पृष्टः प्रश्नोयं सर्वदुस्तरः ॥ ६ ॥
तथैव पृष्टो भगवान्देव्या कैलासमौलिगः ॥
कैलासेश्वरलिंगं च प्रणम्य स्तव्य भक्तितः ॥ ७ ॥

॥ देव्युवाच ॥

लिंगं कैलासमौलौ जनितार्तिविहितापारतापैकभंगं
मच्चित्ताब्जैकभृङ्गं रविशशिशिखिजापारकान्तोत्तमाङ्गम्॥
ध्यानानन्दैकसङ्गं विविधजनिजरानाशनेनाप्यसङ्गं-
शान्तस्वान्तैकसङ्गं कथय भवहरं सागमध्यानगन्तं ॥८ ॥

विविधजनमुनीन्द्रैर्विष्णुभिश्चैव रुद्रै-
रमरवरसमूहैर्दैत्यगन्धर्वसङ्घैः ॥
मुनिवरगणवृन्दैः स्कन्दहेरम्बकाद्यै-
र्नहि खलु भगवंस्ते लिङ्गमेतद्धि दृष्टम् ॥ ९ ॥
कथमिदमनलाक्षं प्राप्यते युक्तिभिर्वा
यमनियमतपस्यानेकदानैर्मखैर्वा ॥
जनिशततपसा वा प्राप्यमेतन्महेश
त्रिभुवनभुवने वा कश्चिदस्तीश द्रष्टुम् ॥ १० ॥
कथय रहसि शंभो आः किमेतद्विचित्र-
महमपि भगवंस्ते ज्ञासिपं नैव लिङ्गम् ॥ ११ ॥

॥ स्कन्दउवाच ॥

इत्थंवावचनेन सुन्दरतरस्वान्तेन्दुमौलिस्तदा
वीक्ष्यांबामुखपङ्कजं विमलसद्रोलंबमालादरः ॥
वेदान्तांबुजभास्करस्त्रिजगतामाधारभूतोहरः
प्राहोत्फुल्लमनोहराब्जवदनोदेवी मुदा शङ्करः ॥ १२ ॥
पुनः प्रणम्य सा देवी प्राह कामारिमीश्वरम् ॥

॥देव्युवाच॥

देवदेव महादेव महाकारुणिकोत्तम ॥ १३ ॥
किन्तल्लिङ्गं कश्च लिंगी कोवा तल्लिंगपूजकः ॥
कथं लिंगं कश्च लिंगं समर्चयति शंकर ॥ १४ ॥
तद्वदैवानुपूर्व्येण यदि ते मय्यनुग्रहः ॥

॥स्कन्दउवाच॥

इत्थं देव्या पुरा पृष्टो महेशो भक्तवत्सलः ॥ १५ ॥

तस्यैवाकथयत्पुण्यं शिपिविष्टः कथानकम् ॥
त्रिविष्टपदयो देव्यामष्टमूर्तिः प्रतुष्टिमान् ॥ १६ ॥
उवाचाल्हादयन्देवीन्तच्छृणुष्व गणोत्तमैः ॥
सुरेन्द्रैश्च मुनीन्द्रैश्च गोप्यमेतत्सनातनम् ॥ १७ ॥
नाख्येयङ्कस्यचिद्वापि ज्ञानहीनाय शांभवैः ॥

## ॥ ईश्वरउवाच ॥

सावधानेन देवेशि लिङ्गपूजाविधिक्रमम् ॥ १८ ॥
शृण्वपर्णे मयाख्यातं यथोक्तं हृदये धर ॥
नाख्येयङ्कस्यचिद्वापि रहस्यं मम सर्वथा ॥ १९ ॥
लयनात्सर्वजगतां लिंगमित्युच्यते शिवे ॥
लीनमर्थंगमयति तस्मात्तल्लिंगमुच्यते ॥ २० ॥

लसुक्रीडां च जगतो गच्छतीति तदुच्यते ॥
तस्माल्लिंगं विदुः प्राज्ञा।लिंगहीनं च तत्प्रिये ॥ २१ ॥
अर्चनं च प्रवक्ष्यामि अर्चकं च विशेषतः ॥
लिंगं गुणत्रयाद्दीनं ब्रह्मविष्णुमहेश्वरैः ॥ २२ ॥

पीठपीठ्यादिरहितं पूज्यपूजाविवर्जितम् ॥
ध्यानध्येयादिरहितं निर्गुणन्तमसःपरम् ॥ २३ ॥
जगज्जन्मोदयस्थानविनाशनाविवर्जितम् ॥
ओंकाराद्यं सप्रणवं त्रिमात्रापरिवर्जितम् ॥ २४ ॥
बोध्यबोधादिरहितं व्याप्यव्यापकवर्जितम् ॥
ज्ञातृज्ञेयज्ञानहीनं खण्डाखण्डादिवर्जितम् ॥ २५ ॥

भावाभावादिरहितं भवभावविवर्जितम् ॥
प्रभवाधारसंहारतिरोधानादिवर्जितम् ॥ २६ ॥
ध्यानध्येयादिरहितं महाध्यानविदूरगम् ॥
अलक्ष्यं लक्षणाहीनं गोप्यं गोपकवर्जितम् २७ ॥
नसन्नासन्नचैवासत्सदसच्च न चैव सत् ॥
सत्तामात्रादिरहितं केवलं स्वात्मदर्शनम् ॥ २८ ॥
भानाभानविहीनं च स्वभासाभासिताखिलम् ॥
चेतुचेतनराहित्यं क्षराक्षरविवर्जितम् ॥ २९ ॥
चराचरविहीनं च प्रमामेयादिवर्जितम् ॥
बिन्दुनादान्तिमं साक्षात्साक्षिलाक्ष्यादिवर्जितम् ३०

बिम्बं बिम्बातिगं चैतत्प्रतिभासादिवर्जितम् ॥
नैव दृश्यं नचादृश्यं ग्राह्यग्राहकवर्जितम् ॥ ३१ ॥
न वाग्वाक्यविहीनं च वाचान्दूरमनूपमम् ॥
न मनोनामनः प्राप्यं न प्राणं प्राणबोधकम् ॥३२॥
न चक्षूरूपरहितं तद्दृश्यज्ञानवर्जितम् ॥
न श्रोत्रं श्रवणाधीनन्तदाकाशमनूपमम् ॥ ३३ ॥
न घ्राणं गन्धहीनं च पृथिवीपरिवर्जितम् ॥
न रसं तदपोहीनं जिव्हास्थानादिवर्जितम् ॥ ३४ ॥
न पाणिपादं पाय्वादिमरुद्धीनं शिवे हि तत् ॥
न रूपरसगन्धादिशब्दस्पर्शविवर्जितम् ॥ ३५ ॥
नैवाकाशमनाकाशमाकाशस्यापि चेतकम्॥
न भूमभौतिकैर्हीनं घनभावविवर्जितम् ॥ ३६ ॥

न तेजस्तेजसाहीनं सर्वतेजः प्रवर्तकम् ॥
नवायुश्चलनात्वीनं वायोरुद्बोधकं हि तत् ॥ ३७॥
न चैतत्सलिलं साक्षात्सलिलद्रवकल्पकम् ॥
भूतादिहीनं भूतादिं भूताधारं सनातनम् ॥ ३८ ॥
अपाणिपादवदनमचक्षुः श्रुतिवर्जितम् ॥
सर्वेन्द्रियगुणातीतं सर्वेन्द्रियविवर्जितम् ॥ ३९ ॥

सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत् ॥
सर्वेन्द्रियगुणैकान्तं नित्यकान्तं सदोदितम् ॥४०॥
नवद्वारगृहान्तस्थदिव्यपीठे प्रतिष्ठितम् ॥
तदप्रतिष्ठं विश्वास्थं विश्वहस्तोरुपादकम् ॥४१॥
विश्वमौलिं विश्वपीठं विश्वस्य तमसः परम् ॥ ४२ ॥
न तत्र किंचित्प्रतिभाति रूपं
यस्मात्परं नापरमस्ति किंचित् ॥
वेदान्तवेद्यं निर्गुणं यद्वदन्ति
यतो जातं भुवनं वै विचित्रम् ॥ ४३ ॥

यस्मिल्लिङ्गे स्थितं चैतत्सकलं हि जगच्छिवे ॥
यदाधारमिदं विश्वं त्रिगुणं परिवर्तते ॥ ४४ ॥
तल्लिङ्गपरिमाणं हि केनवक्तुं हि पार्यते ॥
परिमाणादिरहितं गुणखण्डमथातिगम् ॥ ४५ ॥
अखण्डमेकपिण्डाण्डब्रह्माण्डोपरिसंस्थितम्
न प्रतिष्ठानवस्यानन्तालिङ्गस्य महेश्वरि ॥ ४६ ॥

नालमस्य महेशानि सर्वावास्यं महच्च तत् ॥
सर्वभूतमहाकोशगर्भागारस्थमम्बिके ॥ ४७ ॥
अणोरणीयोपि महन्महतोपि महान्तरम् ॥
सर्वाधारमनाधारं विश्वरूपप्रकाशकम् ॥ ४८ ॥
तेजोमात्रं स्वप्रकाशं जीवेशादिविवर्जितम् ॥
प्रत्यक्चैतन्यमात्मानमानन्दघनमद्वयम् ॥ ४९ ॥
ब्रह्मविष्णुहराद्योऽत्थं पीठजालविवर्जितम् ॥
स्वात्मैकवैद्यन्ताल्लिङ्गं स्वस्मिन्नेव प्रतिष्ठितम् ॥ ५० ॥
तद्ब्रूमानन्दघनन्तत्र नानास्तिकिंचन ॥
तस्मिंल्लिङ्गे दृष्टिगते दृग्रूपे लिङ्गतामियात् ॥ ५१ ॥
लिङ्गेऽप्यलिङ्गो भवति तल्लिङ्गस्यैव शीलनात् ॥
नान्ये पश्यन्ति तल्लिङ्गं नान्ये जानन्ति केचन ॥५२॥
तल्लिङ्गम्परमानन्दं रसहीनं रसातिगम् ॥
उपास्यं सर्वदा सर्वैस्तदुनात्येति कश्चन ॥ ५३ ॥
न तस्य महिमा कश्चित्स्वे महिम्नि प्रतिष्ठितम् ॥
सर्वहृत्संस्थितं लिङ्गं नित्यं सर्वप्रकाशकम् ॥ ५४ ॥
अवस्थाभेदरहितं मायागर्भगृहान्तरम् ॥
सार्वकालिकपूज्यन्तत् पट्त्रिकालादिवर्जितम् ॥५५॥
प्रविष्टस्ववृततमोराशिखाभानभासकम् ॥ ५६ ॥

न तत्र वाङ्नमनोवाकदाचित्
नचेन्द्रियप्राणभूतादिसङ्घः ॥
स्वयं प्रभाते भासितुं नो समर्था
दृग्रूपन्तत्केवलं बोधहीनम् ॥ ५७ ॥

जीवेश्वरौ ब्रह्मविष्णू कदाचित्
किंलिंगमेतत्स्वकदृष्टिहीनौ ॥
जीवेश्वरौ पार्वति मोहमानिना-
यहङ्कारमायाविवशान्तरात्मनौ ॥ ५८ ॥

हंसीभवद्वाक्यजपामिमं वदन्
जीवोविधिर्मोहजालेषु मग्नः ॥
अहं ब्रह्मोपासनाशास्त्रजालैः
सर्वज्ञेऽनभिमुखः सबुबोध ॥ ५९ ॥

विष्णुस्तथाचेश्वरः प्राज्यमज्ञः
सचाप्यहंकारवशान्तरात्मा ॥
अहं च सर्वेश्वर इत्यवोच
दृष्टलिंगोपि तथा वदन्तम् ॥ ६० ॥

एवं च तौ युयुधातेयशास्त्रै-
र्मिथ्याभूतैर्यैचमोहान्धभूतौ ॥
कदाचिदक्षन्तविहाय मोहं
क्षराक्षरौ विधिविष्णू भवानि ॥ ६१ ॥

व्यपेतमोहाभवतान्तदाविके
दृष्ट्वाहतुलिंगमेतद्विलोक्य ॥
पुनश्च यातौ प्रभवेश्च पाशै-
र्मौलिं मूलं चस्या पश्यावचेति ॥ ६२ ॥

भूदारहंसाकृतिदेहभाजौ
स्तुत्वा च लिङ्गं व्यरमन्तते तदा ॥

॥ ईश्वरउवाच ॥

क्षराक्षरौ तौ हरिवेधसौ शिवे
हंसाख्यमन्त्रेण विभाव्य देवम् ॥ ६३ ॥
ज्ञाज्ञौवनीशौ कथंचित्त्वष्टलिङ्ग-
वलिङ्गमाकाशसमानधर्मकौ ॥
व्यपेतमोहाभवतां यदा तदा
उपाधिहीनौ न हि किंचिदत्र ॥ ६४ ॥
तदेव लिङ्गं मम देव्यलिङ्गं
न पूजनावासपरैर्नरैः शिवे ॥
कार्यं शिलाधातुजबाणलिंगं
चरं स्थिरं वापि विशिष्टलिंगम् ॥ ६५

संपूजयेद्बिल्वदलैर्भवानि
भवाम्बुधेः सन्तरणाय लोकैः ॥
तल्लिंगपूजा न कदाचिदीदृशै-
र्नरैः सुरैर्वा गणविप्रवर्यैः ॥ ६६ ॥
कर्तुं न शक्याविविधैरुपायै-
र्दानैस्तपोनाशनकादिभिः शिवे ॥
समर्चनन्तत्कथये भवानि
गूढं सदा प्राज्ञतमैकगम्यम् ॥ ६७ ॥

तदर्चनम्पुण्यचयैर्न लभ्य-
मलभ्यमन्यैश्च पशूत्थधर्मैः ॥
भूताधिकारणधराधरधारकेण
सर्वज्ञरूपहरिणा किटिरूपकेण ॥ ६८ ॥
किंचिज्ज्ञजीववररूपकभूतपुण्य
पाथोजजातवदनैर्नः स्तुतिमार्चितत्वम् ॥
हृल्लिंगमात्मकमुमे मनसाभिपश्यन्
पश्यंस्तदात्मकतया भवतीव चित्रम् ॥ ६९ ॥

इति श्रीशिवरहस्ये प्रथमांशे आत्मलिंग कथनं नाम अष्टपंचाशत्तमोऽ-ध्यायः ॥ ५८ ॥

---

॥ ईश्वरउवाच ॥

अहंमात्राश्च जीवश्च नित्याहंकारमाश्रितौ ॥
तावेव हरिब्रह्माणौ तल्लिंगदर्शकौ शिवे ॥ १ ॥
तन्मौलि मूलं च सुराः सोऽहंकारः प्रकीर्तितः ॥
अहंमानाभिपन्नानां नास्ति तत्पूजनं शिवे ॥ २ ॥
वर्णाश्रममहाधर्मश्रमीभिस्तदपूजनम् ॥
तत्पूजारहितानान्तु नास्ति मुक्तिः कदाचन ॥ ३ ॥
तत्पूजया विमुच्येत नान्यथा कर्मकोटिभिः ॥
सुराणां रूपपूजातो मम लिंगार्चनं वरम् ॥ ४ ॥

मम भौतिकलिंगार्चा विल्वपत्त्रैर्महेश्वरि ॥
तल्लिंगपूजात्मैक्यादिपारम्पर्यक्रमेण हि ॥ ५ ॥
सन्निपत्योपकार्यादौ प्रवर्तेत महेश्वरि ॥
मन्नैवेद्यस्य भुक्तिं च चित्तशुध्यै श्रुतीरितम् ॥ ६ ॥
तदश्यामेति मन्त्रेण त्रिगुणातेति मन्त्रतः ॥
अन्तरिक्षेति ऋचा संप्राप्तोयं विधिक्रमः ॥ ७ ॥
जावालाथर्वणैर्मन्त्रैः शिखार्कैचलसंभवः ॥
भस्मरुद्राक्षलिंगार्चा रुद्रपंचाक्षरेषु मे ॥ ८ ॥
ध्यायीतेशेति च शिव शिवएकइतीरितम् ॥
उमायमित्यादिभिश्च मन्त्रैर्ध्यानाङ्कल्पनम् ॥ ९ ॥

सन्निपत्योपकारी च हृल्लिंगाराधना न हि ॥
इज्यादानव्रतैश्चापि वर्णाश्रमनिवन्धनैः॥ १० ॥
तदारादुपकारं हि न साक्षाल्लिंगपूजने ॥
नचेयं प्राप्यते पूजा पूज्यपूजकवार्जिता ॥ ११ ॥
धूपदीपादिरहिता गन्धपुष्पविवर्जिता ॥
पंचामृतोत्थसेकादिनैवेद्यपरिवर्जिता ॥ १२ ॥
भावनामात्रसुलभादुर्लभायोगिनामपि ॥
प्रज्ञातीर्थमहागंगानिषण्णोमानिताखिलः ॥ १३ ॥
नित्यशुध्दोहमस्मीति स्नात्वा स्वात्मजलाशये ॥
स्वात्मज्ञानमहाभस्मोत्धूलिताधवलाकृतिः ॥ १४ ॥
ज्ञानवैराग्यवोधोद्यत्त्रिपुंड्राङ्गलिभासुरः ॥
शान्तिदान्तिपथो ( भास ) योगरुद्राक्षमालिकः १५

नैपोहमस्मि किंचिद्वै नेदं नानात्मकं जगत् ॥
संपूज्यात्मानमद्रीन्द्रतनये तत्प्रपूजनम् ॥ २७ ॥
तत्पूजान्तोनास्य शिव न वोत्थासनकल्पनम् ॥
न कालदेशनियमो न साधनपरिग्रहः ॥ २८ ॥

सर्वदा सर्वभावेन आत्मलिंगं प्रपूजयेत् ॥
ब्रह्मक्षत्रमिदन्दृश्यं नैवेद्यं तन्निवेदितम् ॥ २९ ॥

भुक्त्वा सुखमवाप्नोति तन्निवेदनभोजनात् ॥
गुणत्रयादिरहितन्त्रिःशंखाम्बुपिबेत्ततः ॥ ३० ॥
सदाशिवोहमस्मीति तन्निर्णोदकपानकृत् ॥
एवमात्ममहालिंगपूजा ते कथिता शिव ॥ ३१ ॥
एवम्पूजयतोनित्यम्पूज्यपूजाविवर्जितः ॥
पूजकः पूज्यतामेति सदालिंगमयोभवेत् ॥ ३२ ॥

न पूजा न लिंगं न चोपासनादि
न वेदान्तधारारसास्वादनं हि ॥
मुक्तये भुक्तये हेतु शैलेन्द्रकन्ये
न वेदप्रचारोत्थधर्मैकजालैः ॥ ३३ ॥

शिवे मत्प्रसादैकलभ्यं किलेदं
न प्राणकोशं न विज्ञानकोशम् ॥
नचान्नादिकोशं नचाणुर्न दीर्घम्
न वद्धं न मुक्तं नचद्वैतमेकम् ॥ ३४ ॥

ईशस्वरं व्यापकं देशकालै-
र्विहीनमवस्थादिहीनन्त्वलिङ्गम् ॥
रसादिं गुणादिं गुणातीतमेकम्
चिदानन्दरूपं घनं चाप्यखण्डम् ॥ ३५ ॥
सदा खिण्डते यन्मनोवागतीतं
त्वनादिं च सूक्ष्मं सदा शुद्धबुध्यम् ॥
असङ्गं महाङ्गं सदा लिङ्गसङ्ग-
न्त्वलिंगं सतुंगं नभः स्वान्तरगम् ॥ ३६ ॥
जनानामसंगं न पुण्यं न पापं
न जन्मनाशौ न चिन्तार्तिमोहाः ॥
मे।हीनवादैशिकोनैव शिष्यो
न वेदेन वेदान्तवादैर्दुरापम् ॥ ३७ ॥
सहस्रहस्तं सहस्रोरुपादं
तदेवाधुना पाणिपादास्यहीनम् ॥
तथाऽगन्धमेकं रसैश्चापि हीन-
मस्पर्शकं घ्राणजिह्वादिहीनम् ॥ ३८ ॥
तुरीयन्त्वशीर्णं शरीरेषु नित्यं
विभुं सर्वदेहादिधर्मैर्विहीनम् ॥
तथात्मानमिष्टञ्जनिष्ठं च ज्येष्ठ-
न्तदेवाखिलैर्भोगजालैर्विहीनम् ॥ ३९ ॥
महानन्दसन्दोहधामैकसीमा
तदेवास्मि लिंगन्तदेवास्मि भूतम् ॥
तदेतद्धविष्ण शिवे वर्तमान-
न्तदेवाखिलाधारपुञ्छप्रतिष्टम् ॥ ४० ॥

तदेवाद्य ब्रह्म तदेव त्वमीशे
तदेवशिवत्वं सदा तत्वमस्मि ॥
अहं ब्रह्म चास्मीति वाक्यैर्दुरापं
तदेवायमात्मेति ब्रह्मेत्यहं वै ॥ ४१ ॥

सदा ब्रह्मभूतो भवेदेव ब्रह्म
तदूर्ध्वन्त्वधस्तात्तदेवान्तराले ॥
तदेवं च पश्चात्पुरस्तात्तदेव
तदेवाद्य लोकास्तथा लोकलोक्याः ॥ ४२ ॥

दिशोभूतवर्गन्तथा वेदजालं
सुराश्चासुराभूसुराभासुरन्तत् ॥
प्रतिष्ठं समस्तेषु निष्ठं विशिष्टम्
कनिष्ठं विशिष्टैश्च शिष्टैर्दुरापम् ॥ ४३ ॥

सदालोकनेत्रे ( शिर्षाचार्यविष्टं )
तदीय प्रसादेन वायुर्धरित्री ॥
तथा सूर्यचन्द्रादयोवन्हयश्च
विभात्यस्य भासैव लोकन्त्वशेषम् ॥ ४४ ॥

यदज्ञानतो नित्यमेतज्जडं च
यदुद्बोधनेनापि सर्वे विभान्ति ॥
यदालोकने सर्वमेतद्विपश्येत्
दृशा नैव रूपन्तदेतन्न दृश्यम् ॥ ४५॥

तथादर्शनं नाभिधाचापि गौरि
न तज्ज्ञानमज्ञानमेतद्विचित्रम् ॥
न सूक्ष्मं न च स्थूलमण्वादिहीनं
न तत्किं च केनापि परश्यं च जिघ्रयम् ॥ ४६ ॥
न च स्पर्शशब्दादिगन्धादिहीनं
तदेतत्सुराणां हृदिस्थं गुहास्थम् ॥
न हि प्राणवाचोमनस्तोपि दूरं
न च स्त्री न पौंस्नं नहि क्लीवमेतत् ॥ ४७ ॥
यदोक्तो न कार्यं न युक्तं न तद्धि
न वालं न यौनं न वृद्धं न दीर्घम् ॥
न च ह्रस्वदीर्घं न कृष्णं न पीतं
न वै वर्तुलं नैव तद्दै चतुष्कम् ॥ ४८ ॥
न चोर्ध्वं नचाधो न तद्विस्तरं हि
तदेवाद्यखण्डं न खण्डादिहीनम् ॥
समस्ताण्डगं विस्तृतं चाण्डतोपि
न चार्द्रं न शुष्कं घनं चापि देवि ॥ ४९ ॥
न किंचित्तदेवेह पश्यामि लिंगं
यतोब्रह्मविष्ण्विन्द्ररुद्राः प्रजाताः ॥
यतोवा महाभूतसंघानि देवि
अनेनैव जीवन्ति नित्यं सदा ते ॥ ५० ॥
जगज्जालमेतन्महालोकवर्गै-
स्तथान्ते लयं याति लिंगे तदेतत् ॥
विजिज्ञासब्रह्मेदमेतन्महेशि
येनैव सर्वेन्द्रियवृत्तयः किल ॥ ५१ ॥

अरूपं च चक्षुः परिपश्यते यत्
तदेव लिंगं विमलं प्रपश्य ॥
नानेव नास्ति परिदृश्यते तत्
यदेव वाक् सर्वरसाश्च वेत्ति ॥ ५२ ॥
रसातिगं श्रोत्रपरं च सर्वं
श्राव्यं शृणोतीदमेवाद्य लिंगम् ॥
यदेव चाघ्राति सुगन्धमेत-
त्तदेव लिंगम्परिपश्य देवि ॥ ५३ ॥
यत्रैव त्वक् स्पर्शमथैव वेत्ति
तदेव लिङ्गं मम देवि पश्य ॥
यदेव च प्राणिति प्राणिवर्गं
बुध्यादि यद्बोधयतेच्च लिङ्गम् ॥ ५४ ॥
* पाण्यंघ्रिपायुप्रजनादिकेषु
विसर्वजानं इचलं च धर्मं ॥
तल्लिंगमेतत्थि विजानते जनाः
सनोमनोयश्च तदेव लिंगम् ॥ ५५ ॥
यथैव नद्यः सरमाणाः समुद्रं
वेलातिगा नामरूपे विहाय ॥
तल्लिंगसन्दर्शनततोनरोभवेत्
नामातिगोरूपगुणातिगश्च ॥ ५६ ॥
तदेव लिंगन्ध्वनिवर्णमात्रा
कलातिगं चैव गुणातिगं च ॥
यदोमिति प्राणिवर्गं च वेदे
वेदान्तसंघे च वदन्त्यभीक्ष्णम् ॥ ५७ ॥

ईशानवास्यं हि तदेव लिंगं
पूर्णात्तथा पूर्णतरं हि पूर्णम् ॥
यच्चातमस्कं न दिवा न रात्रि-
र्न सच्च नासत्तदतीतलिंगम् ॥ ५८ ॥
तदक्षरन्तत्सवितुर्वरेण्यं
प्रज्ञा चास्मात्प्रसृता पुराणी ॥ ५९ ॥

भावग्राह्यमनीडन्तद्भावाभावकरं हि तत् ॥
कलासर्गगतं लिङ्गं ये विदुस्ते जहुस्तनुम् ॥ ६० ॥
स्वभावमेके वदन्तीशलिङ्गं
कालन्तथान्ये परिमुह्यमानाः ॥
लिङ्गस्यैषमहिमेति वीतशोका
ज्ञात्वा लिङ्गं शान्तिमत्यन्तमेति ॥ ६१ ॥
यस्मिंल्लिंगे अधिविश्वे निषेदुः
यस्मिन्निदं सर्वतः संचकास्ति ॥
यस्माद्भूर्भुवनस्य गोपाः
प्रजापतिर्भूतवर्गैककर्ता ॥ ६२ ॥

यल्लिंगमेतद्भुवनं विचक्रमे
तस्यांशतः पादमिदं हि विश्वम् ॥
अणोरणीयान्महतोमहीयां-
स्तदेव लिंगं निहितं गुहायाम् ॥ ६३॥
तदेव लिंगम्पश्यति वीतशोको
धातुः प्रसादान्महिमानमीशम् ॥ ६४ ॥

भिद्यते हृदयग्रंथिश्छिद्यन्ते सर्वसंशयाः ॥
कर्माणि तस्य नश्यन्ति लिंगे दृष्टे परावरे॥ ६५ ॥
तल्लिंगं ज्योतिषां ज्योतिश्चेतनानां च चेतनम् ॥
तत्रैव मोदः कः शोकस्तल्लिंगमनुपश्यतः ॥ ६६॥
तद्दर्शनविहीनानां विपदः स्युर्भवे भवे ॥
जन्ममृत्युजरादुःखैरभिभूताहि नित्यशः ॥ ६७ ॥

आनन्दन्तस्य लिंगस्य ज्ञात्वाबिभ्येन्नजातुचित् ॥
तल्लिङ्गदर्शनानन्दमात्रां जीवन्ति सर्वशः ॥ ६८ ॥
अपाणिपादन्तल्लिङ्गं जवीयोमनसोपि तत् ॥
स्थानकालातिगं यच्च कालत्रयविवर्जितम् ॥ ६९ ॥

तल्लिङ्गवेत्तातरति शोकमेतत्सनातनम् ॥
ज्ञेयं ज्ञानमथैवैकं लिङ्गमेतन्मनः स्थितम् ॥ ७० ॥
तद्ध्यातव्यन्ध्यातृहीनन्ध्येयध्यानादिवर्जितम् ॥
ज्ञानज्ञेयादिरहितं नामरूपविवर्जितम् ॥ ७१ ॥
अनन्तमहिमाधारमप्रतिष्ठितवैभवम् ॥
अज्ञातमेतल्लिङ्गङ्ख्रिरधीरः प्रपश्यति ॥ ७२ ॥

यल्लिङ्गं सर्वतो वक्त्रं ज्वालाजटिलिताखिलम् ॥
यदाचर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ॥ ७३ ॥
तदा तल्लिङ्गमज्ञात्वा दुःखस्यान्तो भविष्यति ॥
नान्तः प्रज्ञं हि तल्लिङ्गं नोभयप्रज्ञमेव च ॥ ७४ ॥
न बहिः प्रज्ञमीशानि भावग्राह्यं हि तद्विदुः ॥
अदृश्यं चैव तल्लिङ्गमग्राह्यन्तत्सदैव हि ॥ ७५ ॥

ऐकात्म्यप्रत्ययं लिङ्गम्प्रपंचोपरमं हि तत् ॥
तल्लिङ्गजाइमे लोकास्तल्लिङ्गे लीयतेखिलम् ॥ ७६॥
तल्लिङ्गे लयना द्देवि (तज्जलानि) तल्लिङ्गमिति ते जगुः
यद्वेदादौ स्थितं लिंगं वेदान्ते च प्रतिष्ठितम् ॥ ७७ ॥
लिंगप्रकृतयस्तेतु ब्रह्माविष्णुमहेश्वराः ॥
तद्ब्रह्म तच्छिवः साक्षात्तद्विष्णुस्तद्विराट् स्वराट् ॥ ७८॥
सम्राट् विश्वेशि तल्लिंगन्तत्दृश्यं सूक्ष्मदर्शिभिः ॥
हृदा पश्यन्ति तल्लिंगं मनसैव मनीषिणः ॥ ७९ ॥
श्रवणायासतोलिंगं न लभ्यम्बहुभिः शिवे ॥
शृण्वंतोपि शिवे लिंगं न विद्युर्बहवोपि यम् ॥ ८० ॥
आश्चर्यवत्पश्यति कश्चिदेतदाश्चर्यवच्छृणु ते तच्च लिंगम्॥
आश्चर्यवद्बोधयतेतथान्यआश्चर्यवत्पश्यनितच्च लिंगम् ८१
प्राणापानेन युक्तोपि लिंगहीनोन जीवति ॥ ८२ ॥
अजामेकां लोहितशुक्लकृष्णां
बह्वीं प्रजां जनयन्तीं सरूपाम् ॥
अजोलिंगी जुषमाणोनुशेते
जहात्येनां लिंगसंस्थामजोन्यः ॥ ८३ ॥
आत्मा तल्लिंगमरेद्रष्टव्यः श्रोतव्यो वेदपर्वतैः ॥
पुरिशयं च तल्लिंगं सर्वभूतेषु संस्थितम् ॥ ८४ ॥
कोह्यवान्याच्च कः प्राण्यालिंगहीनोमहेश्वरि ॥
रसोह्येष महालिंगं रसएषोम्बिके सदा ॥ ८५ ॥
एतद्धि परमानन्दं लिंगमेतत्स्वयं प्रभम् ॥ ८६ ॥

यस्मात्परं नापरमस्ति किंचि-
द्यस्मादणीयोनज्यायोऽस्ति कश्चित् ॥ ८७ ॥
दिवि वृक्षइव स्तब्धं लिंगमेकम्प्रतिष्ठितम् ॥
तेनेदम्पूर्णंलिंगेन स्वभासैव प्रकाश्यते ॥ ८८ ॥
लिंगाद्वाचोनिवर्तन्ते अप्राप्य मनसा सह ॥
सदत्यतिष्ठद्देवेशि ब्रह्माण्डोर्ध्वन्दशांगुलम् ॥ ८९ ॥
तस्मिन्भाति स्वयं लिङ्गं चन्द्रसूर्याग्नयो नहि ॥
भान्ति तत्तेजसा व्याप्तं जगदेतच्चराचरम् ॥ ९० ॥

यथा क्षेत्रनिहितं हि भूमौ
गुहाहितन्तच्च लिङ्गं महान्तम् ॥
हिरण्यं न विन्दन्ति उपर्य्चरन्त-
स्तथेदम्प्रपश्याम्बिके लिङ्गमतत् ॥ ९१ ॥
जाग्रत्सुषुप्तिस्वप्नेषु यल्लिङ्गं मनसाततम् ॥
एतच्चाहमिति ज्ञात्वा लिंगी लिगातिगो भवेत् ९२

यथोर्णनाभिः सृजते तन्तुजालं
गृण्हाति वक्त्रेण तथा च सर्वम् ॥
तथा जगज्जालमिदं हि लिंगतो
भवत्यथान्ते विलयं प्रयाति ॥ ९३ ॥

ब्रह्मैव तल्लिंगमिदं सनातनं
स्वाविद्यया संसरते च मुच्यते ॥
तदेतल्लिंगन्तपसा वेदितव्यं
नान्यैर्धर्मैस्तच्च लिंगन्त्वलिंगम् ॥ ९४ ॥

तदेव लिंगन्त्वविमुक्ते निविष्टं
भूतातिगं विश्वनाथाभिधं च ॥
वाराणस्यां भ्रूयुगे सन्निविष्टं
योगैः प्रपश्यन्ति नचोत्क्रमन्ति ॥ ९५ ॥

तत्रैव तेषान्तारकं चोपदेश्य-
मोङ्कारमाद्यम्प्रणवम्ब्रह्ममंत्रम् ॥
न तस्य प्राणाउत्क्रमन्तीह देवि
तल्लिंगसंगाद्भवति ह्यलिंगः ॥ ९६ ॥
तत्राविमुक्ते चोपास्यन्तल्लिंगं महिमातिगम् ॥
तत्राशक्तस्य देवेशि भौतिकन्त्वविमुक्तिदम् ॥ ९७ ॥

न दृश्यं चक्षुषा मर्त्यैः क्रमात्तन्मुक्तिदायकम् ॥
तस्मिन्नेके तते लिंगे विज्ञाते न भवद्भयम् ॥ ९८ ॥

तत्परोवेद तल्लिंगमस्ति ब्रह्मेति वाक्यतः ॥
तदेतद्ब्रह्मपरममात्मालिंगं सनातनम् ॥ ९९ ॥
वेदाद्यत्रैव वेदान्तैर्निवृत्तास्तत्र लिंगके ॥
हृत्पुण्डरीके विरजन्तल्लिंगम्भासतेनिशम् ॥ १०० ॥

विचक्ष्व चैव तल्लिंगं सर्वव्यापि निरामयम् ॥
आनन्दघनमद्वैतं चतुर्थन्तमसः परम् ॥ १०१ ॥
दहराद्विस्तरन्तच्च सूर्यमण्डलमण्डितम् ॥
चंद्रकोटिसहस्राभं तल्दृश्यं सर्वथा शिवे ॥ १०२ ॥
योगेनात्मानुसन्धानैर्वीतमोहभयैः सदा ॥ १०३ ॥

वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगेर्यतयः शुद्धबुद्धाः ॥
ते यान्त्यवेतद्विजर लिङ्गधाम
यत्प्राप्यसद्यो विदूरं शिवेच ॥ १०४ ॥

नेषा तर्केण मतिरपनेया
क्षुरोपमं लिङ्गमेतत्धि सत्यम् ॥
ऋचो अक्षरे परमेतत्प्रतिष्ठ
सर्गादिहीनं महाल्लिङ्गमेतत् ॥ १०५ ॥
सुराद्यैर्दुरापन्तथा योगिभिश्च
मनस्विभिः कर्मिभिश्चाप्यपश्यन् ॥
तल्लिङ्गविज्ञानमहो न सर्वथा
भवत्यवश्यं श्रुतिगुह्यमेतत् ॥ १०६ ॥
योनाविरतोदुश्चरितान्नाशान्तो नासमाहितः ॥
तस्यैतद्दुर्लभं लिङ्गमन्धस्येव प्रसर्पणम् ॥ १०७॥

येषां जिह्वा वक्त्यनृतं सदैव
तेषां लिङ्गं हृदि नाप्नोति शान्तम् ॥
अतो लिङ्गम्पूजयेदाप्तकामो
न कामकामी लिंगपूजाधिकारी ॥ १०८ ॥
एनमर्थं गूढतमं महेशि
नान्ये विदन्ति ज्ञानिनश्चापि भूयः ॥
नवा देशिको नैव शिष्यः कदाच-
न्न पूजा न पूज्यो न वा पूजकश्च ॥ १०९ ॥

※ स्वन्दोषात्प्रदोषोपि नास्त्येव लिंगे
जनश्चैव शर्वे विशेषाद्भवानि ॥
महाशेषभूयाविशेषोपि नात्र
सदोषाकरापारमौलिर्न चैव ॥ ११० ॥

इति श्रीशिवरहस्ये प्रथमांशे शिवगौरीसंवादे उपनिषल्लिङ्गकथनं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

॥ ईश्वरउवाच ॥

शृणु वक्ष्यामि ते देवि हितमात्यन्तिकं शिवे ॥
यत्प्रोक्तम्पूजनन्देवि सुराणान्त्वदृणी सदा ॥ १ ॥
सा पूजानन्तफलदा जन्मकर्मप्रणाशिनी ॥
संविदेव परा पूजा सातु तस्यां मनोलयः ॥ २ ॥
साधारणानां सा पूजा अव्यक्तातीव दुर्घटा ॥
मत्प्रसादेन देवेशि पचेलिम तपः फलैः ॥ ३ ॥
योगैश्च तपसा चैव महापुण्यकदम्बकैः ॥
भस्मनिष्ठस्य सततं रुद्रावर्तनशीलिनः ॥ ४ ॥

भस्मत्रिपुण्ड्रयुक्तस्य सदा रुद्राक्षधारिणः ॥
पंचाक्षरपरस्यार सदा लिंगार्चकस्य च ॥ ५ ॥
विल्वपत्रैर्महादेवि प्रदोषे पूजकस्य माम् ॥
नक्ताशनार्चनध्यानचतुर्दश्यष्टमीषु च ॥ ६ ॥

सोमवारव्रताचारयुक्तस्य नियतस्य च ॥
मुक्तिक्षेत्रवासिनो देवि अविमुक्तस्य च ॥ ७ ॥
विश्वेश्वरार्चकस्यास्य सुरस्य च नरस्य च ॥
तथा महालये पुण्ये रुद्रकोटौ महेश्वरि ॥ ८ ॥

कालंजरे प्रभासेपि पुष्करेमरकण्टके ॥
पिण्डारके कुरुक्षेत्रे महाकाले महेश्वरे ॥ ९ ॥
देवदारुवने पुण्ये नैमिश चित्रकूटके ॥
केदारे कामदे पुण्ये वैद्यनाथे महेश्वरि ॥ १० ॥
त्रिशैले च महादेवि तथा वेणुवने शिवे ॥
अवटके सोमनाथे गोकर्णे त्र्यम्बके गिरौ ॥ ११ ॥

श्रीमद्दक्षिणकैलासे तथैकाम्रवने मम ॥
विन्ध्याद्रावरुणाद्रौ च तथा गोपर्वते शिवे ॥ १२ ॥
हृत्पुण्डरीके गूढे च जप्येशे श्वेतकानने ॥
गजारण्ये रत्नगिरौ श्रीकण्ठे मातृपर्वते ॥ १३ ॥
कोटिकायां मंगले च पुण्ये द्रुतिवने शिवे ॥
कुम्भकोणेर्जुने चैव श्रीसुन्दरगिरौ तथा ॥ १४ ॥

माधवी तंजिनी देवी क्षीरिणीकानने तथा ॥
शमीवने बिल्ववने घटेश ब्रह्मकानने ॥ १५ ॥
वायवीये च श्रीवांच्छे तथा वेदवने शिवे ॥
वल्मीके वीतपुर्यां च सेतौ वै गन्धमादने ॥ १६॥
हालास्ये शाल्मिकवने गजशाले महेन्द्रके ॥
वसतः पुण्यशीलस्य नक्ताशनरतस्य च ॥ १७ ॥

संवत्सरन्दशाब्दं वा भस्मनोत्धूलितस्य च ॥
युक्तस्य भार्यानिर्वहैर्ज्ञानन्तल्लभ्यते मम ॥ १८ ॥
बहुजन्मादिभिर्देवि मत्प्रसादयुतस्य च ॥
वैराग्यभक्तियुक्तस्य आत्मलिंगार्चने मतिः ॥ १९ ॥
जायते जन्मनाशाय नृणामत्यन्तदुर्लभा ॥
नानाचारविहाराणां विषयासक्तचेतसाम् ॥ २० ॥
वांछा न जायते देवि कस्यचित्क्वचिदेव हि ॥
बहुजन्मसहस्रेषु तिर्यक्स्थावरजंगमैः ॥ २१ ॥
जन्मभिः पुण्यनिचयैर्युक्तस्य पुरुषस्य च ॥
मत्प्रसादेन विज्ञानं जायते नान्यथा शिवे ॥ २२ ॥
मत्ध्यानधारणायोग युक्तस्य निरतस्य च ॥
अथर्वशिरसोध्यायाशिवाजपयतस्य च ॥ २३ ॥
जाबालश्रुतिनिष्ठस्य शांभवस्य विशेषतः
कैवल्यकालरुद्रादिजापिनोब्राह्मणस्य च ॥ २४ ॥
रुद्रावर्तनशीलस्य भस्मनिष्ठस्य मे सदा ॥
ज्ञानं विजायते देवि कस्यचिच्छिवयोगिनः ॥२५॥
यततामपि शैवानां कश्चिन्मां वेत्ति तत्वतः ॥
मज्ज्ञानसाधनन्देवि नृणामत्यन्तदुर्लभम् ॥ २६ ॥
मां ध्यायेद्धृदयाकारपद्मसंस्थं चतुर्भुजम् ॥
मृगटंकधरं सौम्यं सच्चिदानन्दविग्रहम् ॥ २७ ॥
शुध्दकर्पूरसाराच्छकुन्देन्दुधवलप्रभम् ॥
मकुटोद्भासिचन्द्राङ्कगङ्गामलकपर्दकम् ॥ २८ ॥
भुजङ्गराजवलयं महार्हमणिभूषणम् ॥
दिव्यानेकमणिव्रातचित्रसिंहासनस्थितम् ॥ २९ ॥

त्रिनत्त्रं नीलकण्ठं च इन्दुधामसमाननम् ॥
उमयासहितन्ध्यायेत्क्षणं वाथ क्षणार्धकम् ॥ ३० ॥
सोहमीशः शिव साक्षादेकोनानात्वमास्थितः ॥
अहं रुद्रोनलोवायुर्यमोहं वरुणोर्यमा ॥ ३१॥

चन्द्रेः कुबरोमरुतअश्विनौ वसवोर्ककाः ॥
स्कन्दोविघ्नेश्वरश्चैव नन्दिकेशादयोगणाः ॥ ३२ ॥
सर्वेषां जनिताचाहं मत्तएवायानिर्गताः ॥
मयैव विधये दत्ता वेदाः सर्वे सनातनाः ॥ ३३ ॥

मयैव विष्णवे दत्तं सहस्रारं सुदर्शनम् ॥
अहमेवेति विज्ञाय ध्यायेन्मद्रूपमैश्वरम् ॥ ३४ ॥
एवं हि ध्यायतान्देवि मज्ज्ञानं जायते नृणाम् ॥
अथवा देवमीशानं मान्ध्यायेत्सूर्यमण्डले ॥ ३५ ॥
हिरण्यकेशमाशास्यं हिरण्यश्मश्रुमीश्वरम् ॥
हिरण्यवर्णन्देवेशि अम्बिकापतिमीश्वरम् ॥ ३६ ॥
सर्वग्रन्थिविमोक्षाय तज्ज्ञानं जायते नृणाम् ॥
योगेन वापि नियमयमासनयुतस्य च ॥ ३७ ॥

पूरके पूरयेद्वायुं रेचकेणाथ रेचयेत् ॥
कुंभके कुंभयेत्धीमान्धारयेद्घटिकात्रयम् ॥ ३८ ॥
योगाग्निदग्धकायोत्थमलस्यामलचेतसः ॥
नीहारधूमविद्युत्स्यत्स्फटिकोज्वलदीपवत् ॥ ३९ ॥
जोतिर्विभासते देवि हृदिपूरितवायुभिः ॥
प्राणायामेन सततं तनीयाग्निशिखेव हि ॥ ४०॥

सोहं ज्योतिर्महानात्माथसङ्गः पुरुषः शिवे ॥
आपादमस्तकन्देहं व्याप्यसर्वेष्ववस्थितः ॥ ४१ ॥
योमां योगेन जानाति स्वात्मारामं महेश्वरम् ॥
तस्य सिध्यन्ति नियतं सिध्दयोष्टौ महेश्वरि ॥ ४२॥

तस्य मूर्ध्नि महानात्मा सहस्रदलपङ्कजे ॥
गोस्तनाकारवद्धाराअमृतैकरसस्रवा ॥ ४३ ॥
व्यपोह्यन्तकपालन्तु इडया सन्ततं स्रवेत् ॥
पिङ्गलाकुण्डलीमध्यात्पतन्ती शशिमस्तके ॥ ४४ ॥
वैश्वानरोयं सर्वेषु मद्रूपोदेहिषु स्थितः ॥
तत्र चन्द्रामृताकैंश्च पिङ्गलायां महेश्वरि ॥ ४५ ॥

स आत्मा ज्योतिरानन्दो नित्यमुक्तो महेश्वरः ॥
सदाक्रीडन्नभोमध्यन्दहराकाशगः सदा ॥ ४६ ॥
चेतयामीन्द्रियगणवाचा च मनसासह ॥
परापश्यावेखरी च प्रणवादिरहस्त्वहम् ॥ ४७ ॥
सोहमायसर्वान्तः पुरुषोहम्पुरिशयः ॥
अलिङ्गोस्म्यहमात्मा च सुरतिर्यङ्नरेषु च ॥ ४८ ॥

नामरूपातिगः साक्षादहङ्कारविवर्जितः ॥
रंग्यतः कनकर्माणि विषया वैषयिकं सुखम् ॥४९ ॥
षोडशा मे कला देवि एकोजानामि सर्वशः ॥
ताः सर्वापि कलादेवि मयि द्योतन्ति सर्वशः ॥ ५०॥
मनोयोत्था रसोवेत्ता ज्ञाता विज्ञानईश्वरः ॥
श्रुतेः श्रोता तथा घ्राता दृक्द्रष्टिश्चाहमेव हि ॥ ५१॥

यथा कूर्ममहाग्रीवान्ह्रस्वदीर्घां भवेच्छिरे ॥
यथा नद्यः स्पन्दमाना नामरूपगुणान्विताः ॥ ५२ ॥
समुद्रेस्तं प्रयान्तीशे यथास्ते भानुदीप्तयः ॥
पुनर्यथोदयं प्राप्ते सूर्यस्यैव मरीचयः ॥ ५३ ॥
प्रसरान्ति महादेवि तथा मत्सन्निधौ जगत् ॥
पद्मामित्रकरैर्यद्वद्विकसत्यब्जिनीकुलम् ॥ ५४ ॥
यथा मणिजसान्निध्याच्चेष्टन्ते लोहसूचयः ॥
कालकर्मविपाकेन तथैव मम सन्निधौ ॥ ५५ ॥
सृजाम्यात्मानमेवाथे ततोनानाविधं जगत् ॥
चेष्टते नितरान्देवि स्थितिसंहारजन्मतः ॥ ५६ ॥
सोहं सृष्ट्वा प्रविश्यैव तन्नामगुणरूपतः ॥
ब्रह्मविष्णुहराख्याभिर्यथा पूर्वयुगे युगे ॥ ५७ ॥
यथाग्नेर्विस्फुलिङ्गौघः क्षुद्रः संभवति प्रिय ॥
रुद्रो मित्रोथ वरुणः पूषा सूर्योहमेव हि ॥ ५८ ॥
मनवः पितरो विप्रा जलन्ताराग्रहास्तथा ॥
स्थावरं जंगमं चैतदहमेव सनातनः ॥ ५९ ॥
सर्वः सर्वशरीरेषु सर्वेन्द्रियगुणातिगः ॥
सर्वभोक्ताहमेवास्मि सर्वकार्यकृदास्वरः ॥ ६० ॥
नाहन्तज्जन्ममरणस्थितिसर्गेष्वपञ्जकः ॥
अमलो नैव लिप्तोस्मि सर्ववाह्योन्तरास्त्वहम् ॥६१
एकस्तथान्तरः सर्वदुःखहीनोस्मि शाङ्करि ॥
एवं मां यो विजानाति मोहंसे मोदतेतराम् ६२

तस्याहं न प्रणश्यामि स च मेन प्रणश्यति ॥
योगसांख्यौ मया देवि तौ प्रोक्तौ मम ज्ञानदौ॥६३
सर्वसाधारणन्देवि कथञ्चिद्ध्येप्युपासनम् ॥
अलिङ्गोस्म्यहमीशानो लिङ्गे तिष्ठामि सर्वदा ६४
यथा गविगतं क्षीरं विषाणादौ न दृश्यते ॥
ऊर्ध्वपुंड्रे न दृश्येत तथाहं सर्वचास्यपि ॥ ६५ ॥
हृदि ध्यातुमशक्तानां ज्ञानयोगेन वै शिवे ॥
लिङ्गे कृताम्पराम्पूजां शाम्भवैर्भस्मधारिभिः ॥६६॥
मत्पुण्ड्रनिरतैरेव रुद्राक्षवरकङ्कणैः ॥
रुद्राध्यायाध्ययनतः पंचाक्षरजपेन च ॥ ६७ ॥
एकं वा बिल्वपत्रं यैर्निक्षिप्तं मम मस्तके ॥
भक्तैर्गृण्हामि तद्देवि तस्मै ज्ञानन्ददामि च ॥ ६८॥
मज्ज्ञानभाजनं कुर्यां प्रतिज्ञा मम शांकरि ॥
नान्यवर्णाश्रमाचारैर्विविधैरपि मे शिवे ॥ ६९ ॥
नैव तुष्टिर्मम परा जायते कर्मकोटिभिः ॥
※ न षोडश महादानैरेकाह्नहीनसत्रकैः ॥ ७० ॥
प्रपावापीप्रदानैर्वा कन्यास्वादिप्रदानतः ॥
कथंचिन्नैव देवेशि यदर्चायां मतिर्भवेत् ॥ ७१ ॥
पुण्ड्रान्तरेषु विप्रेषु मस्करीणाङ्गणेषु च ॥
नैव प्रीतिर्महादेवि यथा मत्पुण्ड्रधारिषु ॥ ७२ ॥
भस्मधार्येव सततं मज्ज्ञानस्यैव भाजनम् ॥
शिवलिंगार्चनध्यानरुद्राध्यायजपादरः ॥ ७३ ॥

पंचाक्षरजपी चैव मम क्षेत्रनिवासकः ॥
भस्मत्रिपुण्ड्राद्यैवाधिकारी नान्य उच्यते ॥ ७४ ॥
उर्ध्वपुण्ड्रं भ्रमेणापि न कुर्यान्मोहतो द्विजः ॥
प्रत्युत नरकायैव तस्य सर्वमनुष्ठितम् ॥ ७५ ॥
यदि कुर्यात्प्रमादेन पितृभिः सपतेदधः ॥
उर्ध्वपुण्ड्राङ्कितन्दृष्ट्वा मीलयाम्यचलोचने ॥ ७६ ॥
मत्प्रसादालोकनेन तज्ज्ञानं जायते शिवे ॥
मन्निमीलनतो देवि कथं ज्ञानं भविष्यति ॥ ७७ ॥
लिंगकैलासमौलौ मे कैलासेश्वरसंज्ञितम् ॥
देवतिर्यङ्मनुष्याद्यैरदृश्यमपि कामदम् ॥ ७८ ॥
स्मरणादेव सान्निध्यं यत्र कुत्रापि सिद्धिदम् ॥
एतल्लिङ्गस्य महिमा वेदैर्न ज्ञातएव हि ॥७९॥

सुरासुरैश्च मुनिभिर्गणेन्द्रैरपि शंकरि ॥
कैलासेश्वरसंज्ञं तु लिंगं मुक्तिप्रदायकम् ॥ ८० ॥
लिंगराजमिदन्देवि ब्रह्मैवेदं सनातनम् ॥
ममैव हृदयानन्ददायकं स्वर्गमोक्षदम् ॥ ८१ ॥
संसारसागरापारतारकं भवभेषजम् ॥
वेदान्तसारसर्वस्वमेतल्लिंगवरं शिवे ॥ ८२ ॥
न कस्यचिन्मयाख्यातं नाख्येयं यस्य कस्यचित् ॥
एतल्लिंगप्रभावेण जगत्सृष्टिं वितन्वते ॥ ८३ ॥
विधातारः सर्व एव कल्पे कल्पे स्वसूनुभिः ॥
देवतिर्यङ्नराकारां सपर्वतनदीवनाम् ॥ ८४ ॥

लोकालोकयांश्च देवेशि विभाताद्यतनेपि च ॥
विष्णवः प्रतिकल्प वै एतल्लिंगप्रभावतः ॥ ८५ ॥
दैत्येश्वरान्निहन्त्यज्ञो महाबलपराक्रमाः ॥
वैकुण्ठवासिनः सर्वे ते लक्ष्मीपतयः शिवे ॥ ८६ ॥
प्रतिकल्पन्तथा रुद्रास्ते गौर्याः पतयोंबिके ॥
एतल्लिंगप्रभावेण प्रलये संहरन्त्यपि ॥ ८७ ॥
जगज्जालन्तथा शूलैर्वृकगं लासुरमानुषम् ॥
सेन्द्राश्च मनवश्चैव ऋषिभिः पितृभिः शिवे ॥ ८८ ॥
एतल्लिंगे लयं यान्ति प्रतिकल्पं सुरासुराः ॥
※ जगद्दस्ताण्डजालैश्च सर्वाधारमिदं शिवे ॥ ८९ ॥
रूपं संकोच्य मे दिव्यं महान्ते प्रलये शिवे ॥
त्वया गणवरैर्देवि स्कन्दहेरम्बपूर्वकैः ॥ ९० ॥
निवसामि सदा लिंगे कैलासेश्वरसंज्ञिते ॥
अलिंगोलिंगसंस्थोहं सृजामि विसृजामि च ॥ ९१
जगज्जालमिदन्देवि ब्रह्मविष्ण्वाशपूर्वकम् ॥
संहरामि तथैवान्ते लीलयं मम शंकरि ॥ ९२ ॥
आत्मक्रीडआत्मरतिः सृष्टिस्थित्यन्तकारकः ॥
कारणं कारणानां च पतीनाम्पतिरीश्वरः ॥ ९३ ॥
चेतनं चेतनानां च नित्योहम्परमेश्वरि ॥
अकारणोहं करणाधिपाधिपो
मे नैव कश्चिज्जनको महेश्वरि॥
तान्यात्मयुक्तान्यधितिष्ठामि ईशो
गुणी सर्वः सर्वभूताधिवासः ॥ ९४ ॥

॥ईश्वरउवाच॥

एतत्ते कथितन्देवि रहस्यार्थप्रकाशकम् ॥
नादेयं गुह्यमप्येतद्भक्तेषु प्रतिपादय ॥ ९५ ॥

रहस्यांशमिदं शैवमादिमम्परमेश्वरि ॥
गुह्यज्ञानमिदं सुभ्रुरहस्यज्ञानसंग्रहम् ॥ ९६ ॥
न प्रकाश्यमिदं भद्रे कस्यचित्वेलयाम्बिके ॥
इदं रहस्यं वेशानामनन्तानां सनातनम् ॥ ९७ ॥

देवादीनां मुनीनां च गणानां च प्रकाशितम्॥
तव हार्देन देवेशि रहस्यं कथितं मया ॥ ९८ ॥
हृदि धार्यं सदा देवि गोप्याद्गोप्यमनुत्तमम् ॥
प्रथमः शिवरत्नाब्धिरहस्यस्यांश उत्तमः ॥ ९९ ॥

कर्णभूषामणिस्तेद्य कथितोस्ति सुगोप्यताम् ॥
सत्यं सत्यम्पुनः सत्यमुत्धृत्य भुजमुच्यते ॥ १००॥

॥ स्कन्दउवाच ॥

इत्युक्त्वा गिरिजान्देवः समालिंग्य महेश्वरः ॥
कैलासमौलौ शिवया विजहार यथासुखम् ॥१०१॥

॥ देव्युवाच ॥

वस्त्राधौतविधौ सहस्रकरता पुष्पार्पणे विष्णुता
गन्धे गन्धवहात्मतान्नपचने वार्हिर्मुखाध्यक्षता॥
पात्रे कांचनगर्भतास्तु भगवन् कारुण्यवारांनिधे
शुश्रूषांकरवाणिते पशुपते स्वामिन् त्रिलोकीगुरो१०२

॥ मुनयऊचुः ॥

पट्वक्त्रामलसंपदोघजननीः शंभोः कथाः पावनी
स्संश्राव्य प्रवणादयारसभरैः संसारभाराल्लसाः ॥
शान्तस्यास्य मुनेः समागमवशात्प्राशाविमुक्तेः फलं
किं चित्रं भगवन् त्रिनेत्रजकथासारैः पवित्रावयम् ११३

॥ गणाऊचुः ॥

अस्माभिः कलितेन्दुमौलिचरणध्यानार्चनैस्त्वन्मुखा
दाश्राव्योत्कटभक्तिभावलुरसा. शंभोकथाः पावनीः ॥
नो कैलासनिवाससौख्यधुरिमागण्यो न किंचित्प्रभो
त्वद्वक्त्रामलदर्शनेन सुतरान्तृप्यामहे केवलम् ॥ ११४ ॥

स्कन्द त्वद्वक्त्रपद्मामलमधुझरिभिः क्षावितास्मो मुनीन्द्राः
शैवेन्द्रावारणेंद्रोत्तमत्वचि विहितापारवृत्तैः कथाभिः ॥
शंभोः पुंभावमुक्त्यै कलितकलिमलास्फारमायज्ञनाघ
ध्वान्तभ्रान्त्युत्थदावप्रशमनदुरितागाधदुःखापनुत्यै ११५

॥ विष्णुब्रह्मेश्वराऊचुः ॥

सृष्टिस्थित्यन्तकार्यैः सततपरिचितापारदुःखेषु मग्ना
नित्यं कर्मजपापतापमनसो जन्मादिदुःखास्पदाः ॥
श्रान्ताः प्राप्य भवन्मुखांवुरुहतः शैवं रहस्यं परं
सन्तृप्ताश्च ततोवशिष्टमधुना भुक्तेःकिमन्यात्त्वि नः ११६

॥ सूतउवाच ॥

सन्तुष्टुवुः कुमारन्ते गणाः सुरमुनीश्वराः ॥
प्रणम्य मुदिताः सर्वे शृणुश्वन्तस्तुतिं द्विजाः ११७

॥ मुनिदेवगणाऊचुः ॥

शरणातुरमातुरमवालिंगाधिपते
करुणाकर कामद कामहत ॥
शरकाननसंभवचारुरुचे
परिपालय तारकमारक नः ॥ ११८ ॥

हरसारसमुद्भव हैमवतीकर-
पल्लवलालित कान्ततनो ॥
पुरवैरिमुकुन्दहृदम्बुनिधे
परिपालय तारकमारक नः ॥ ११९ ॥

शरदिन्दुसमानषडाननपंकज
सरसीरुहलोचन पावितलोकत्रय ॥
निरुपाधिक नोयोनिजबालक
परिपालय तारकमारक नः ॥ १२० ॥

गिरिजासुत सायकभिन्नगिरे
सुरसिन्धुतनूज सुवर्णरुचे ॥
शिवजात शिखावलवाहगते
परिपालय तारकमारक नः॥ १२१ ॥

जय विप्रजनप्रिय वीर नमो
जय भक्तपरायण भद्र नमः ॥
जय शाखविशाखकुमार नमः
परिपालय तारकमारक नः ॥ १२२ ॥

पुरतो भव मे परितो भव मे
पथि मे भगवन् भव रक्ष गतम् ॥
चितराग्निषु मे विभयं भगवन्
परिपालय तारकमारक नः ॥ १२३ ॥
इति कुक्कुटकेतुमनुस्मरतां
पठतामपि षण्मुख षट् पट् पदकं॥
नमतामभिनंदनमिन्दुभृतो
न भयं क्वचिदस्ति शरीरभृताम् ॥ १२४ ॥

॥ सूतउवाच ॥

अयं स्थाणुर्वेणुव्रतति कुसुमौघोजगदिदं
महाभानुश्चायन्तुहिनगिरिराट्रूतश्चहितकृत् ॥
हिमांशोस्वर्भानुर्भगवति जनानां च हि मुदे
समीचीने नेदुर्दिवि विततचित्रावसतयः ॥ १२५ ॥
पायादायासखेदक्षुभितफणिफणारत्ननिर्यच्छटाच्छ
छायामोघापतङ्गद्युतिमुदितवियद्वाहिनीचक्रवालम् ॥
भ्राम्यच्चूडातुहिनकिरणं पुष्करोद्भूतमाल
स्छेनायेवानुधावद्द्रुहिणरथवरं धूर्जटेस्ताण्डवं मे ॥१२६ ।
जाते पादाभिघाते चलितमहितले सव्यथे भोगिनाथे
साक्रन्दे दन्तिवृन्दे विलुठति कमठे चंचले शैलजाले ॥
नादोन्निद्रे समुद्रे नदरमणसुतानायकेजागरूके
साश्चर्यत्रासधुर्यं त्रिभुवनमवतात् धूर्जटेस्ताण्डवन्नत् १२'

इति श्रीशिवरहस्ये प्रथमांशे स्कंदस्तुर्ना-
म षष्टितमोध्यायः ॥ ६० ॥
॥ इति श्रीशिवरहस्ये प्रथमांशः संपूर्णः